ॐ नमोऽर्हद्भ्यः

स्वोपज्ञार्थप्रकाशिकाव्याख्योपेता

# जैनसिद्धान्तकौमुदी

## ( अर्द्धमागधीव्याकरणम् )


रचयिता

भारतभूषण शतावधानी पण्डितवर्य जैनमुनि

श्री १००८ रत्नचन्द्र जी महाराज



प्रकाशक

मेहरचन्द्र लक्ष्मणदास

संस्कृत हिन्दी पुस्तक विक्रेता

सैदमिट्ठा बाजार, लाहौर

वृत्तिः ] वि० सं० १९९४ वीरनिर्वाण २४६३ [ मूल्यम् १०)

# समर्पणम्



सकलमुनिमण्डलमुकुटायमान ! प्रवराचार्यगुणगणालङ्कृत ! जैन-
शासनप्रभावक ! लिम्बडीसम्प्रदायनायक ! पूज्यपादश्रीगुलाब-
चन्द्रजित्स्वामिन् ! शिष्यसौहार्दविद्यार्थिवात्सल्यविनेयजन-
शिक्षापाटवादिगुणैर्मम विद्यासम्पादनकार्ये ग्रन्थनिर्माण-
कार्ये च यत्साहाय्यं दत्तं श्रीमद्भिस्तत्प्रत्युपकारं
कर्तुमसमर्थोऽप्यहं पुष्पाभावे पुष्पकलिका-
दानन्यायेन भवदीयकृपासम्पादितं स्वोपज्ञ-
टीकायुतमेतज्जैनसिद्धान्तकौमुदीनामकं
पुस्तकं भवच्चरणारविन्दे समर्पयन्न-
पूर्वमाह्लादसन्दोहमनुभवामि

भवच्चरणरजःसेवको

मुनिरत्नचन्द्रः

# उपोद्घातः ।

नयप्रमाणाङ्कितगूढतत्त्वस दर्भगर्भितजैनप्रवचनप्रतिपादितार्थजिज्ञासावतां तज्ज्ञानसंपादनाय प्रवचनभाषाज्ञानसम्पादनमावश्यकम् । तज्ज्ञानं च तद्भाषाया व्याकरणं विना यथावदशक्यम् । यद्यपि जनतोपकाराय पूर्वाचार्यैः प्रवचनप्रचारार्थं प्राकृतसंस्कृतगुर्जरभाषासु भाष्यनिर्युक्त्यवचूरिटीकाबालावबोधा निर्मिता । तानि च साधनानि प्रबोधयन्ति प्रवचनानि प्राकृतजनास्तथापि यद्भाषाया वस्तुस्वरूपं प्रतिपादितं तत्स्वरूपं तद्भाषाया यथा ज्ञायते न तथा भाषान्तरेषु । तत प्रवचनभाषाया व्याकरणस्यावश्यकता प्रतीयते ।

ननु सन्ति बहून्येव व्याकरणानि । तथाहि—(१) चण्डस्य प्राकृतलक्षणं (२) वररुचेः प्राकृतप्रकाशः (३) हेमचन्द्रस्य सिद्धहैमसंज्ञकाष्टमाध्याय (४) हृषीकेशनिर्मितप्राकृतव्याकरणं (५) त्रिविक्रमलक्ष्मीधरसिंहराजैर्विरचितानि वाल्मीकिसूत्रवृत्तिरूपाणि त्रिविक्रमषड्भाषाचन्द्रिका प्राकृतरूपावताराभिधव्याकरणानि (६) वसन्तराजस्य प्राकृतसञ्जीवनी (७) मार्कण्डेयस्य प्राकृतसर्वस्वं (८) भामहस्य षड्भाषाचन्द्रिका (९) दुर्गणाचार्यस्य षड्भाषारूपमालिका (१०) षड्भाषामञ्जरी (११) षड्भाषासुबन्तादर्श (१२) षड्भाषाविचार (१३) शेषकृष्णस्य प्राकृतचन्द्रिका (१४) अप्पयदीक्षितस्य प्राकृतमणिदीप (१५) पाणिनिकृतप्राकृतलक्षणं (१६) प्राकृतमञ्जरी पद्यमयी। एतेषु कानिचिन्मुद्रितानि, कानिचिदमुद्रितानि, कानिचिदेकभाषालक्षणप्रतिपादकानि, कानिचिदनेकभाषालक्षणनिरूपकाणि, सर्वेष्वपि मुख्यतया प्राकृतभाषालक्षणनिरूपणमस्ति । तथा चैतेषु व्याकरणेषु सत्सु किमर्थं नव्यव्याकरणरचनाप्रयास ? इति चेदुच्यते-एतानि प्राकृतव्याकरणानि प्रायो महाराष्ट्रीप्राकृतभाषाया एव लक्षणानि निरूपयन्ति न तु जैनप्रवचनभाषाया । प्राकृतलक्षणकारं चण्डं विहायान्येषां व्याकरणकाराणां समये महाराष्ट्रीप्राकृतभाषाया एव प्राधान्येन स्वीकृतत्वात् । यदुक्तं दण्डिना काव्यादर्शे—"महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदु" (१-३५) इति । तथा च प्राय सर्वैरपि महाराष्ट्रीप्राकृतभाषाया मुख्यत्वमङ्गीकृत्य व्याकरणरचना कृता। केवलं चण्डकृतप्राकृतलक्षणे काचित्प्राचीनता विशेषश्च प्रतीयते । तद्व्याकरणमन्यापेक्षयाऽधिकतरं प्रवचनभाषामनुसरति, तथापि तदतीव न्यूनं विभक्तिविधानस्वरविधानव्यञ्जनविधाननामप्रकरणत्रयमात्रप्रदर्शितनवनवतिसूत्रैरेव समाप्तिं गतं कारकसमासतद्धितधात्वादीनां तु तत्र किञ्चिदपि विधानं नास्ति । हेमचन्द्रसूरिणा यद्यपि वररुचिनिर्मितप्राकृतप्रकाशगतमहाराष्ट्र्यपेक्षयाऽऽद्यनकारस्य विकल्पेन नकारावस्थानविधानेनाकारात्परस्योद्वृत्ताकारस्य यश्रुतिविधानेन च प्रवचनभाषानुसारी कश्चिद्विशेषो निरदर्शि । विशेषमेनमनुलक्ष्यैव केचित्पाश्चात्त्या विद्वांस एनां जैनमहाराष्ट्रीं कथयन्ति तथापि सा प्रवचनभाषात्वं नापन्ना प्रवचनप्रयोगाणां केषाञ्चित्तत्र निदर्शनेऽपि आर्षप्रयोगा अनियन्त्रिता इति मत्वा सूरीश्वरेण तेषामुपेक्षा कृता न तेषां सर्वेषां लक्षणानि विरचितानि । बौद्धसाहित्ये मूलमपि पालीभाषायां सटीकाऽपि बुद्धघोषादिभि पालीभाषायामेव विरचिता न तथा जैनसाहित्ये मूलटीकयोरेकभाषात्वं यद्यपि भाष्यनिर्युक्तिनिर्माणसमयपर्यन्तं बौद्धवज्जैनसाहित्यमपि समानभाषानिबद्धमासीत्परन्तु ततः पश्चाज्जैनाचार्याणां मनसि संस्कृतयुगस्य प्रभावः समुद्भूतस्तत एव सन्मति

निर्माणेऽपि प्राकृतभाषायाः प्रनिर्माणमार्गे

न तावदुत्साह प्रतीतिपथमायाति, तत एव हेमचन्द्रसूरिरपि सर्वानार्षप्रयोगान् संगृह्य तद्व्याकरण निर्माणे उपरता जाता प्रतीयते। ननु प्रवचनानामपि प्राकृतभाषैव श्रूयते। यदुक्तम्—

बालस्त्रीमन्दमूर्खाणां नृणां चारित्रकाङ्क्षिणाम्।
तेषां सुखावबोधाय सिद्धान्ताः प्राकृते कृताः ॥ इति॥

आगमटीकायामप्यनेकस्थलेषु 'प्राकृतशैल्या चतुर्थ्यर्थे षष्ठी प्राकृतत्वाद्रेफागम" इत्यादि वचनैः सिद्धान्तभाषायाः प्राकृतत्वमेव सिद्ध्यति। तद्व्याकरणानि च सन्तीति चेच्छ्रूयतां संस्कृता तिरिक्तानां सर्वासां भाषाणां प्राकृतमिति सामान्य नाम। यदुक्तं स्थानाङ्गसूत्रस्य सप्तमस्थाने— सक्कया पागया चेव पसत्था इसीभासिया'। पागय(प्राकृत)शब्देन प्राकृतत्वेनाभिमतानां सर्वासां भाषाणां संग्रहः शौरसेनीमागधीपैशाचीचूलिकापैशाचिकापभ्रंशादयः सर्वा अपि सामान्य रूपेण प्राकृतमुच्यन्ते विशेषापेक्षायां तु प्रत्येकं पृथक् पृथक् नाम्ना व्यवह्रियन्ते यथा ब्राह्मणक्षत्रिया दीनां सामान्यमनुष्यत्वेऽप्येकरूपत्वेऽपि ब्राह्मणाद्य शब्दाः पृथक् पृथग्जातिवाचकास्तथा त्रापि ज्ञेयम्।

कस्तर्हि प्रवचनभाषाया नामधेयविशेषः ? अर्द्धमागधी, आर्षप्राकृतं वा। यदुक्तं सम वायाङ्गादौ—

"भयवंचणं अद्धमागहीए भासाए धम्ममाइक्खइ" (सम० ३४)

श्रीमदभयदेवसूरिस्तद्व्याख्यायामित्थं तदर्थं करोति— अद्धमागहीयत्ति-प्राकृतादीनां षण्णां भाषाविशेषाणां मध्ये या मागधी नाम भाषा रसोर्लशौ मागध्यामित्यादिलक्षणवती साऽसमा श्रितस्वकीयसमग्रलक्षणाऽर्द्धमागधीत्युच्यते"। व्याख्यातृणां सूरेरयमभिप्रायः—अत्रार्द्धशब्दोऽसम ग्रवाचकः यस्यां भाषायां मागधीभाषायाः समग्रलक्षणानि न सन्ति किन्तु कतिचिल्लक्षणानि मागधीभाषायाः कतिचिल्लक्षणान्यन्यभाषायाः सा भाषाऽर्द्धमागधीत्युच्यते।

भगवतीसूत्रवृत्तावपि तमेवार्थं स्पष्टीकरोति श्रीमदभयदेवसूरिः—"अद्धमागहीभासा भासिज्ज माणा विसिस्सइ" (भग० ५ ४)। मागधभाषालक्षणं किञ्चित्किञ्चिच्च प्राकृतभाषालक्षणं यस्यामस्ति साऽर्द्धं मागध्या इति व्युत्पत्त्याऽर्द्धमागधी। एवमेवौपपातिकसूत्रे—' अद्धमागहाए भासाए भासति अरिहा धम्मं' (औप० ३४)। अर्द्धमागधाए भासाएत्ति रसोर्लशौ मागध्यामित्यादि यन्मागधभाषालक्षणं तेनापरिपूर्णप्राकृतभाषालक्षणबहुला अर्द्धमागधीत्युच्यते। एभ्यस्त्रिभ्योऽवतरणेभ्य इदमेव फलति यत्र किञ्चिन्मागधभाषालक्षणं बहुलं च प्राकृतभाषालक्षणमस्ति साऽर्द्धमागधी भाषा ज्ञेया।

नन्दीसूत्रवृत्तौ श्रीमन्मलयगिरिस्ततोऽपि स्पष्टं वक्ति—अत 'रसोर्लशौ' मागधिकभाषा लक्षणात् सर्वमपि हि प्रवचनमर्द्धमागधिकभाषात्मकम्, अर्द्धमागधिकभाषया तीर्थकृतां देशना प्रवृत्तेः। तत्र प्रायः सर्वत्रापि मागधिकभाषालक्षणमनुसरणीयम्। सिद्धहैमाष्टमाध्याये श्रीमद्धेमचन्द्र सूरिरपि तदेव वक्ति—

पोराणमद्धमागहभासा नियय हवइ सुत्त

सूत्राणि अर्थरूपेण तीर्थकराद्दिष्टानि सूत्ररूपेण च गणधरग्रथितानि। यदुक्तं—"अत्थं भासइ अरहा सुत्तं गंथंति गणहरा निउणं"। तीर्थकरस्यादेशोऽर्द्धमागधीभाषायामिति स्पष्टं तथा गणधराणां सूत्ररचनापि तस्यामेवार्द्धमागधीभाषायां भवति। यत्तु तीर्थकरगणधराभ्यां सूत्रेऽर्द्धमागधीभाषायां रचितान्यपि सूत्राण्याकाराद्यावत्पर्यन्तं तानि सूत्राणि न तदवस्थानि किन्तु तत्परिवर्तनं सम्पन्नं तथा च तद्भावापि परिवृत्तानि भवन्ति कथितानि न सम्यक् साभिप्रायमक्षरपरिवर्तनेऽपि जैनाचार्या महत्पाप स्वीकुर्वन्ति। 'हीणक्खरं अच्चक्खरं पयहीणं' इत्यादिना हीनाक्षरादिपाठे ज्ञानातिचारा दर्शिता ज्ञानातिचाराश्च ज्ञानावरणीयादिकर्मबन्धहेतवः इत्यक्षरपरिवर्तनेऽप्यनाचारान् दोषस्तदा भाषापरिवर्तने भाषापरिवर्तने तु महान् दोषः परमर्षिप्रणीतस्य भाषापरिवर्तने सिद्धसेनदिवाकरस्य गुरुभिर्महत्प्राय

श्रित इत्यमिति वार्ताऽत्रापि प्रसिद्धा । तत्कालीनाचार्यपरम्परया स्वशिष्येभ्यो धारणापाठनेन च सम्परिवर्तनं जातमित्यपि वक्तुं न शक्यते पूर्वधारिणामाचार्याणामस्मदादपेक्षयाऽधिकबुद्धिपाटवात् । प्रमादेन कस्यचित् स्खलनासम्भवे न सर्वेषां स्खलना । तादृशस्खलनया पाठान्तरसम्भवेऽपि सर्वथा भाषायाः परिवर्तनमशक्यं, भाषापरिवर्तनं तु तदैव स्यात् यदि सूत्राणां भाषान्तरमनुवादो वा कृतः स्यात्तथा सति तेषां ग्रन्थान्तरत्वसम्पत्तेः सूत्रत्वमपगतं स्यात् । न चेष्टापत्तिः प्रामाण्यभङ्गादतिशयज्ञानिनां वचनानामेव प्रामाण्यस्वीकारात् । न चार्षभाषायां मागध्याः समद्वितीयांशभावादर्द्धमागध्या अर्द्धमिति व्युत्पत्त्याश्रितः समासो न स्यात् "अर्द्धं नपुंसकम् २।२।२" इति पाणिनीयसूत्रेण "समेंऽशेऽर्द्धं न वा" ३।१।५४। इति सिद्धहैमसूत्रेण च समांशवाचकार्द्धशब्दस्यैव नपुंसकत्वपूर्वनिपातयोश्च विहितत्वादिति वाच्यम् । आर्षभाषायां प्रायो मागधीभाषायाः समद्वितीयांशमस्त्येव तन्निर्णयो निम्नदर्शितरीत्या शास्त्राल्पकप्रयोगानुसारेण कर्तव्यः । तथाहि—

"एयावंति सव्वावंति लोगंसि कम्मसमारंभा परिजाणियव्वा भवंति"

( आचा० प्र० श्रु० १,१,१२ )

अत्र 'एयावंति सव्वावंति लोगंसि' एते त्रय शब्दा मागधीभाषालक्षणाश्रिता, पश्चिमास्त्रय शब्दा महाराष्ट्रीप्राकृतलक्षणाश्रिता । "सेकीडं वा पयगं वा कुंथुं वा पिपीलियं वा हत्थंसि वा पायंसि वा बाहुंसि वा उरंसि वा उदरंसि वा सीसंसि वा वत्थंसि वा पडिग्गहंसि वा कंबलंसि वा पायपुंछणंसि वा रयहरणंसि वा गुच्छगंसि वा दंडगंसि वा पीढगंसि वा फलगंसि वा सेज्जंसि वा संथारगंसि वा तहप्पगारे उवगरणजायंसि वा" दश० ४, अत्र सप्तम्यन्ताः सर्वेऽपि शब्दा मागधीभाषाश्रिताः, महाराष्ट्रीप्राकृताश्रितास्तु पञ्च एव ।

अकुमारभूए जे केई कुमारभूए त्ति हं वए ।
इत्थीहिं गिद्धे विसए महामोहं पकुव्वइ ॥ ( सम० ३० )

अस्मिन् पद्ये—एकारान्ताः प्रथमैकवचनान्ताः पञ्चशब्दा मागधीभाषालक्षणाश्रिताः शेषा महाराष्ट्रीसाधारणाः । इदं तु चिन्त्यमत्र मागधीशब्दः प्राचीनमागधीभाषावाचको ज्ञेयः, हेमचन्द्रसूरिणा प्राकृतव्याकरणे मागधीप्रकरणे या मागधीभाषा दर्शिता सा तु नाटकादिषु प्रयुक्ताऽर्वाचीनमागधी ज्ञातव्या । वस्तुतस्तु अर्द्धमागधीशब्दो न भाषाश्रितः किन्तु देशाश्रितः । तथाहि—मगधदेशस्यार्द्धमर्द्धमगधं अर्द्धमगधस्य भाषा अर्द्धमागधी शूरसेनमगधदेशयोरन्तरालप्रदेशे या भाषा भाष्यमाणाऽऽसीत्साऽर्द्धमागधी । यदुक्तं निशीथचूर्णौ श्रीजिनदासमहत्तरेण "मगहद्धविसयभासानिबद्धं अद्धमागहं" । श्रीमार्कण्डेयमहर्षिणा प्राकृतसर्वस्वे तदेवोक्तं—"शौरसेन्या अदूरत्वादियमेवार्द्धमागधी" अर्थात् शूरसेनदेशस्य भाषा शौरसेनी, मगधदेशस्य भाषा मागधी, मगधशूरसेनमध्यभागस्य भाषाऽर्द्धमागधी । पालीभाषावत् स्वतन्त्रैव भाषा । बहुलांशेन पालीसदृशा स्वल्पांशेन भिन्ना । पालीभाषायां यथा बौद्धसाहित्यं तथाऽर्द्धमागधीभाषायां जैनधर्मस्य पुरातनसाहित्यम् । पालीभाषानिबद्धं बौद्धसाहित्यं यथाऽद्यावधि पालीभाषायामेवावतिष्ठते तथाऽर्द्धमागधीनिबद्धं जैनसाहित्यमद्यपर्यन्तं तस्यामेव भाषायामवतिष्ठते । भेदस्त्वयं यद्बौद्धसूत्राणां टीका अपि पालीभाषायामेवासन् । तेन तस्या अद्यावधि तथैव प्रचारोऽनेकानि च व्याकरणानि विद्यन्ते तदर्द्धमागधीभाषायां जैनसूत्राणां टीका न निर्मिता जैनाचार्यैस्तेन तस्याः प्रचारो न तथा समजनि ।

यत्तु भरतेनोक्तं 'राक्षसी श्रेष्ठिचेटानुकम्प्यादेरर्द्धमागधी' यथा—'अज्जवि खोधामिणीए हिलिम्भादेवीए पुरनयडुक्खणोण्णा उवयमद्दि' । इयं नाटकादिषु प्रयुक्ताऽर्द्धमागधी जैनसाहित्यनिबद्धार्द्धमागधीतोऽतीव भिन्नाऽर्वाचीना च स्पष्टतया प्रतीयते । तथाच मागधीवदर्द्धमागध्यपि प्राचीनाऽर्वाचीनेति भेदद्वयमापन्ना ।

## अर्द्धमागधीमहाराष्ट्रीप्राकृतयोर्भेदः

अधुना महाराष्ट्रीतोऽर्द्धमागधी भाषा कियदंशेन भिन्नेति प्रदर्श्यते ।

१ महाराष्ट्र्यां नकारस्य सर्वदा णकारो जायतेऽर्द्धमागध्यां तु नकारणकारौ द्वावपि । यथा—

नाइवमहं न य आगमिस्सं अट्ठं नियच्छन्ति तहागया उ ।

(आचा० १।२।३।११०)

इण छण परिण्णाय लोगसन्नं च सव्वसो ।

(आचा० १।२।३।१०२)

२ महाराष्ट्रीप्राकृते व्यञ्जनलोपे सत्युद्वृत्तस्याकारस्याकार एव श्रूयतेऽर्द्धमागध्यां तु यकार श्रुतिः । यथा—

| सं० | अ० | म० प्रा० |
|---|---|---|
| अवकरण | अवयरण | अवअरण |
| इन्द्रजाल | इन्दयाल | इन्दआल |

३ म० प्राकृते क ग च ज त द प य वन्यक्षराणामसंयुक्तानादिभूतानां लोपो भवति, अर्द्धमागध्यां तु ककारस्य गकारयकारौ ग च ज त दानां यकारोऽपि पकारस्यातपादिगणपठितेष्वत्र यकार । यथा—

| सं० | अ० मा० | म० प्रा० |
|---|---|---|
| अधिकरण | अहिगरण | अहिअरण |
| व्याकरण | वागरण | वाअरण |
| जगत् | जग, जय | जअ |
| शौच | सोच सोय | सोअ |
| आतप | आतवो आयवो | आअभा |

### अकारान्तपुँल्लिङ्गविषये—

४ अर्द्धमागध्यां प्रथमैकवचने अकारान्तनाम्नो रूपद्वयं भवति प्राकृते रूपमेकमेव भवति। यथा—

| अ० मा० | प्रा० |
|---|---|
| जिणे जिणो | जिणो १-१ |

५ द्वितीयाबहुवचनेऽर्द्धमागध्यामेकारान्तमेकमेव रूपं भवति प्राकृते तु रूपद्वयम् । यथा—

| अ० मा० | प्रा० |
|---|---|
| जिणे | जिणा, जिणे २-३ |

६ तृतीयाबहुवचनेऽर्द्धमागध्यां रूपद्वयं प्राकृते तु सानुनासिकाधिक्येन रूपत्रयं भवति । यथा—

| अ० मा० | प्रा० |
|---|---|
| जिणेहि, जिणेहिं | जिणेहि, जिणेहिं<br>जिणेहिँ ३-३ |

७ पञ्चम्येकवचनेऽर्द्धमागध्यां रूपद्वयं बाहुल्येन क्वचिच्च रूपत्रयं भवति प्राकृते तु रूपषट्कम् । यथा—

| अ० मा० | प्रा० |
|---|---|
| जिणाओ जिणा } क्वचित् जिणाहि } | जिणत्तो जिणाओ जिणाउ<br>जिणाहि, जिणा, जिणाहिंतो ५-१ |

८ पञ्चमीबहुवचनेऽर्द्धमागध्यां रूपमेकमेव भवति । प्राकृते तु रूपनवकं भवति । यथा—

| अ मा | प्रा० |
|---|---|
| जिणेहिंतो | जिणत्तो, जिणाओ, जिणाउ<br>जिणाहि, जिणेहि, जिणाहिंतो<br>जिणेहिंतो, जिणासुंतो, जिणसुंतो ५-३ |

९ सप्तम्येकवचनेऽर्द्धमागध्यां रूपत्रयं प्राकृते च रूपद्वयं भवति । यथा—

| अ० मा० | प्रा० |
|---|---|
| जिणंसि, जिणम्मि, जिणे | जिणम्मि, जिणे ७-१ |

१० न्तमन्तप्रत्ययान्तशब्दानां प्रथमाद्वितीयातृतीयापष्ठीविभक्तिषु किंचिद्विशिष्टरूपाणि भवन्ति । तथाहि—

| | ए० व० | ब० व० |
|---|---|---|
| प्र० | भगवं, भगवंतो<br>मतिमं, मतिमंतो | भगवंतो<br>मतिमंतो |
| द्वि० | | भगवंतो<br>मतिमंतो |
| तृ० | भगवता, भगवया<br>मतिमता | |
| ष० | भगवतो भगवओ | |

प्राकृते त्वयं विशेषो न दृश्यते ।

११ अर्द्धमागध्यां जसादिशब्दानां तृतीयाषष्ठीसप्तमीषु विशिष्टरूपाणि भवन्ति । तथाहि—

ए० व०

तृ० जससा मणसा, वयसा, कायसा, तेयसा, चक्खुसा, जोगसा, पससा, बम्सा ।

ष० जससो, मणसो ।

स० मणसि इत्यादि । प्राकृते त्वेतानि रूपाणि न दृश्यन्ते ।

१२ कम्मधम्मशब्दयोस्तृतीयैकवचने कम्मुणा, धम्मुणा इति रूपेऽर्द्धमागध्यां भवतः, प्राकृते तु न दृश्येते ।

१३ रायशब्दस्य सम्बोधनैकवचने हे रायमिति रूपमर्द्धमागध्यां दृश्यते न तु प्राकृते ।

## इकारान्तपुँल्लिङ्गे—

१४ प्रथमाबहुवचनेऽर्द्धमागध्यां रूपद्वयं भवति प्राकृते तु रूपचतुष्टयम् । तथाहि—

| अ० मा० | प्रा० |
|---|---|
| इसिणो, इसी | इसिणो इसी, इसओ, इसउ, ४-२ |

१५ पञ्चम्येकवचनेऽर्द्धमागध्यां रूपद्वयं प्राकृते तु रूपपञ्चकम्—

| अ० मा० | प्रा० |
|---|---|
| इसिणो, इसीओ, | इसिणो इसित्तो, इसीओ,<br>इसीउ, इसीहिंतो, |

१६ पञ्चमीबहुवचनेऽपि प्राकृते रूपाधिक्यम्—

| अ० मा० | मा० |
|---|---|
| इसिहिंतो | इमित्तो, इसीओ, इसाउ, इसीहिन्तो, इसीसुंतो |

१७ सप्तम्येकवचनेऽर्द्धमागधीस्थ 'इसिंमि' रूपं प्राकृते नास्ति।

उकारान्तपुंल्लिङ्गे—

१८ प्रथमाबहुवचने पञ्चम्येकवचनबहुवचनयोः सप्तम्येकवचने चैकारान्तवत्तारतम्यम्।

१९ बहुशब्दस्य प्रथमाबहुवचनेऽर्धमागध्यां जायमानं 'बहव' इति रूपं प्राकृते नास्ति।

सर्वनामशब्देषु—

२० सप्तम्येकवचनेऽर्धमागध्यामिमकशब्दाभ्यामेव 'सिं' प्रत्ययः प्राकृते तु सर्वेषु सर्वनामशब्देषु 'स्सिं' प्रत्ययः।

२१ कजतइमशब्दानां तृतीयैकवचने प्राकृते किणा, जिणा, तिणा, इमिणा इति रूपाणि दृश्यन्तेऽर्धमागध्यां तु तन्नास्ति।

२२ तेषामेव षष्ठ्येकवचनबहुवचनयोः प्राकृते कास आस, ताम इति रूपाणि दृश्यन्ते अर्धमागध्यां तानि न सन्ति।

२३ कशब्दस्य पञ्चम्येकवचने 'किणो' इति रूपं प्राकृते विद्यतेऽर्धमागध्यां नास्ति।

२४ षष्ठ्येकवचने 'से' इति रूपं तच्छब्दस्यैवार्धमागध्यां दृश्यते प्राकृते त्विमैतच्छब्दयोरपि।

२५ अमुशब्दस्य सप्तम्येकवचने 'अयम्मि, इयम्मि' इति रूपद्वयं प्राकृते दृश्यतेऽर्धमागध्यां तु न।

अस्मद्युष्मच्छब्दयोः —

२६ अनयोः शब्दयोः रूपेषु महान् भेदोऽस्ति, तुलनार्थं तयोः रूपाणि प्रदर्श्यन्ते—

| | अ० मा० | मा० |
|---|---|---|
| प्र० ए० | हं अहं | म्मि अम्मि हं, अहं अहयं |
| प्र० ब० | अम्हे वयं | अम्ह अम्हे, अम्हो मो वयं भे, |
| द्वि० ए० | मे, मं, ममं, ममं। | णे णं मि अम्मि, अम्ह, मम्ह, मं ममं, मिमं अहं। |
| द्वि० ब० | णो, अम्हे, | अम्हे अम्हो अम्ह, णे। |
| तृ० ए० | मया मए, | मि मे ममं ममए ममाइ मइ मए मयाइ णे। |
| तृ० ब० | अम्हेहिं | अम्हेहि अम्हाहि (हिं) अम्ह अम्हे णे। |
| पं० ए० | ममाओ ममाहिंतो। | मइत्तो मइत्तो ममत्तो महत्तो मज्झत्तो मईओ, ममाओ महाओ मज्झाओ। मईउ ममाउ महाउ मज्झाउ ममाहि, महाहि, मज्झाहि मईहिंतो, ममाहिंतो, महाहिंतो, मज्झाहिंतो, मई, ममा, महा, मज्झा। |

| | |
|---|---|
| पं० ब० अम्हेहिंतो। | ममत्तो, अम्हत्तो, ममाओ, अम्हाओ, ममाउ, अम्हाउ, ममाहि, अम्हाहि, ममेहि, अम्हेहि, ममाहिंतो, ममेहिंतो, अम्हाहिंतो, अम्हेहिंतो। ममासुंतो, ममेसुंतो, अम्हासुंतो, अम्हेसुंतो। |
| ष० ए० मम, ममं, मज्झ मज्झं, मह, मे | मे, मइ, मम, मह, महं, मज्झ, मज्झं, अम्ह, अम्हं। |
| ष० ब० अम्ह, णं अस्साक, अम्हाणं | णे, णो, मज्झ, अम्ह, अम्हं, अम्हे, अम्हो, अम्हाण-णं, ममाण-णं, महाण-णं। मज्झाण णं। |
| स० ए० ममंसि, ममंहि। | मइ, मि, ममाइ, मए, मे, अम्हम्मि, ममम्मि, महम्मि, मज्झम्मि, अम्हस्सि, ममस्सि, महस्सि, मज्झस्सि इत्यादि। |
| स० ब० अम्हेसु। | अम्हसु (सुं) अम्हेसु (सुं) ममसु (सुं) ममेसु (सुं) महसु (सुं) महेसु (सुं) मज्झसु (सुं) मज्झेसु (सुं) |

२७ एतावानेव भेदस्तुम्हगब्दरूपेष्वपि। विस्तरभयान्नेह रूपाणि लिख्यन्ते। तुलना चिकीर्षुभिस्तत्तद्व्याकरणं निरीक्षणीयम्।

## स्त्रीलिङ्गविषये—

२८ स्त्रीलिङ्गे प्रथमाद्वितीयाबहुवचने प्राकृते रूपत्रयमर्द्धमागध्यां रूपद्वयं भवति। तथाहि—

| अ० मा० | प्रा० |
|---|---|
| मालाओ, माला | मालाओ, मालाउ, माला |
| बुद्धीओ, बुद्धी | बुद्धीओ, बुद्धीउ, बुद्धी |
| धेणूओ, धेणू | धेणूओ, धेणूउ, धेणू |
| णईओ णई | णईओ, णईउ, णई (णईआ) |
| वहूआ, वहू | वहूओ, वहूउ, वहू |

२९ तृतीयाषष्ठीसप्तम्येकवचनेऽर्द्धमागध्यामेकैकमेव रूपं भवति प्राकृते तु रूपचतुष्टयं भवति। तथाहि—

| | अ० मा० | प्रा० |
|---|---|---|
| तृ० ष० स० | मालाए | मालाअ, मालाआ, मालाइ, मालाए |
| ,, ,, ,, | बुद्धीए | बुद्धीअ, बुद्धीआ, बुद्धीइ बुद्धीए |
| ,, ,, ,, | धेणूए | धेणूअ, धेणूआ, धेणूइ, धेणूए |
| ,, ,, ,, | णईए | णईअ णईआ, णईइ, णईए |
| ,, ,, ,, | वहूए | वहूअ, वहूआ, वहूइ, वहूए |

३० पञ्चम्या एकवचनबहुवचनयोः प्राकृते रूपाणामाधिक्यं पुंलिङ्गवदेव प्रत्ययानामाधिक्यात् दर्द्धमागध्यां तु रूपमेकैकमेव।

३१ कजतशब्दातिरिक्तसर्वनामशब्देषु स्त्रीलिङ्गे प्राकृते कश्चिद्विशेषो नास्ति, अर्द्धमागध्यां तु षष्ठीबहुवचने 'सव्वासिं' इति विशेषरूपं विद्यते।

गणपठितानां तु विकल्पनैकारविकरणं प्राकृते तु सर्वेषामकारान्तधातूनामेकार विकरणं । तेन गच्छेइ गच्छेसि इत्यादिरूपाणि प्राकृते भवन्ति न त्वर्द्धमागध्याम् ।

२ वर्त्तमानकालेऽर्द्धमागध्यां त्रिष्वपि पुरुषपु एवैकरूप प्राकृते रूपाणामाधिक्यम् । तथाहि—

| अ० मा० | | प्रा० |
|---|---|---|
| प्र० ए० | गच्छइ | गच्छइ, गच्छए |
| प्र० ब० | गच्छन्ति | गच्छन्ति, गच्छन्ते, गच्छिरे |
| म० ए० | गच्छसि | गच्छसि, गच्छसे |
| म० ब० | गच्छह | गच्छह, गच्छित्था |
| उ० ए० | गच्छामि | गच्छामि, गच्छमि |
| उ० ब० | गच्छामो | गच्छामो, गच्छिमो, गच्छमो, गच्छामु, गच्छिमु, गच्छमु, गच्छाम, गच्छिम, गच्छम |

३ आज्ञायमर्द्धमागध्यां मध्यमपुरुषैकवचन गच्छाहि, गच्छ इति रूपद्वय भवति, प्राकृते तु गच्छसु, गच्छहि, गच्छ इति रूपत्रयं भवति । उत्तमपुरुषैकवचनबहुवचनयो प्राकृते वर्त्तमानकालवद्रूपबाहुल्यम् ।

४ भूतकालेऽर्द्धमागध्यां त्रिष्वपि पुरुषेषु वचनयोरेक एवेंसुप्रत्ययो भवति । यथा— 'गच्छिसु' । प्राकृते तु स्वरान्तधातो सीहीहीअप्रत्यया व्यञ्जनान्तधातोरीअप्रत्ययो । यथा—होसी, होही, होहीअ, गच्छीअ ।

५ भविष्यदर्थेऽर्द्धमागध्यां त्रिष्वपि पुरुषेषु स्सहिप्रत्ययौ त्यादिपरौ भवत । प्राकृत तु प्रथम मध्यमपुरुषयोर्हिप्रत्यय एव त्यादिपरो न तु स्सप्रत्यय ।

६ वर्त्तमानोत्तमपुरुषैकवचनबहुवचनयोरर्द्धमागध्यामस्धातो असि, मि, मो इति रूपाणि भवन्ति, प्राकृते तु—म्हि, म्हो, म्ह इति रूपाणि भवन्ति ।

७ भूतकालेऽस्धातोरर्द्धमागध्यां आसी, आसिमो इत्यादिरूपाणि भवन्ति, प्राकृते तु आसि अहेसि, इति रूपद्वयम् ।

८ अकासि, अकारिस्सं, अकरिंसु, अभविंसु, अतरिंसु, भुविं, भुवी, लहित्थ, अणुसासमि होत्था, हुत्था, आहंसु अब्बवी, आघ, पेच्छिइ, पेच्छी, समुच्छिहिन्ति, सपयाति, पीहाइ इत्यादय प्रयोगा अर्द्धमागध्यां प्रसिद्धा प्राकृते न दृश्यन्ते ।

९ भावकर्मणोरर्द्धमागध्यां सामान्यत इज्जप्रत्ययो भवति । प्राकृते त्विज्जेअप्रत्ययौ भवत ।

| अ० मा० | प्रा० |
|---|---|
| पढिज्जइ | पढीअइ, पढिज्जइ, |

१० कृधातोरर्द्धमागध्यां भावकर्मणो कज्जइ, कीरइ इत्यादिरूपाणि दृश्यन्ते प्राकृत तु न ।

११ सम्बन्धार्थकृदन्ते प्राकृते 'तुआण' प्रत्ययो भवति सोऽर्द्धमागध्यां न दृश्यते । प्राकृत इअ प्रत्ययो भवति । तत्स्थानेऽर्द्धमागध्यामियाप्रत्ययोऽपि भवति । क्वचित् तुप्रत्ययो भवति । यथा—चइत्तु, सरित्तु इत्यादि । प्राकृते तु तादृशरूपाणि न सन्ति ।

१२ सोच्चा, पच्चा, लद्धु, लद्धूण, दिस्सा इत्यादीनि सम्बन्धार्थकृदन्तरूपाणि प्राकृते न दृश्यन्ते ।

१३ अर्द्धमागध्यां हेत्वर्थकृदन्ते 'त्तए' प्रत्ययो भवति । यथा—"करित्तए, सागरित्तए" स प्राकृते न दृश्यते ।

१४ अर्धमागध्यां भूतार्थे 'पण्हगा, थोयणा, वड्डो ( वृत्त ), अणुरागयं, छड्डियं ( छिन्न ) परिगुद्दो, संतुट्ठो, कम्मडा उमट्ठो" इत्यादयः शब्दा सिद्धान्ते प्राकृते न सिध्यन्ति।

१५ सिद्धहैमाष्टमाध्यायचतुर्थपादस्य द्वितीयसूत्रादारभ्य षड्विंशत्यधिकशततमसूत्रपर्यन्तं च धात्वादेशा दर्शिता प्राकृतभाषायाम्। तेषु स्वल्पा एवादेशा आर्षे प्रयुक्ता, बहुलास्तु न सन्त्येव। तथाहि—कथधातोर्वज्जरादयो विहितास्तेषु वज्जरादीनामेकोऽपि प्रयोगोऽर्धमागध्यां नास्ति। एवं धात्वन्तरेष्वपि शतशोऽतिविस्तरभयान्नेह प्रपञ्च्यते। इत्थं महाराष्ट्रीतश्च महाराष्ट्रीप्राकृतभाषातोऽर्धमागध्या भेदः स्पष्टं प्रतीयते।

अर्द्धमागधीभाषापि लोकभाषात्वेन प्राकृतभाषास्वेवोच्यते। विना संस्कृतभाषां सर्वा अपि भाषा प्राकृत एवान्तर्भवन्ति। मूलत एव भाषाया द्वैविध्यात्। यदुक्तमनुयोगद्वारसूत्रे—"संसया पागया चेव पसत्था इसि भासिया" इति। एवमेव षड्भाषाचन्द्रिकाकारेण लक्ष्मीधरेणोक्तम्—

भाषा द्विधा संस्कृता च प्राकृती चेति भेदतः। इति।

इत्थञ्च संस्कृतभाषावत्प्राकृतभाषाया अपि स्वातन्त्र्यं न कमपि हर्तुं शक्यते।

अतएव प्राकृतभाषा न संस्कृततनया संस्कृतभाषाया एव प्राकृतमूलकत्वात्। प्राकृतं तु प्रकृतिसिद्धम्। संस्कृतं तु संस्कारापादनेन समुत्पादितम्। आबालगोपालाबालसाध्या या प्राकृत भाषा तामेव संस्कार्य समासादिता भाषा सा संस्कृता। तदुक्तं रूपकपरिभाषायाम्—

कौमारपाणिनीयादिसंस्कृता संस्कृता मता। इति।

यत्तु प्रकृतिः संस्कृतं तत्र भवं तत आगतं वा प्राकृतमिति व्युत्पत्तिं कृत्वा प्राकृतस्य संस्कृतजन्यत्वं संस्कृतादागतत्वं वा स्वीकुर्वन्ति केचित्तदपि न सम्यक् प्रकृतिशब्दस्य संस्कृतवाचकत्वासिद्धेः। एवं तु प्रकृतिशब्दस्य स्थाने संस्कृतभाषावाचकसंस्कृतशब्दप्रयोगेण संस्कृते भवं संस्कृतादागतं वा सांस्कृतमित्येवोचितं स्यान्न तु प्राकृतम्। प्रकृतिशब्दस्य तु स्वभावः निसर्गः प्रजा सामान्यजनता इत्यादयोऽर्था प्रसिद्धाः। तथा च या स्वाभाविकी नैसर्गिकी वा सामान्यजनतोच्चार्यमाणा भाषा सा प्राकृतभाषा। या च संस्कारं प्राप्ता सा संस्कृतभाषा इत्यर्थः सम्यक् सङ्गच्छते। न काप्यनुपपत्तिरत्र। तथा च तद्भाषायाः स्वतन्त्रव्याकरणमावश्यकं भवितव्यमिति मनोरथो मे आसीत् कियता कालेनाहं अर्धमागधीकोषनिर्माणानन्तरं स हृद्गतोऽभवत्तावत्सोदारचेतसामग्रणी श्रीमद्‌गरचन्द्रभैरवदानश्रेष्ठिवराणां राजस्थानान्तर्गतविक्रमपुर(बीकानेर)निवासिनां तस्मिन् कार्ये प्रेरणा जाता तदुत्साहिता मैथिल पण्डितश्रीयदुनाथमिश्रस्य साहाय्येन गहनमप्येतत्कार्यं मासनवकेन पारयितुं समर्थोऽभवम्।

संस्कृतसिद्धान्तकौमुद्यनुसारिशैलीविशिष्टत्वादर्धमागधीभाषालक्षणप्रदर्शनद्वारा जैनसिद्धान्तानां कौमुदीवत्प्रकाशकत्वाच्चास्य व्याकरणस्य जैनसिद्धान्तकौमुदीति नामधेयमुचितमेव प्रतिभाति।

यद्यप्यन्यापेक्षया समितिमुद्रणस्य सर्वोत्कृष्टत्वात् आगमोदयसमितिमुद्रितजैनसूत्राधारेण अर्धमागधीकोषस्य चाधारेणास्य रचना समजनि परन्तु कालप्रवाहेण लेखकानां स्खलनया सूत्रेष्वनेकानि पाठान्तराणि जातानि थकारछकारयोः सादृश्येन क्वचित् पुरत्थिमं, क्वचित्पुरच्छिमं क्वचिदत्थियेयव्वा, क्वचिदच्छियेयव्वा भाषान्तरया सादृश्येन पडिगाहेइ पडिगाहेइ इत्याद्यनेकानि संदेहस्थानानि सन्ति तादृशस्थलेषु क्वचिद्यथामति निर्णयं कृत्वा क्वचिदुभयविधः पाठः समादृतः।

अल्पश्रमेण विद्यार्थिनां बोधो यथा स्यात्तथाविधशैलीसमादरणादत्र प्रकृतिप्रत्ययविभागः स्वीकृतः। सूत्रेषु शब्दानां धातूनां च प्रयोगा यथा यथा दृष्टास्तथा तथा ते साधिताः। गवादि शब्दानां सर्वविभक्तिरूपाणि सूत्रे नोपलभ्यन्ते तेन यावन्ति रूपाणि लब्धानि तावन्त्येव साधितानि कानिचिदनुपलब्धान्यपि रूपाणि व्याकरणान्तरानुसारेण साधितानि। इत्यशीत्यधिकैकोनविंशतिशतके विक्रमसंवत्सरे श्रीबीकानेराख्यपत्तन श्रीमद्‌गरचन्द्रभैरवदान-यथमद्दुश्रेष्ठिवराभ्यां स्वकीय [illegible] केवलप्रचारार्थमिदं पुस्तकं प्रथमावृत्तिरूपेण मुद्रितम्। केषुचिद्विद्यालयेषु पठन

पाठनादिरूपेण प्रवृत्तश्च । संस्कृतकोविदानामप्यर्द्धमागधीभाषानभिज्ञानां केषांचित्पाठकानामस्य व्याकरणस्य सरलावृत्तिरवश्य कार्येति प्रार्थनाऽभवत् । पञ्चनीत्यधिकैकोनविंशतितमे संवत्सरे कच्छ देशान्तर्गतजमेर(अजार)नामके पत्तने चातुर्मास्यकाले प्रारब्धाऽस्य व्याकरणस्यार्थप्रकाशिका स्ववृत्ति मूलसंशोधनेन सार्द्धम्। प्रथमावृत्तौ धातवोऽकारान्ता आसन्, द्वितीयावृत्तौ सर्वेऽप्य कारान्ता धातवो लाघवार्थं व्यञ्जनान्ता दर्शितास्ते च मूल एवोपन्यस्ता गणत्रयविभागेन। प्रत्येक धातुसमीपे तत्तत्संख्याङ्कोऽपि निष्टङ्कित । प्रथमावृत्त्यवशिष्टा अपि केचिदावश्यकतयोपलब्धा धातवो द्वितीयावृत्तौ निवेशितास्तेन प्रथमावृत्तितो द्वितीयावृत्तौ धातुसंख्या समधिका समजनि । तथाहि—

| प्रथमावृत्तिधातुसंख्या | | द्वितीयावृत्तिधातुसंख्या | |
|---|---|---|---|
| ग० | सं० | ग० | सं० |
| प्रथमगणे | ४२५ | प्रथमगणे | ४८६ |
| द्वितीयगणे | ८६ | द्वितीयगणे | ८२ |
| तृतीयगणे | १३९ | तृतीयगणे | १८३ |
| पूर्णयोग | ६५० | पूर्णयोग | ७५० |

सूत्राणामनुगमपूर्वकसंशोधनेन प्रथमावृत्तितो द्वितीयावृत्तौ सूत्रसंख्या न्यूना समपनि । तथाहि—

| प्रथमावृत्तिसूत्रसंख्या | | | द्वितीयावृत्तिसूत्रसंख्या | | |
|---|---|---|---|---|---|
| अध्याये | पादे | संख्या | अध्याये | पादे | संख्या |
| १ | १ | ४६ | १ | १ | ८० |
| १ | २ | ३२ | १ | २ | ५४ |
| १ | ३ | १०० | १ | ३ | ४१ |
| १ | ४ | १४५ | १ | ४ | ५५ |
| २ | १ | ६४ | २ | १ | ८९ |
| २ | २ | ४० | २ | २ | ६६ |
| २ | ३ | ५१ | २ | ३ | १५३ |
| २ | ४ | १०७ | २ | ४ | १०५ |
| ३ | १ | १८५ | ३ | १ | ६० |
| ३ | ३ | ७१ | ३ | २ | ५८ |
| ३ | ३ | ६६ | ३ | ३ | ८० |
| ३ | ४ | ४० | ३ | ४ | ८३ |
| ४ | १ | ८६ | ४ | १ | ७१ |
| ४ | २ | ५१ | ४ | २ | ६२ |
| ४ | ३ | ६५ | ४ | ३ | ९५ |
| ४ | ४ | ११९ | ४ | ४ | ९३ |
| पूर्णयोग | | १३०१ | पूर्णयोग | | १२८५ |

अस्मिन् प्रसङ्गेऽस्य व्याकरणस्य मूलसंशोधनकार्ये व्याख्यासम्पादनकार्ये च यथासमय साहाय्य विदधतो 'झा' इत्युपाख्यमैथिलपण्डितश्रीरघुनन्दनशर्मणस्तथा व्याख्यासंशोधनकार्येऽपूर्व

साहाय्यं वितरतो अस्मद्गुरुसंस्कृतविद्याव्यापकपण्डितश्रीरामचन्द्रशर्मणश्च महतीमुपकृतिं विस्मर्तुं न शक्नोमि।

प्रथमावृत्तौ षड्विंशतिसंख्याकानि वार्तिकानि निर्दिष्टान्यासन् तानि सर्वाणि द्वितीयावृत्तौ सूत्रेष्वन्तर्भावितानि। चत्वारि द्विशतपञ्च वार्तिकान्यत्रावृत्तौ नवीनानि विरचितान्यतस्तदपि महत्त्वपूर्णम्। अस्मिन् व्याकरणे परिभाषाप्रकरणे परिभाषात्मकसूत्राण्यपरिसंख्यातानि सन्ति। तदतिरिक्ता काश्चिदत्यावश्यका परिभाषाः परिभाषेन्दुशेखरप्रभृतिग्रन्थेभ्य परिगृह्यात्र सामञ्जस्यपूर्वकं वा नियोजितास्तत्प्रसङ्गे। ताश्चेमा—

| क्र० सं० | परि० | पृष्ठाङ्क |
|---|---|---|
| १ | एकं लक्षणं सहैव प्रवर्तेत | १३ |
| २ | क्वचिदेकदेशोऽप्यनुवर्तेत | १६ |
| ३ | एकदेशविकृतमनन्यवत् | २५ |
| ४ | अर्थवतो ग्रहणे नानर्थकस्य ग्रहणम् | ३० |
| ५ | प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् | ३१ |
| ६ | प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम् | ३१ |
| ७ | निमित्तविनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्ति | ५६ |
| ८ | निमित्तापाये नैमित्तिकस्याप्यपायः | १३६ |
| ९ | अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति | १३९ |
| १० | यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते | २०० |
| ११ | एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः | २१४ |
| १२ | सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् | २११ |
| १३ | असमानोऽपवादो विकल्पेन बाधकः | ३४८ |
| १४ | इत्यधिकारेषु आत्मसमानविधिना सि | ३६५ |

अर्द्धमागधीकोषनिर्माणसमय एव मानसमिदं निश्चितमासीदर्द्धमागधीभाषाया एकं व्याकरणमपि समयानुकूल्यं निर्मातव्यमस्तीति तदानीमेव शब्दरूपाणि धातुरूपाणि च तत्तदागमेभ्य संगृह्य शब्दसंकलनार्थं कोष निरमितानि। तत्र बहुला व्याकरणसामग्री कोषेन पृथोपलब्धा। कोषे च द्वात्रिंशदागमानां दशानां प्रकीर्णकग्रन्थानामोघनिर्युक्तिपिण्डनिर्युक्तिविशेषावश्यक प्रभृतीनां च ग्रन्थानां प्रायः सकला अपि शब्दाः संगृहीताः। व्याकरणस्य च कालावलम्बितत्वात् कल्पागमादिप्राचीनग्रन्थावलम्बित्वमपि तत एव समायातमिति सुविन्निसमेव भवतु पिपठिषूणां विन्दाद्य।

एतज्ज्ञापयितुं नात्यावश्यकता यत्क्वाचित्कशब्दानामर्थप्रतिपादने धातुप्रक्रियाप्रदर्शने च व्याकरणभूषणसार-व्युत्पत्तिवाद-शक्तिवाद-शब्दशक्तिप्रकाशिका-पाणिनीयव्याकरण-न्यायसिद्धान्त मुक्तावलिप्रभृतिपुस्तकानामपि साहाय्यं गृहीतं क्वचित्क्वचित्प्रसङ्ग इति तत्तत्पुस्तकनिर्मातृणामप्युपकृतिपरम्परा नाहं विस्मर्तुमिति।

यद्यप्येतद्व्याकरणरचनायां प्राथम्यात्सम्भवोऽस्ति स्खलनायास्तथापि सहृदया विद्वद्वरा हित बुद्ध्या सूचयिष्यन्ति तत्तत्स्खलनं तदाऽग्रिमावृत्तौ तत्संशोधनं भविष्यति। सुज्ञेषु किं बहुना।

स्थलम्: इन्द्रप्रस्थ (देहली) }
अक्षयतृतीया, सवत् १९९४ विक्रमी }

मुनिरत्नचन्द्र.

# जैनसिद्धान्तकौमुदीस्थविषयानुक्रमः ।

## पूर्वार्द्धम्



## उत्तरार्द्धम्

ॐ नमोऽर्हद्भ्यः

अर्थप्रकाशिकाव्याख्योपेता

# जैनसिद्धान्तकौमुदी

## ( अर्द्धमागधीव्याकरणम् )

प्रणम्य श्रीमहावीरं मोक्षमार्गप्रकाशकम् ।
रच्यते तत्त्वबोधाय जैनसिद्धान्तकौमुदी ॥

## अथार्थप्रकाशिका

श्रीपार्श्वपदपाथोजं नत्वा देवेन्द्रसेवितम् ।
कौमुद्या क्रियते वृत्तिः स्वोपज्ञार्थप्रकाशिका ॥१॥

प्रारिप्सितग्रन्थसमाप्तिपरिपन्थिप्रत्यूहव्यूहविघाताय विहितं नमस्कारात्मकं मङ्गलं शिष्टाचारपरिपालनार्थं ग्रन्थादौ निबध्नन् चिकीर्षितं प्रतिजानीते—प्रणम्येति । प्रणामं कृत्वे-त्यर्थः । प्रणामश्च स्वापेक्षयाधिकोत्कर्षबोधनानुकूलो व्यापारः स च करशिरोविलक्षणसंयोगरूपः । तादृशव्यापारजन्यज्ञानरूपफलाश्रयतया श्रीमहावीरस्य कर्मत्वम् । श्रीमहावीरमिति—महान् कषायोपसर्गपरिषहेन्द्रियादिरिपुनिवहजयादतिशायी वीरो विक्रान्तः । विक्रान्त्यर्थस्य वीरधातोर्वीरयति स्मेति विग्रहेण साधनात् । अथवा विशेषेणेरयति प्रापयति शिवं कल्याणं स्फेटयति वा कर्मेति वीरः महांश्चासौ वीरश्च महावीरः पूर्वापरेति बाधित्वा सन्महदिति समासः । प्रकृतशासनपतिश्चरमस्तीर्थंकरः । श्रियाऽलौकिकया शोभया सहितो महावीरः श्रीमहावीरस्तम् ।

मोक्षमार्गेति—मोक्षस्य कृत्स्नकर्मात्यन्तोच्छेदरूपस्य मार्गः साधनं सम्यग्ज्ञानादित्रयं तस्य प्रकाशकः प्रज्ञापकस्तम् । अनेनान्येच्छानधीनेच्छाविषयरूपस्य स्वतः प्रयोजनस्य साधकत्वात्स एव नमस्कार्य इति ध्वनितम् । रच्यत इति—मयेति शेषः रचना च स्वज्ञानं परान् बोधयितुं तदनुकूलवाक्यानां लिपिसन्निवेशविशेषः । तत्त्वबोधायेति—तत्त्वानि जीवाजीवादि पदार्थाः । तानि च जैनागमेष्वर्द्धमागधीभाषाया हेतुयुक्तिदृष्टान्तपूर्वकं प्रतिपादितानि । आगमभाषास्थपदानां साधुत्वासाधुत्वज्ञानं विना न भवति तत्तत्पदार्थानां यथार्थबोधः । पदानां साधुत्वासाधुत्वज्ञानजनकञ्च भवति तद्भाषाव्याकरणम् । अतस्तत्त्वबोधमुद्दिश्यैवास्य व्याकर

ग्रस्य रचनाप्रवृत्तिरिति भाव । जैनसिद्धान्तकौमुदीति—मोदयतीति मुत् कौमुदं कुमुद-श्चन्द्र तस्येयं कौमुदी चन्द्रिका 'चन्द्रिका कौमुदी ज्योत्स्नेत्यमर:।'' जैनसिद्धान्तानामागमादि प्रतिपाद्यपदार्थसार्थानां कौमुदी कौमुदी जैनसिद्धान्तकौमुदी पदार्थप्रकाशकत्वादिगुणैश्चन्द्रिकासादृश्यमस्या । अनेन ग्रन्थारम्भेऽवश्यप्रदर्शनीयमनुबन्धचतुष्टयमपि प्रदर्शितम् । तथा हि—अर्द्धमागधीभाषाज्ञानद्वारा तत्त्वजिज्ञासुरत्राधिकारी । भाषाज्ञानं सन्धिविभक्तिकारकसमासतद्धितधात्वनुरूपकृदन्ताद्यात्मकं विषय । भाषाज्ञानद्वारा तत्त्वबोध फलम् । प्रतिपाद्यप्रतिपादकभावश्च सम्बन्ध । ननु व्याकरणरूपस्यास्य कथं तत्त्वबोधजनकत्वं तत्र तत्त्वप्रतिपादनाभावादिति चेन्न तत्त्वप्रतिपादकागमभाषाज्ञानसम्पादनद्वारा तत्त्वबोधजनकत्वस्य सुविदितत्वात् । तथा च भाषाज्ञानं साक्षात्फलम् । तत्त्वबोधश्च परम्पराफलमिति विवेक ।

---

## अथ संज्ञाप्रकरणम् ।

संज्ञाया लाघवेन शास्त्रव्यवहारप्रयोजकतया तद्घटितत्वेन सर्वप्रकरणाङ्गतया पूर्वमेव तत्प्रकरणमाह—अथेति ।

### अ आ इ ई उ ऊ ए ओ स्वरा: ।१।१।८॥

स्पष्टम् ।

अ आ इति—अभेदानुकरणत्वादत्र न विभक्ति । संहिताया अविवक्षया च न सन्धि । अकारादे स्वरत्वेन सर्वत्र प्रसिद्धत्वेऽपि प्रकृतानामष्टानामेवात्रोपयोगितया तेषामेव तत्संज्ञा कृता एवमग्रे व्यञ्जनसंज्ञायामपि बोध्यम् ।

### कखगघङचछजझञटठडढणतथदधनपफबभमयरलवसहा व्यञ्जनानि ।१।१।९॥

एते व्यञ्जनसंज्ञा स्यु: ।

करेति—अकार सर्वत्र स्पष्टमुच्चारणार्थं । ननु स्वरविहीनानामपि व्यञ्जनानां वर्णान्तरसाहाय्येन यथाकथञ्चिदेकाकितया चोच्चारणमनुभूयत इति चेन्न । असहायतया स्पष्टत्वेन परश्रवणगोचरत्वस्यैवोच्चारणे निषेधात् । अत्रेतरेतरयोगो द्वन्द्व । व्यञ्जनसंज्ञाया विस्तरस्तु पूर्वमुक्तप्राय एव । अतएव षसयो संज्ञाया न प्रवेश ।

## अइउ ह्रस्वाः ।१।१।१४॥

एते ह्रस्वसञ्ज्ञाः स्युः ।

अईति—सन्ध्यभावादिविचारस्तु पूर्ववत् । अत्र व्याकरणे प्रकृतस्वरत्रयस्यैव ह्रस्वतया प्रदर्शनेन त्रयाणामेव ह्रस्वसञ्ज्ञा कृता । अत्र प्रत्येकस्वरस्य सञ्ज्ञा भवति न तु समुदायस्य तादृशप्रयोगासम्भवात् । न च समुदाये वाक्यपरिसमाप्तिरिति न्यायेन समुदायस्यैव सञ्ज्ञोचितेति वाच्यं प्रत्येकं वाक्यपरिसमाप्तिरिति न्यायस्यैवात्राश्रयणादुभयोर्व्यवस्थितविषयत्वात् ।

## आईऊ दीर्घाः ।१।१।१३॥

स्पष्टम् ।

आईति—अत्र न समासः किन्त्वभेदानुकरणत्वाद्विभक्तेरभावः । समासे तु समुदाये सञ्ज्ञापत्तिर्दुर्निवारा स्यात् समासस्य समुदाये शक्तत्वात् कथंचिद्वारणकल्पनाया वाक्यमेव वरं प्रत्येकं सञ्ज्ञासिद्धये । एवमेव सर्वत्रैतादृशस्थले बोध्यम् । शेषविचारस्तु पूर्ववत् ।

## कादिमान्ताः स्पर्शाः ।१।१।१५॥

स्पष्टम् ।

तत्र कादिङान्ता कवर्गः । चादिञान्ताश्चवर्गः । टादिणान्ताष्टवर्गः । तादिनान्तास्तवर्गः । पादिमान्ताः पवर्गः ।

कादीति—क आदिर्येषां ते कादयः । म अन्तो येषां ते मान्ताः । कादयो मान्ताश्च कादिमान्ताः पञ्चविंशतिवर्णाः स्पर्शाः उच्यन्ते । तत्रेति—तच्छब्दस्य प्रक्रान्तादिपरामर्शकत्वेन व्यञ्जनेष्वित्यर्थः । कादिङान्ता इत्यादि—कादयश्च ङान्ताश्च कादिङान्ताः—क ख ग घ ङ कवर्गशब्देन बोध्या एवमग्रेऽपि । वर्गसंकेतप्रदर्शनफलन्तु स्फुटीभविष्यत्यग्रे ।

## अन्त्यात्पूर्व उपधा ।१।१।२०॥

अन्त्यवर्णात्पूर्वो वर्ण उपधासञ्ज्ञः स्यात् ।

अन्त्यादिति—अन्त्यशब्देनान्त्यावयवो गृह्यते । अवयवत्वञ्च प्रस्तावाद्वर्णानामेवेत्यन्त्यवर्णो लभ्यते । तथा च यज्जातीयकोऽन्त्यस्तज्जातीयक एवान्त्यात्पूर्व इति पूर्वो वर्णो लभ्यते ।

## अनुस्वारः ।१।१।१०॥

अनुस्वारो व्यञ्जनसञ्ज्ञः स्यात् ।

अनुस्वार इति—व्यञ्जनानीत्यनुवर्तते । अर्थानुरोधाद्वचनविपरिणामः । अं इत्यत्र स्वरात्परो निगमानो बिन्दुरनुस्वार उच्यते । तस्य व्यञ्जनसञ्ज्ञाविधानफलं तु व्यञ्जनान्तरेण सह संयुक्तसञ्ज्ञासिद्धिः तेनोपदञ्ज्ञेयान्तो व्यञ्जनत्वप्रयोगे सति व्यञ्जनीभूतस्य पूर्वस्यानुस्वारस्य झयान्तामिति सूत्रेण लोपः सिद्ध्यति ।

## स्वराणामन्त्यादिष्टिः ।१।१।११॥

स्वराणां मध्ये योऽन्त्यः स आदिर्यस्य स टिसञ्ज्ञः स्यात् ।

स्वराणामिति—अत्र निर्धारणे षष्ठी तेन मध्ये इत्यस्य लाभः । सन्त्योऽपि स्वर एव ग्राह्यो न तु व्यञ्जनम् । सजातीयस्यैव निर्धार्यमाणत्वात् । अत एव गवां मध्येऽन्त्यमानयेति प्रयोगे प्रयुज्यमानो गामेवानयति न महिषान्यमिति । न हि विजातीयस्य निर्धार्यमाणत्वे षष्ठ्या अपि सम्भवः । अन्त्यादिरिति—यद्यप्यत्र सामान्ये नपुंसकमेवौचित्यं तथापि शब्दशास्त्रे शब्दस्यैव प्राधान्यं सूचयितुमध्याहृतशब्दरूपविशेष्यमपेक्ष्य पुंस्त्वस्यापि सम्भवेनाऽन्त्यादिरित्युक्तम् । तत्रादिः क्वचित्प्रधानः क्वचिद्व्यपदेशिकः यथा इन्दुधातोरुञ्प्रत्यये इन्दुभागस्य टिसञ्ज्ञा तत्रादिर्मुख्यः । स्थाधातोर्डञ्प्रत्यये आकारस्य टिसञ्ज्ञा तत्रादिर्व्यपदेशिकः असहायत्वात् ।

## अप्रयुज्यमानः सफल इत् ।१।१।१६॥

लौकिकप्रयोगेषु न प्रयुज्यमानः किञ्चित्कार्यं निधातुं प्रत्ययादावनुबद्धो वर्ण इत्सञ्ज्ञः स्यात् ।

अप्रयुज्यमान इति—इत्सञ्ज्ञकस्यापि प्रत्ययादौ प्रयुज्यमानत्वादप्रयुज्यमान इत्यसङ्गतमित्याशङ्क्याह प्रयोग इति । प्रकृतिप्रत्ययादेरपि प्रयोगत्वात्तत्र प्रयुज्यमानत्वस्यैव सत्त्वेन दोपस्तदवस्थ एवेत्याशङ्कायामाह—लौकिकेति । लौकिकस्य चार्थबोधनाय प्रयुक्तत्वं शास्त्रे तु शब्दानां शब्दपरत्वाददोषः । प्रकृत्यादावपि स्थायित्वाभावात् करिष्यमाणेत्सञ्ज्ञकस्योच्चारणं व्यर्थमित्याशङ्कायामाह—किञ्चित्कार्यं निधातुमुपात्त इति । अलौकिके प्रयोग इति शेषः । अलौकिकश्च साध्यावस्थापन्नप्रकृतिप्रत्ययादिः । किञ्चित्कार्यं—टित्त्वकित्त्वादि तत्सम्पादनेन साफल्यमस्य बोध्यम् ।

## प्रसक्तस्यादर्शनं लोपः ।१।१।६०॥

स्पष्टम् ।

प्रसक्तस्येति—प्राप्तस्येत्यर्थ न तु स्थितस्यैवेत्यर्थ । तेन स्वार्थकस्याविद्यमानत्वेऽपि "आसणाओ पासइ" इत्यादौ स्वार्थकान्तस्य शब्दस्य प्राप्त्यैव तदभावस्य लोपसञ्ज्ञाया पञ्चमी सिद्ध्यति अदर्शन—दर्शनाभाव । अभावार्थेऽव्ययीभाव ।

## इत ।३।४।५२॥

इत्सञ्ज्ञकस्य लोप स्यात् ।

इत इति—तीपि न्तस्येति सूत्राल्लोप इत्यनुवर्त्तते। नन्वित्सञ्ज्ञा विधाय लोपकरणापेक्षयेत्सञ्ज्ञकत्वेनोद्दिष्टाना लोप एव विधीयताम्। किं लोपशास्त्रस्य परमुखनिरीक्षणेनेति चेन्न टित्त्वादिकार्यसम्पादनायेत्सञ्ज्ञाया आवश्यकत्वात् ।

## स्वरादनन्तराणि संयुक्तम् ।१।१।११॥

स्वराव्यवहितानि व्यञ्जनानि सयुक्तसञ्ज्ञानि स्यु ।

स्वरादिति—जात्यपेक्षयैकवचन तेन स्वरद्वयादिव्यवधानेऽपि सयुक्तसञ्ज्ञा न भवतीति यद्यप्यव्यवहितानि सयुक्तानीत्यनेनापि स्वराव्यवहितानीत्यस्य लाभ सभवति विजातीयेनैव व्यवधानस्य प्रसिद्धतया व्यञ्जनाना स्वरेणैव व्यवधानसम्भवेन तेनैवाव्यवधानस्यापि लाभसम्भवात् । तथापि स्पष्टतया तत्प्रतिपादनायैव स्वरादित्युक्तम्। व्यञ्जनानीति–अनुस्वारो व्यञ्जनमिति सूत्राद्व्यञ्जनमित्यस्यानुवृत्ति । बहुत्वमत्राविवक्षित द्वयोरपि सयुक्तसञ्ज्ञादर्शनात् प्रत्येक तु न सयोगसञ्ज्ञा लक्ष्यानुरोधात्। आर्या दण्डयन्तामितिवत् समुदाये वाक्यपरिसमाप्ते ।

## आदेदोद् वृद्धि ।१।१।१२॥

आत् एत् ओत् इत्येते वृद्धिसञ्ज्ञा स्यु. ।

आदिति—अत्र पदत्रयम्। स्पष्टप्रतिपत्त्यर्थं तकारत्रयनिवेश । समुदायसञ्ज्ञावारणाप्रकारस्तु दर्शित एव । अत्रादेदोत्र सञ्ज्ञिन वृद्धि सञ्ज्ञा न तु विपरीतमनुवाद्यमनुद्दिश्य न विधेयमुदीरयेदिति वचनात्पूर्वोच्चारिता सञ्ज्ञिन परोच्चारिता सञ्ज्ञेति नियमात् ।

## अदिदुतामदाताविदीदेत उदूदोत सवर्णा ।१।१।२१॥

अदिदुता क्रमेण अदातौ इदीदेत', उदूदोतः सवर्णा भवन्ति ।

अदिदुतामिति—अश्च इश्च उश्च अदिदुतस्तेषाम । अश्च आश्च अदातौ । इश्च ईश्च एश्च इदीदेत । उश्च ऊश्च ओश्च उदूदोत । इति त्रय समुदाया अकारेकारो कारणा त्रयाणा क्रमेण सवर्णा भवन्ति । तथाचाकारस्याकाराश्चागविकारस्यैकारे-कारैकारा उकारस्योकारोकारौकारा सवर्णा भवन्तीति सिद्धम् ।

## वर्गेषु प्रथमद्वितीययो. प्रथमस्तृतीयचतुर्थयोस्तृतीय ।१।१।२२॥

कचटतपवर्गेषु कखयोश्चछयोष्टठयोस्तथयो' पफयो कचटतपा गघयोर्ज-झयोर्डढयोर्दधयोर्बभयो क्रमेण गजडदबा सवर्णा भवन्ति ।

वर्गेष्विति—कवर्गचवर्गटवर्गतवर्गपवर्गेष्वित्यर्थ । प्रथमत्वादिव्यवहारश्च मातृकावर्गपाठापेक्षया बोध्य । अदिदुतामिति सूत्रात्सवर्णा इत्यस्यानुवृत्ति क्रमेणेति तथा च कखयो ककारश्चछयोश्चकारष्टठयोष्टकारस्तथयोस्तकार पफयो पकार एव गघयोर्गकारो जझयोर्जकारो डढयोर्डकारो दधयोर्दकारो बभयोर्बकार सवर्ण इति सिद्धम् ।

## विशेषण तदन्तस्य ।१।१।२३॥

विशेषण तदन्तस्यापि सज्ञा स्यात् ।

विशेषणमिति—अत्र शास्त्रे विशेषणत्वेन यदुपादीयते तदेव विशेषणपदे-नाभिधीयते । विशेषण च व्यावर्तकम् । तथा च नाम्न इत्याद्यनुवृत्तौ तद्विशेषण मदादिपद तदन्तस्य सज्ञाकरणेनादन्तादिबोधक भवति । अतएव तत्तत्स्थलेऽभे दान्वय सम्पद्यते यथाऽदित पुस्त इत्यादिसूत्रेऽत इत्यनेनादन्तस्य ग्रहणे तेना-नुवृत्तनामपदस्याभेदान्वयेऽन्ताभिन्ननाम्न परस्येत्याद्यर्थो लभ्यते ।

## सुप्त्यादि विभक्ति ।१।१।२८॥

सुप् त्यादि च विभक्तिसज्ञे स्त ।

सुप्त्यादीति—अत्र सुप्पदेनौदादीस्वन्तो गृह्यते । त्यादिपदेनाज्ञाप्रवर्त्तना-वर्त्तमानभूतभविष्यदर्थका प्रत्यया । अन्यत्र तु त्यादिपदेन तिन्तिसिद्मिमव एव गृह्यन्ते तेन त्यादिपदेनाज्ञाद्यर्थक प्रत्ययमुपादाय तस्मिन् परे विधीयमानप्रत्यया न विधेया इति सिद्धम् । उक्तसुप्त्यादेर्विभक्तिसज्ञाया फलन्तु 'अविभक्ति नामेति' सूत्रेण तदन्तस्य नामसज्ञानिषेध तत्र विभक्तिरहितस्यैव नामसज्ञाविधानात् ।

## इति सञ्ज्ञाप्रकरणम् ।

इतीति—सन्धिकार्योपयोगिनीनां व्यापिकानां च सञ्ज्ञानां प्रकरणं समाप्तमित्यर्थः ।

---

# अथ परिभाषाप्रकरणम् ।

## स्वरस्य ह्रस्वदीर्घवृद्धयः ।१।१।१॥

ह्रस्वदीर्घवृद्धिशब्दैर्यत्र ह्रस्वदीर्घवृद्धयो विधीयन्ते तत्र स्वरस्येति पदमुपतिष्ठते ।

स्वरस्येति—इदञ्च न विधायकं तत्तत्सूत्रेणैव ह्रस्वादिसिद्धेर्नचानेनैव ह्रस्वादिसिद्धौ माऽस्तु तत्तत्सूत्रमिति वाच्यम् । सामान्यतया तद्विधाने ह्रस्वस्वराणामेव विलयापत्तेः । नापि नियामकम् । नियामकत्वं हि द्विविधं स्वरस्यैव ह्रस्वदीर्घवृद्धय इत्येकम् । स्वरस्य ह्रस्वदीर्घवृद्धय एवेति द्वितीयम् । तत्र व्यञ्जनस्य तदसम्भवादाद्यं व्यर्थम् । द्वितीयमपि न सम्यक् स्वरलोपादिविधायकस्य वैयर्थ्यापत्तेः । नचेष्टापत्तिरिति वाच्यम् । बहुलक्ष्यासिद्ध्यापत्तेः । नापि सञ्ज्ञासूत्रं तत्तत्सूत्रेणैव स्वरस्य ह्रस्वादिसञ्ज्ञासिद्धेः । न चानेनैव तन्निर्वाहः सम्भवति स्वरसामान्यस्य सञ्ज्ञात्रयकरणेऽनिष्टापत्तेः । नापि प्रतिषेधकं नञोऽश्रुतेः । नाप्यधिकारसूत्रमुत्तरत्रानुवृत्त्यभावाद्वैयर्थ्यापत्तेः । नाप्यतिदेशः वतिघटितत्वाभावात् किन्तु परिशेषात् परिभाषासूत्रमिदम् । षड्विधान्येव हि सूत्राणि—'सञ्ज्ञा च परिभाषा च विधिर्नियम एव च । अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम् ॥' इत्युक्तेः । तथाच ह्रस्वदीर्घवृद्धिशब्दानां ह्रस्वदीर्घवृद्धिशब्दैर्विहितह्रस्वदीर्घवृद्धिषु लक्षणया ह्रस्वदीर्घवृद्धिशब्दैर्यत्र ह्रस्वदीर्घवृद्धीनां विधानं तत्र स्वरस्येति पदमुपतिष्ठते इत्यर्थसिद्धौ पदोपस्थापकत्वमस्य सिद्ध्यति इतिपदस्योपतिष्ठत इति पदस्य चाध्याहारः । ह्रस्वदीर्घवृद्धिशब्दैरित्यस्याभावे भगवया भगवञो इत्यादाविणस्मयोर्निधीयमानस्याकारौकारस्यापि दीर्घवृद्धिरूपत्वेन तत्रापि स्वरस्येति पदोपस्थित्या इणस्सयोः स्वरस्यैवादेशापत्तेः ।

## प्रत्ययस्य लोप सर्वस्य ।१।१।२॥

### प्रत्ययस्थानिको लोपः सम्पूर्णस्थाने बोध्य ।

प्रत्ययस्येति—षष्ठीनिर्दिष्टत्वादन्त्यस्य प्राप्ताविद सूत्रम् । तथा चान्त्यस्य षष्ठ्या इति सूत्रस्यापवाद । अत एव हेरत इति सूत्रेण विधीयमानो लोपोऽन्त्यभागस्य न । किन्तु हे समुदायस्यैव । तत्रापि तात्पर्यं इत्यपि बोध्यम् । अत एव यत्र प्रत्ययस्यान्त्यभागलोपे तात्पर्यमस्ति तत्र न समुदायलोपशङ्कावसर । तात्पर्यज्ञान च प्रकरणादिना बोध्यम । ननु अवयवे प्रत्ययत्वाभावेन तत्स्थानिकलोपस्य सुतरा प्रत्ययस्थानिकत्वाभावेनैवास्य सूत्रस्याप्राप्त्या व्यर्थमेवेद सूत्रमिति चेन्न । न ह्यवयवेऽपर्याप्तस्य समुदाये पर्याप्तिरस्तीति नियमेनावयवेऽपि प्रत्ययत्वपर्याप्तिसम्बन्धस्य सत्त्वेन प्रत्ययस्थानिकत्वानपायात । तथा च प्रत्ययावयवस्य प्राप्तो लोप तदवयवघटितसमुदायस्यैव स्यादिति फलितार्थ । ( एतेन प्रत्ययस्थानिक इत्यस्य प्रत्ययत्वपर्याप्तस्थानिकत्व इत्यर्थ तथा च प्रत्ययावयवस्य लोपबाधनार्थमिद सूत्रमित्यमगतमेव प्रत्ययावयवे प्रत्ययत्वस्याभावेन तत्रैतत्सूत्राप्रवृत्ते पर्याप्तिसम्बन्धेन समुदाय एव प्रत्ययत्वस्य सत्त्वादित्यपास्तम् )। अवयवे पर्याप्त्याऽवर्तमानस्य धर्मस्य समुदायेप्यसम्भवात् प्रत्येकमिलितस्यैव समुदायरूपत्वात् । तदुक्त महाभाष्ये "एकस्तिलस्तैलदान यत समर्थोऽतस्तत्त्वार्यपि ददाति । एका च सिकता न समर्थाऽतस्तत्त्वार्यपि न ददातीति ।' तथा च प्रत्येकावृत्ते समुदायावृत्तित्वमिति सिद्धम । प्रत्येकापर्याप्तस्यापि समुदाये पर्याप्तिरस्ति । अन्यथैकस्मिन् भृत्येऽवर्तमानस्य शिबिकावहनसामर्थ्यस्य तत्समुदायेपि वृत्तित्व न स्यादिति पक्षाश्रयणे तु प्रत्ययपदस्य प्रत्ययावयवे लक्षणया प्रत्ययावयवस्थानिकलोप तद्घटितसमुदायस्यैवेत्यर्थो बोध्य ।

## स्वराणामन्त्यात्परो मित् ।१।१।४॥

### स्वराणा मध्ये योऽन्त्यस्वरस्तस्मात्परो मिदागम स्यात् ।

स्वराणामिति—निर्धारणे षष्ठी । तेनान्त्यस्वर इति लभ्यते सजातीयस्यैव निर्धार्यमाणत्वादित्युक्तमेव । मकार इत् यस्मिन्निति मित् । इणाणेद्वीमीमूना ममिति सूत्रेणेणादेममागमे विहितेऽनेन तस्यान्त्यस्वरात्पर इति स्थाननिश्चये जिणेणमित्यादि सिद्ध्यति । आगमस्य विद्धावेप्यन्त्यावयवत्वसिद्धौ व्यर्थमेतदिति तु न शङ्क्य लभादेर्ममागमे सफलमेतत् । तत्र ममागमे भकारस्य स स्यात्तथाच लभेत्यादिरूपासिद्धे ।

## समानयोर्विरोधे परम् ।१।१।५॥

### तुल्यबलयोर्युगपदेकत्र प्रसङ्गे परं कार्यं स्यात् ।

समानयोरिति—समानस्तुल्यबलः अन्यत्रान्यत्र लब्धावकाश इति यावत् । विरोध एकत्र तयोर्द्वयोर्युगपत्प्राप्तिः । एतेन निरवकाशस्याधिकबलस्य व्यवच्छेदः कृतः । तथा तुल्यबलस्याविरुद्धस्य च निवारणं कृतम् ।

## अन्त्यस्य षष्ठ्याः ।१।१।६॥

### षष्ठ्यन्तस्य क्रियमाणं कार्यमन्त्यस्य बोध्यम् ।

अन्त्यस्येति—कार्यमित्यध्याहृतम् । षष्ठ्या इत्यत्र स्थान्यादेशभावः षष्ठ्यर्थः । तेन क्रियमाणमिति लभ्यते प्रत्ययग्रहणे तदन्तग्रहणमिति परिभाषया षष्ठ्यन्तस्येति लभ्यते । यत्र स्थानषष्ठी विद्यते तत्रैवास्य सूत्रस्य प्रवृत्तिर्न त्ववयवावयविभावार्थकषष्ठीस्थले । तेनागमेऽस्य न प्रवृत्तिः । षष्ठ्यन्तस्येत्यस्य षष्ठ्यन्तपदबोध्यस्येत्यर्थः ।

## अनेकवर्णसित् ।१।१।३॥

### अनेकवर्णादेशः सिदादेशश्च सर्वस्य बोध्यः ।

अनेकवर्णेति—आदेश इत्यध्याहारलब्धः । अन्त्यस्य षष्ठ्या इत्यस्यापवादः । अनेको वर्णो यत्रेति बहुव्रीहिः । सकार इद्यत्र स सित् अनेकवर्णश्च सिच्चेति समाहारद्वन्द्वः तेनैकवचनं सिद्ध्यति । न चेतरेतरयोगेऽपि सौत्रत्वादेकवचनं सिद्ध्यतीति वाच्यम् । सिद्धगत्यैव निर्वाहे सौत्रत्वकल्पनाया व्यर्थत्वात् । सर्वस्येति पूर्वसूत्रादनुवर्तते ।

## टकितावाद्यन्तौ ।१।१।७॥

### टित्कितौ यस्य विहितौ तस्याद्यन्तौ भवतः ।

टकिताविति—टश्च कश्च टकौ । टकावितौ ययोस्तौ टकितौ । आदिश्च अन्तश्चाद्यन्तौ । टकारेऽकार उच्चारणार्थः । अत्र क्रमेणान्वयाट्टित्कार्यमाद्यवयवो भवति कित्कार्यमन्त्यावयवो भवति । ननु एकधर्मावच्छिन्न एकरूपेणैकसम्बन्धेनान्वयरूपस्य साहित्यस्यात्राभावेन कथं द्वन्द्वसम्भव टित आदौ कितोऽन्तेऽन्वयादिति चेत्सत्यम् । 'शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जये'त्यादौ लोके समसंख्यानां यथासंख्येनैवान्वयस्य दृष्टत्वेन व्याकरणेऽपि तथैव सिद्धौ

पाणिनीयतन्त्रे यथासंख्यसूत्रारम्भसामर्थ्याद् व्याकरणे साहित्याभावेऽपि द्वन्द्वो भवतीति ज्ञापनात् ।

इति परिभाषाप्रकरणम् ।

---

# अथ स्वरसन्धिप्रकरणम् ।

## वृद्धिरत स्वरे परस्य सवर्णः ।३।२।३०॥

अकारात्स्वरे परे पूर्वपरयोः परस्य सवर्णो वृद्धिरेकादेशः स्यात् । जिणेसरो । चाउलोदग । समणोवासगो ।

वृद्धिरिति—पूर्वसूत्रात्पूर्वपरयोरित्यस्यानुवृत्तिः । विशेष्यानुरोधात् सवर्णस्य क्लीवत्वम् । जिण+ईसरो इत्यत्र पूर्वपरयोरकारेकारयोः स्थाने परस्येकारस्य सवर्णो वृद्धिरेकारः । आकारादेर्वृद्धित्वेऽपि नेकारसावर्ण्यमिति न जिणासरो अपितु जिणेसरो । चाउल+उदगमित्यत्रोकारस्य सवर्णो वृद्धिरोकारः । एवं समण+उवासगो इत्यत्रापि ।

## अदिदुत सवर्णे दीर्घः ।३।२।३१॥

अकारादिकारादुकाराच्च सवर्णे स्वरे परे पूर्वपरयोर्दीर्घ एकादेशः स्यात् । गमणागमणे । अईति । भाणूदयो ।

अदिदुत इति—अत्र समाहारद्वन्द्वः । अत एवैकवचनम् । तपरकरणमसन्देहार्थं न तु समानकालग्रहणार्थम् । तेन दीर्घाणामप्याकारादीनां ग्रहणम् । एकारादेरपीकारादिसावर्ण्यात्तस्मिन्परे पूर्वपरयोर्दीर्घ एकादेशः स्यादित्यत स्वरादित्यनुक्त्वाऽदिदुत इत्युक्तम् । गमणागमण इति—अत्राकाराकारयोः स्थाने दीर्घ एकादेशः । एवं अइ+इति भाणु+उदयो इत्यत्रेकारयोरुकारयोश्च स्थाने दीर्घादेशः ।

## स्वरयोरव्यवधाने ।३।४।२१॥

स्वरयोर्व्यवधानाभावे प्रकृतिभावो बहुल स्यात् । अअगरो ।
अईई । अइही । अउज्झा । अइयारो । पजलिउडा ।

स्वरयोरिति—प्रकृतिभावो बहुलमिति पूर्वसूत्रादनुवर्त्तते । बाहुल्यञ्च "कचित्प्रवृत्ति कचिदप्रवृत्ति कचिद्विभाषा कचिदन्यदेव । विधेर्विधान बहुधा समीक्ष्य चतुर्विध बाहुलक वदन्ति" । बाहुलकमित्यत्र स्वार्थे कञ् तेन बहुल-मित्यर्थ । तथा च रूढशब्दघटकस्वरस्य तद्घटकस्वरेण नित्य प्रकृतिभाव । समासादौ त्वमवर्णयो स्वरयोर्यथाप्रयोग स । सवर्णयोस्तु प्रायो दीर्घ एव । असवर्णेऽपि प्रायोऽत स्वरे परे वृद्धिरेव । केवलमिकारोकाराभ्यामेवासवर्णे स्वरे परे प्राय प्रकृतिभाव ।

## लोपोऽन्यतरस्य ।३।४।२४॥

स्वरयोरव्यवधानेऽन्यतरस्य लोपो बहुल स्यात् । इकसीई । तहत्ति ।
तेसी । तत्थिम । नोवलभामह । रमामह । जिणामह । नस्मामह ।

लोप इति—अत्रानुक्तस्य पूर्वसूत्रादनुवृत्ति । अन्यतरस्येति—पूर्वस्य वा परस्येत्यर्थ । प्रयोगेषु यथा यथोपलभ्यते तथा तथा पूर्वस्य वा परस्येति निर्धार्यं तेन विनिगमनाविरहाद्विपरीतलोपस्तु न शङ्क्य । इक+असीई । तह+इत्ति । ते+असी । इत्युदाहरणत्रये परस्य स्वरस्य लोप । तत्थ+इम । दस० ६, ९, नोवलभामि+अह । उत्त० १९, १३, रमामि+अह । उत्त० १९, १४, जिणामि+अह । उत्त० २३, ३६, नस्सामि+अह । उत्त० २३, ६१, इत्युदाहरणपञ्चके पूर्वस्य लोप ।

## पूर्व एकः पूर्वपरयोः ।३।२।२५॥

इदुतोरमवर्णे स्वरे परे पूर्वस्य सजातीय आदेशः स्यात् ।
पल्लको । समन्निता ।

पूर्व इति—पूर्वस्येति पूर्वसूत्रादनुवर्त्तते । इदुतोदित्यत्र तकार स्पष्टार्थो न तु दीर्घादिनिवृत्त्यर्थ । तेनेदुतोरित्यनेन ह्रस्वदीर्घयोरिकारेकारयोरुकारोकार-योश्च ग्रहणम् । पूर्वशब्देनोपात्तत्वात्स्थान्यव्यवहितपूर्वस्यैव बोध्यम् । तेन पूर्व-शब्देन यत्किञ्चिदादाय न पकारादिसदृशस्यापत्ति । साजात्यञ्च पूर्ववर्णवृत्त्यानु-पूर्व्या न तु वर्णत्वादिना तेन नापत्तितादवस्थ्यम् । बाहुलकात्पजलिउडेत्यादौ

प्रकृतिभाव एव । पति+अक्को इत्यत्र इकारोत्तरवर्णाभावात् इकारादेशः । समनु+इतो इत्यत्र नकारोत्तरवर्णाभावात् नकारादेशः ।

## समानयो पूर्वस्य सवर्ण ।३।२।२२॥

समानयोर्द्वयोरव्यवधाने पूर्वस्य स्वसवर्ण आदेशः स्यात् । अब्भुद्देमि ।

समानयोरिति—सदृशयोरित्यर्थः । साम्यञ्चानुपूर्व्या तथा चैकानुपूर्वी वर्णद्वयस्याव्यवधानमित्यर्थः । पदव्यवच्छेदार्थं पूर्वेति । पूर्वस्येति स्थानषष्ठी पूर्वस्य स्थान इत्यर्थः । सवर्ण इति कस्य सवर्ण इत्याकाङ्क्षायामाह—स्वसवर्ण इति । स्थानिना सह तत्सिद्धमस्यन्तमत्यासत्तिसवर्ण एव भवतीति भावः । द्वयमिति फलितार्थं व्यञ्जनत्रयसमभिव्याहाराभावात् । सावर्ण्यञ्च पर्योरिति सूत्रे दर्शितम् । अभि+उद्देमि इत्यत्रैकारस्य बकारे जाते पूर्वभकारस्य सवर्णो बकारः ।

## तरहेभ्यश्चजझा इदुतोरसवर्णे स्वरे ।३।२।२४॥

तकाररेफहकारेभ्यः परयोरिदुतोः क्रमेण चजझा आदेशाः स्युरसवर्णे स्वरे परे । पच्चप्पिणइ । पज्जुवासणा । अज्झयणं ।

तरहेभ्य इति—असवर्ण स्वर इति स्थान्यादेशानां यथासंख्यत्वाभावेऽपि निमित्तादेशानां यथासंख्यत्वेन क्रमेणेति लाभः । तथा च तकारात्परयोरिदुतोश्चकारः । रेफात्परयोर्जकारः । हकारात्परयोर्झकार इत्यर्थः । पति+अप्पिणइ इति प्रथमोदाहरणेऽनेनेकारस्य चकारे तकारस्य परसवर्णः । परि+उवासणेति द्वितीये इकारस्य जकारे रेफस्य परसवर्णः । अहि+अयणमिति तृतीये इकारस्य झकारे हकारस्य परसवर्णे झकारः ।

## सिस्सादिषु संयुक्तस्य वा तस्मिन्पूर्वस्य दीर्घ ।४।१।११॥

एषु संयुक्तस्यादेर्लोपो वा तस्मिन् सति पूर्वस्वरस्य दीर्घः स्यात् । सीसो, सिस्सो । दूसहो, दुस्सहो, दुस्सहो । णीणेइ । वीसमइ, विस्समइ । आमासिअं । आसो, अस्सो । आसत्थो, अस्सत्थो । आभक्खाण, अब्भक्खाणं ।

सिस्सादिष्विति—'चोरवणिग्भ्या'मिति सूत्रादादेरित्यस्य 'लोपोऽन्यतरस्ये'ति सूत्राल्लोप इत्यस्य चानुवृत्तिः । सिस्सादिषु—सिस्सादिगणपठितेषु शब्देषु धातुषु च सिस्सो, दुस्सहो, णिण्णेइ, विस्समइ, अस्सामिअ, अस्सो, अस्सत्थो, अब्भक्खाण, मणुस्सो, लुक्सो, अमावस्सा, जिब्भा एते सिस्सादयः ।

आकृतिगणोऽयम् । सूत्रस्यैकस्मिन्प्रयोगे सकृत्प्रवृत्तत्वात्सकृल्लोपदीर्घयो प्रवृत्तौ न पुनस्तथा । तेनाभक्खाणमित्यादिषु आभक्खाणमित्येव रूप न स्वाभाग्याणमित्यपि । शास्त्रेषु तथानुपलब्धे प्रयोगानुसारित्वाश्च सूत्रप्रवृत्ते ।

## स्वरादस्य यड् बहुलम् ।४।१।५६॥

स्वरात्परयोरकाराकारयोर्यडागमो बहुल स्यात् । विपरियासो, विपरिआसो । पलियको, पलिअको ।

स्वरादिति—अकारेणाकारस्यापि ग्रहणादाह अकाराकारयोरिति । विपरि + आसो इति स्थिते इकारात्परस्याकारस्य यडागमे टित्त्वादाकारस्याद्यवयवत्वे विपरियासो । यडागमाभावे विपरिआसो । एव पलि + अको इत्यत्र यडागमे पलियको पक्षे पलको ।

## स्वराद्यस्य स्वरे ।३।४।२५॥

स्वरात्परस्य यकारस्य लोपो बहुल स्यात् स्वरे परे । जिइदिए । गइगो ।

स्वरादिति—बहुल लोप इत्यनयो पूर्वसूत्रादनुवृत्ति । जिय + इदिए इत्यत्रेकाराकारयोर्मध्ये स्थितस्य यकारस्य लोप । गय + इदो इत्यत्राकारद्वयमध्यस्थितस्य यकारस्य लोप । यलोपे सत्यवशिष्टस्याकारस्य लोपोऽन्यतरस्येति सूत्रेण लोप ।

## संयुक्ते ।३।३।२॥

सयुक्ते परे पूर्वस्य स्वरस्य ह्रस्वो बहुल स्यात् । अक्कोसइ । किण्णो । पत्त । भारियत्ता । गच्छिज्जा । गच्छेज्जा । हुज्जा । होज्जा ।

सयुक्त इति—बाहुलकादुदाहरणचतुष्टये नित्य ह्रस्व । अन्तिमोदाहरणद्वये विभाषया ह्रस्व । ह्रस्वो बहुलमित्यनयो पूर्वसूत्रादनुवृत्ति । स्वरस्य ह्रस्वदीर्घवृद्धय इति परिभाषया स्वरस्येति लाभ । पूर्वस्येति फलितार्थ । आ + कोसइ=अक्कोसइ । की + ण्णो=किण्णो । पा + त्त=पत्त । भारिया + त्ता=भारियत्ता । गच्छ + एज्जा=गच्छेज्जा । हो + ज्जा=हुज्जा, होज्जा ।

इति स्वरसन्धिप्रकरणम् ।

# अथ व्यञ्जनसन्धिः ।

## अहे व्यञ्जनस्य परस्य ।३।२।२३॥

हभिन्ने व्यञ्जने परे पूर्वव्यञ्जनस्य परसवर्ण आदेशः स्यात् । मक्कारो । उक्कसो । निच्चरइ । इड्ढी ।

अह इति—न ह अह तस्मिन् हभिन्न इत्यर्थः । अत्र लाघवात् नञ पर्युदासार्थो गृह्यते न तु प्रसज्यप्रतिषेधार्थः । नञः क्रिययाऽन्वयेनाऽसमर्थसमासकल्पनेन च गौरवात् । पर्युदासो भेदः सादृश्यञ्च तथा च हभिन्न हसदृश इत्यर्थलाभः । सादृश्यञ्च व्यञ्जनत्वेनेत्यत आह हभिन्ने व्यञ्जने परे । पूर्वस्येति सवर्ण इति च पूर्वसूत्रादनुकृष्येते । अहे इति किम् ? । तुम्हे अम्हे इत्यादौ मकारस्य हकारो माभूदिति । सत्+कारो । उत्+कसो । निर्+चरइ । इत्युदाहरणत्रये पर एव परसवर्णः । इध्+ढी इत्यत्र तु डकारः ढकारस्य सवर्णः ।

## त्रयाणाम् ।४।१।१२॥

त्रयाणां व्यञ्जनानां संयुक्तस्यादेर्लोपः स्यात् । निच्छुभइ । पुट्ठो ।

त्रयाणामिति—लोपोऽन्यतरस्येति सूत्राल्लोपः । चोरवणिगुभ्यामित्यत आदेः । सिस्सादिष्विति सूत्रात्संयुक्तस्येत्येतत्पदत्रयमनुकृष्यते । व्यञ्जनानामिति विशेष्यं विशेषणबलाल्लभ्यते । शास्त्रेषु व्यञ्जनद्वयस्यैव संयोग उपलभ्यते । अतो यत्र त्रयाणां व्यञ्जनानां संयोगस्तत्र त्रयाणामादिव्यञ्जनस्य लोप इत्यर्थः । निर्+च्छुभइ इत्यत्रादिव्यञ्जनस्य रेफस्य पुच्छ्+ठो इत्यत्रादिव्यञ्जनस्य चकारस्य च लोपः ।

## अपूर्वस्य ।४।१।१३॥

संयुक्तस्यादेर्लोपः स्यात् संयुक्तमपूर्वं चेत् । कमइ । किणेइ । अपूर्वस्य किम् । निक्कमइ । विक्केइ ।

अपूर्वस्येति—पूर्ववत्पदत्रयस्यानुवृत्तिः । अपूर्वस्येत्यत्र न पूर्वो यस्मात्तदपूर्वमिति विग्रहस्तेन संयुक्तमपूर्वं चेदिति फलितार्थः । नि+क्कम इत्यत्र संयुक्तस्य निपूर्वकत्वात् वि+क्केइत्यत्र विपूर्वकत्वाच्च न लोपः ।

## दो हो धः ।३।४।६।।

दकारात्परस्य हकारस्य धकारः स्यात् । उद्धरो ।

द इति—द ह ध इति पदत्रय क्रमेण पञ्चम्यन्त षष्ठ्यन्त प्रथमान्तञ्च । उद्+हर इत्यत्र हकारस्य हभिन्नत्वाभावादहे व्यञ्जनस्येति सूत्रस्याप्राप्तावनेन हकारस्य धकारो विधीयते । अहणमित्यादिषु अकारात्परस्य माभूदिति प्रथम पदम् ।

## उद. सश्छो वा ।३।४।४।।

उद. परस्य सकारस्य छकारो वा स्यात् । उच्छाहो । उच्छयो । पक्षे उस्साहो । उस्सयो ।

उद इति—उद स छ इति पदत्रय क्रमेण पञ्चम्यन्त षष्ठ्यन्त प्रथमान्तञ्च । उद उदुपसर्गादित्यर्थ । उद्+साहो इत्यत्र विशेषविहितत्वान्निरवकाशत्वाच्च सकारस्य छकारस्ततोऽहे व्यञ्जनस्येतिसूत्रेण दकारस्य परसवर्णश्चकार । एव उद्+सयो इत्यत्रापि । पक्षे छकारस्य वैकल्पिकत्वात्तदभावपक्षेऽहे व्यञ्जनस्येति दकारस्य परसवर्णे सकार ।

## वर्णानामभावोऽवसानम् ।१।१।१८।।

स्पष्टम् ।

वर्णानामिति—यदनन्तर कोऽपि वर्णो नास्ति तादृश पदस्य वाक्यस्य वाऽन्तोऽवसानमित्युच्यते । सञ्ज्ञासूत्रमिदम् । अस्य फलन्तु म्नोरनुस्वार इत्यत्रानुपदमेव व्यक्तीभविष्यति ।

## म्नोरनुस्वारोऽवसानव्यञ्जनयो. ।३।४।१।।

अवसाने व्यञ्जने च परे मकारनकारयोरनुस्वारः स्यात् । निओइउ । ससमरइ । अच्छंति ।

म्नोरनुस्वार इति—म्नोरिति षष्ठीद्विवचनम् । वर्णोपरि बिन्दुरनुस्वार उच्यते । नन्ववसानस्याभावरूपत्वात्परत्वव्यवहारो न स्यादिति चेत्सत्यम् । बुद्धिकृतपरत्वव्यवहारस्य तत्रापि सम्मतत्वात् । निओइउ इत्यवसानस्योदाहरणम् । सम्+सरइ=ससरइति । व्यञ्जनस्योदाहरणम् । अच्छ+न्ति इत्यत्र तकाररूपव्यञ्जने परे नकारस्यानुस्वार । अहे व्यञ्जनस्येत्यस्यापवादभूतमिदम् ।

## स्वरे वा ।३।४।२। *

मकारस्यानुस्वारो वा स्यात्स्वरे परे ।
कुसु अरं च उसभमजिअं च ।

स्वर इति—मोऽनुस्वार इति पूर्वसूत्रादनुवर्त्यते । क्वचिदेकदेश इति न्यायेन । कुसुम्+अरं चेत्यत्राकारे परे मकारस्यानुस्वारो जात । पक्षे कुसुमरं चेत्यपि । उसभम्+अजिअं चेत्यत्र मकारस्यानुस्वाराभाव प्रदर्शितो वैकल्पिकत्वात् । पक्षेऽनुस्वारोऽपि ।

## तस्य स्पर्शेषु तद्वर्गपञ्चम ।३।४।३।

स्पर्शेषु परेष्वनुस्वारस्य परवर्णवर्गस्थः पञ्चमो वर्ण आदेशो वा स्यात् । मङ्कमइ । सञ्चरइ । तण्डीयो । मन्तपइ । मम्पावेइ । पक्षे संकमइत्यादि ।

तस्येति—तच्छब्दस्य पूर्वपरामर्शकत्वाद्विधीयमानोऽनुस्वार परामृश्यते । स्पृशन्ति स्वरस्थान स्पष्टतयेति स्पर्शा कादयो मान्ता वर्णा पञ्चविंशतिस्तेषु परेष्वित्यर्थ । तद्वर्गेति द्वितीयतच्छब्देन स्पर्शवर्ण परामृश्यते । तेन स्पर्श रूपपरवर्णो लभ्यते तस्य यो वर्ग कवर्गादि तत्र स्थित पञ्चमो वर्ण ङकारादि मोऽनुस्वारस्यादेशो वा स्यादित्यर्थ । सम्+कमइत्यत्र मोऽनुस्वार इति सूत्रेणानुस्वारेऽनेनानुस्वारस्य परवर्णवर्ग कवर्गस्तस्य पञ्चमो वर्ण ङकारो जात । सचरईत्यत्र ञकार । सदीणो इत्यत्र णकार । सतपईत्यत्र नकार । सपावेईत्यत्र मकारश्च । पक्षे पञ्चमवर्णादेशाभावेऽनुस्वारस्यानुस्वार एव तिष्ठतीति भाव ।

## अनुस्वारस्य णमि वा ।४।१।३९।

अनुस्वारस्य लोपो वा णमि परे । अहण । अहण्ण । तेमिण । तेमिण्ण ।

अनुस्वारस्येति—लोप इत्यनुवर्त्तते । णमित्यव्यय वाक्यालकारे वर्त्तते । अह+णमित्यत्रानेनानुस्वारलोपे अहण । लोपाभावे तस्य स्पर्शेष्वित्यनेन वर्गपञ्चमवर्णादेशे अहण्ण । एव तेमिणमित्यत्रापि ।

## च्चे जादिभ्य ओ ।३।४।४५।

जादिशब्देभ्यः परस्य प्रथमैकवचनस्य लोप स्यात् च्चे परे । जच्चेव । तच्चेव । जीवच्चेव । अजीवच्चेव ।

च्चे इति—लोप इत्यस्यानुवृत्ति । ओरित्युशब्दस्य पञ्चम्येकवचनम् । उश्च प्रथमैकवचनप्रत्यय । च्चेत्यव्यय समुच्चयादौ । ज आदिर्येषा ते जादयस्तेभ्य । ज, त, जीव, अजीव इत्यादयो जादय । आकृतिगणोऽयम् । ज, उ, चेवेत्यत्रोलोपे जच्चेव । एवमन्यत्रापि ।

इति व्यञ्जनसन्धिप्रकरण समाप्तम् ।

---

# अथ स्वरविकारप्रकरणम् ।

## इ· किवणादीनां मध्यस्य स्वरस्य ।३।३।४२॥

किवणादिगणपठिताना मध्यस्वरस्येकारो वा । किविणो, किवणो ।
चरिम, चरम । पुरिसो, पुरुसो । भुइगो, भुअगो ।

इरिति—बहुलाधिकाराद्विकल्पलाभ । बहुलशब्दस्थाने तदर्थकवाशब्दोपादानेन वैकल्पिकमेवेदमिति लभ्यते । एवमन्यत्रापि । यत्रानेकविध कार्यं तत्र बहुलमित्येवोच्यते । यत्र द्विविधमेव कार्यं तत्र बहुलग्रहणफलितो वाशब्द एव पठ्यते । किवणचरमपुरसभुअगेत्येते किवणादय ।

## सुरभिदुरभ्योर्लोपः ।३।३।४३॥

एतयोर्मध्यस्वरस्य लोपो वा स्यात् । सुब्भि, सुरभिं । दुब्भि, दुरभिं ।

सुरभीति—मध्यस्य स्वरस्येति पूर्वसूत्रादनुकृष्यते। सुरभिदुरभिशब्दयोर्मध्यस्वरो रेफोत्तरवर्त्त्यकार । तस्यानेन लोपेऽहे व्यञ्जनस्येति सूत्रेण रेफस्य परसवर्णो भकारादेश । तथा च सुब्भिमिति सिद्धमेव दुब्भिमित्यपि । मध्यस्वरलोपाभावे सुरभिं दुरभिमिति ।

## ओस्तंबूलस्य ।३।४।४४॥

तम्बूलस्य मध्यस्वरस्यौकारो वा स्यात् । तंबोल, तंबूल ।

ओरिति—मध्यस्य स्वरस्येत्यस्य चानुवृत्ति ।

## कारेल्लस्येय· ।३।३।४५॥

कारेल्लस्य मध्यस्वरस्येयादेशो वा स्यात् । कारियल्ल, कारिल्ल, कारेल्ल ।

कारेल्लस्येति—अत्रापि पूर्ववदनुवृत्ति । मध्यस्वरोऽत्रैकारस्तस्येयादेशे कारियल्ल । इयादेशाभावे सयुक्त इति सूत्रेण वा ह्रस्वत्वे कारिल्ल । पक्षे कारेल्लमिति ।

## अश्चिक्खिलादीनाम् ।३।३।४६॥

एषां मध्यस्वरस्याकारो वा स्यात् । चिक्खल, चिक्खिल । अगरू, अगुरू ।

अ इति—पूर्ववदनुवृत्ति । चिक्खिलशब्दे मध्यस्वर इकारः । अगुरुशब्दे मध्यस्वर उकार । तयोरकारो जातस्तथा च चिक्खल, अगरू इत्यादिरूप सिद्धि । चिक्खिलादिराकृतिगण ।

## अद्वेंटगुरुययो स्वरस्य ।३।३।७७॥

वेंटगुरुयशब्दयो स्वरस्यादेरकारो वा स्यात् । वट, वेंट । गरुयं, गुरुय ।

अदिति—आदेरित्यस्यानुवृत्तत्वान्मध्यस्येति निवृत्तम् । अदिति प्रथमान्तम् । वेंटशब्द आदिस्वर एकार । गुरुयशब्द उकार । तयोरादिस्वरस्याकारो जायते वट–वृन्त । गरुय—गुरुकम् । अकाराभावपक्षे वेंट गुरुयमिति । न च वेंटादीना व्यञ्जनादित्वात्स्वरादित्व नास्तीति कथ सूत्रप्रवृत्तिरिति वाच्यम् । आदिशब्दस्यात्र प्रथमवाचकत्व नत्वाद्यवयववाचकत्व दुर्योधनादय कौरवा इत्यादौ प्रथमार्थकस्यैव दृष्टत्वाच्च तथा च वेंटादिशब्दे य आदिस्वर प्रथम स्वर तस्याकार स्यादिति फलितार्थ ।

## इर्नगिणस्य ।३।३।७८॥

नगिणशब्दस्यादेः स्वरस्येकारो वा स्यात् । निगिण, नगिण ।

*इरिति*—इरिति प्रथमान्तपदम् । आदे स्वरस्येत्यनुवृत्ति । नगिणमिति—नग्नमित्यर्थे । आदिस्वरस्याकारस्येकारे जाते निगिणमिति । इकाराभावे नगिणमिति ।

## उउवरस्य वा ।४।१।१६॥

अस्यादे· स्वरस्य लोपो वा स्यात् । उवरो, उउवरो ।

उउवरस्येति—लोपोऽन्यतरस्येति सूत्राल्लोप इत्यनुवर्त्तते । आदे स्वरस्ये-त्यस्य पूर्ववदनुवृत्तिः । आदिस्वरस्योकारस्य लोपे उवर इति रूपम् । लोपाभावे उउवरो वा । उदुंबरो वृक्षविशेषः ।

## ओत्कुतूहलस्य ।२।२।७९॥

कुतूहलशब्दस्यादेः स्वरस्यौद्वा स्यात् । कोऊहल, कुऊहल ।

ओदिति—ओदिति प्रथमान्तमादेशः । अनुवृत्तिः पूर्ववत् । लोप इति निवृत्तम् । कुतूहलशब्द आदिस्वर उकारः । तस्यौकारे तकारस्य 'बहुल गचे'त्यादिना यकारे लोपे च कोऊहल । ओकाराभावे कुऊहलमिति ।

## ऊतः कुतूहलस्य ।२।२।१२॥

कुतूहलस्योतो ह्रस्वो वा स्यात् । कोउहल, कुउहल ।

ऊत इति—ह्रस्वो वेत्यनयोरनुवृत्तिः । ऊत इत्यनेन दीर्घोकार एव गृह्यते ह्रस्वविधिसामर्थ्यात् । तथा च कुतूहलशब्दान्तर्गतनकारोत्तरवर्त्यूकारस्य ह्रस्वत्वे कोउहल, कुउहल । ह्रस्वाभावे दीर्घरूपं तूपरि दर्शितमेव ।

## खुड्डस्य के ।२।२।४४॥

अस्य दीर्घो वा कप्रत्यये परे । खुड्डाक, खुड्डक ।

खुड्डस्येति—दीर्घो वेत्यनयोरनुवृत्तिः । स्वरस्य ह्रस्वदीर्घेत्यादिना स्वरस्योपस्थितिः । अन्त्यस्य षष्ठ्या इति परिभाषयाऽन्त्यस्वरस्यैव दीर्घः । के इति सप्तमी-निर्देशादप्यव्यवहितपूर्वस्यैव दीर्घविधानादकारस्यैव दीर्घो नतूकारस्य । खुड्ड (क्षुद्र) शब्दात्स्वार्थे क प्रत्ययस्तथा च खुड्ड +क इत्यत्राकारस्य दीर्घे खुड्डाक । दीर्घाभावे खुड्डकमिति । ककारस्य विकल्पेन गकारयकारसद्भावे खुड्डाग, खुड्डग, खुड्डाय, खुड्डयमिति रूपचतुष्टयमग्रे साधयिष्यते ।

## वईत ऊत् ।२।१।७६॥

वईशब्दस्योकारो वा स्यात् । वऊ, वई ।

वईत इति—तकार उच्चारणार्थः । वईत इति षष्ठ्येकवचनान्त्यम् । अन्त्यस्य षष्ठ्या इत्यनेनान्त्यस्यादेशः । वईशब्दो वाक्पर्यायः, वाणीति यावत् । तस्योकारे जाते वऊ । उकाराभावे वईति ।

### विञ्छियस्य चस्य म ।३।४।१२॥

अस्य चकारस्य मकारो वा स्यात् । विंछिए ।

विञ्छियस्येति—वृश्चिकपर्यायविञ्छियशब्दघटकचकारस्य मकारादेशस्त्वाकार उच्चारणार्थ । मकारस्य मोऽनुस्वार इत्यनुस्वारे विंछिए ।

### उसियस्य ।३।४।१४॥

विञ्छियशब्दस्येयस्योमादेशो वा । विञ्छू, विञ्छिए ।

उसिति—विञ्छियस्येति पूर्वसूत्रादनुवर्तते । उमादेशे मकारस्येत्त्वादनेक वर्णसिद्धित्यनेन सर्वादेश । तेन विञ्छियशब्दघटकेयस्य स्थाने उमादेशो विञ्छू । उसादेशाभावे विञ्छिए ।

### आलिसिन्दस्य सेरत् ।३।४।११॥

आलिसिन्दशब्दसम्बन्धिसेरकारोऽन्तादेशो वा । आलिसन्दो । अकारादेशा-भावे आलिसिन्दो ।

इति स्वरविकारप्रकरणम् ।

---

## अथ व्यञ्जनविकारप्रकरणम् ।

### अनादेरसंयुक्तस्य कस्य ग ।३।३।६१॥

असंयुक्तानादिककारस्य गकारो वा स्यात् । अहिगरण, अहियरण, अहिअरण, अहिकरण । अनादेरिति किम् । करणम् । असंयुक्तस्य किम् ? विक्किणइ ।

अनादेरिति—न आदिरादिभूत सोऽनादिः । पदस्यादावर्तमान इत्यर्थ । न संयुक्तो व्यञ्जनान्तरेणेत्यसंयुक्त । पदञ्चात्र समस्तमसमस्तमुभयं गृह्यते । यत्र समासस्तत्रोत्तरपदापेक्षयादिभूतत्वेऽपि समस्तपदापेक्षयाऽनादित्वं ग्राह्य तेनाहिग-

रणमित्यादौ न लोपः । अहि + करणमित्यत्रानेन ककारस्य गकारे अहिगरण । बहुल गचेत्यादिना गकारस्य यकारे अहियरण । स्वराद्यस्येति यकारलोपे अहि-अरण । गकारस्य वैकल्पिकत्वाद्गत्वाभावे अहिकरणमिति । अनादेरित्यस्य प्रत्युदाहरण करणमिति । असयुक्तस्य प्रत्युदाहरण विक्षिप्तईति ।

## बहुल गचजतदवबानां य ।३।३।६३॥

**अनादिभूतासयुक्तानामेषां यकारो बहुल स्यात् । जय, जग । सोय, सोच । अयिण,अजिण । अवयरण, अवतरण । उयर, उदर । अलाऊ, अलाबू । जुयल, जुवल ।**

बहुलमिति—बाहुल्क चतुर्विध पूर्वं व्याख्यातमेव । तत क्वचिन्नित्य यकार क्वचिद्विकल्पेन क्वचिन्न भवत्येव । गचेत्यादि—गश्च चश्च जश्च तश्च दश्च बश्च वश्च गचजतदबवा इतरेतरयोगद्वन्द्व , तेषा गचजतदबवानाम् । अनादेरसयुक्त-स्येति पूर्वसूत्रादनुवर्त्तते । तस्य बहुवचनान्तत्वेन विपरिणाम । विशेष्यस्य बहुव-चनान्तत्वात् । गकारादिसप्तवर्णाना विकल्पेन यकारसद्भावे जय, जगमित्यादीनि सप्तोदाहरणानि क्रमशो दर्शितानि । प्रत्येक रूपद्वयमुदाहृतम् । स्वराद्यस्येति यकारलोपे तु तृतीयमपि रूप भवति तत्स्वयमूह्यम् ।

## रुधिरादीनां धभयोर्हो वा ।३।३।६४॥

**एषामनाद्यसयुक्तधकारभकारयोर्हकारो वा स्यात् । रुहिर, रुधिर । एहन्तो, एधन्तो । नह, नभ ।**

रुधिरादीनामिति—अनादेरसयुक्तस्येत्येतस्यानुवृत्ति एकवचनान्तस्य द्विव-चनान्तत्वेन विपरिणामेन धभयोर्विशेषणत्वम् । अनादेरिति किं ? धम्मो । अस-युक्तस्य किं ? रुध्धो । धकारस्य हकारत्वे रुहिरमित्याद्युदाहरणम् ।

## नो ण. ।३।४।१५॥

**आदावनादौ च नकारस्य बहुल णकार. स्यात् । णमसइ, नमसइ । णिचरइ, निचरइ । आकण्णइ, आकन्नइ । किण्ण, किन्न ।**

न इति—षष्ठ्यन्त पद नकारस्येत्यर्थ । ण इति प्रथमान्तमकार उच्चारणार्थ । णमसइ इत्यत्र धातावादिभूतनकारस्य णकार । आकण्णइ इत्यत्रानादिभूतस-

युक्तनकारस्य णकार । णिमरइ इत्यत्रोपसर्गस्थानिभूतासयुक्तनकारस्य णकार ।
बहुलग्रहणात् क्वचिद्विकल्पेन क्वचिन्नित्य यथाप्रयोग द्रष्टव्यमित्युक्त प्रागेव ।

## कोडयादीना डो ल ।३।४।२२॥

कोडयादिशब्दगतवन्धिडकारस्य लो बहुल स्यात् । कोलवो, कोडवो ।

कोडयादिष्विति—ड इति पष्ठयन्त पदम् । डकारस्येत्यर्थ । ल इति प्रथमान्तमकार उच्चारणार्थं । बहुलमित्यनुवर्तते । डकारस्य लकारे कोल्यो । लकाराभावे कोडवो ।

## पोक्खरादीनां र ।३।४।२३॥

पोक्खरादिशब्दसवन्धिरेफस्य बहुल ल' स्यात् । पोक्खल, पोक्खर ।
पलिहा, परिहा । पालयामि ।

पोक्खरादिष्विति—बहुल ल इत्यनुवर्त्तते । बहुलग्रहणात् पोक्खरलमित्यादौ विकल्पेन ल । पालयामीत्यादौ नित्यम् । आकृतिगणोऽयम् ।

## लुक्खादीना ह ।२।३।८०॥

एपामुपधाया हकारो वा स्यात् । लुह, लुक्ख । जीहा, जिब्भा । रिसहो,
रिसभो । ककुहं, ककुदं । गाहा, गाथा । मुहो, मुधो । दिवह,
दिवस । भेसह, भेसज । खुहा, खुधा ।

एपामिति—उपधाया वा इत्येतयोरनुवृत्ति लुक्खजिब्भाशब्दयोरुपधाभूतयो खकारभकारयोर्हकारे सिस्सादित्वात्सयुक्तस्याद्लोपे पूर्वस्य च दीर्घे लुह, जीहा । हकारलोपदीर्घाभावे च लुक्ख, जिब्भा । स्वरविशेषवाचकरिसभशब्दे भकारस्य हकारे रिसहो । हकाराभावे रिसभो । एव ककुदादिष्वप्युपधाभूताना दकारादीना विकल्पेन हकारे ककुह, ककुदमित्यादि । लुक्ख, जिब्भा, रिसभो, *ककुद, गाथा, मुधो, दिवस, सुधा, भेसजमेते लुक्खादय । आकृतिगणोऽयम् ।*

## आतपादीना पो व ।३।४।१६॥

एपा पकारस्य वकारादेशो वा स्यात् । आतवो, आतपो । कवोतो, कपोतो ।
वाहणा, पाहणा । जूवो, जूपो । दुरूव, दुरूप । अणुवालय, अणुपालय ।
विवरीय, विपरीय । वत्तिय, पत्तिय । पिवीलिका, पिपीलिका ।

आतपादीनामिति—वेत्यनुवर्त्तते । आतपो, कपोतो, पिपीलिका, पाहणा, जूपो, दुरूप, अणुपाल्य, विपरीय पत्तियमित्येत आतपादय । आकृतिगणोऽयम् । अत्रादेर्मध्यस्य यान्त्यस्य पकारस्य विकल्पेन यथाप्रयोग वकार । पिपीलिकाशब्दे पकारद्वयमध्ये द्वितीयपकारस्यैव वकारस्तथा प्रयोगदर्शनात् ।

## वा कुतूहलादीनाम् ।२।३।७१॥

कुतूहलादीनामुपधाया द्वित्व वा स्यात् । कोऊहल्लं, कोउहल्ल, कुऊहल्लं, कुउहल्ल । पक्षे कोऊहलमित्यादि । दुगुल्ल, दुगूल, दुकूलं । जुहिट्ठिल्लो, जुहिट्ठिलो ।

वेति—उपधाया द्वित्वमित्यनयो पूर्वसूत्रादनुवृत्ति । कुतूहलशब्दस्य विकल्पेन प्रथमोकारस्यौत्त्वेन द्वितीयोकारस्य ह्रस्वत्वेन च रूपचतुष्टय भवतीति प्राङ् निदर्शितम् । तत्रोपधाभूतस्य लकारस्य विकल्पेन द्वित्वे लद्वयघटित रूप-चतुष्टयमेकलकारघटित रूपचतुष्टय च तदुक्त कोऊहलमित्यादीनि । आदिशब्देन कोउहल, कुऊहल, कुउहलमिति त्रीणि रूपाणि ज्ञेयानि । दुकूलशब्दे कस्य गकारे लस्य द्वित्वे सयुक्ते ह्रस्वत्वे च दुगुल्ल । द्वित्वाभावे दुगूल । गत्वाभावे च दुकूल । जुहिट्ठिल ( युधिष्ठिर ) शब्दे लस्य द्वित्वे जुहिट्ठिल्लो । द्वित्वाभावे जुहिट्ठिलो । आकृतिगणोऽयम् ।

## वज्जादीनां वस्योः ।३।४।१९॥

वज्जादिशब्दाना वस्योसादेशो वा स्यात् । आउज्जो, आवज्जो । आउज्जण, आवज्जण । उसहो, उसभो । वसहो, वसभो ।

वज्जादीनामिति—उस सकारस्येत्त्वादनेकवर्णसिदित्यनेन सर्वादेशस्तथा चाकारसहितवकारस्योसादेश । आवज्जावज्जणयोर्वस्योसादेशे प्रकृतिभावे च आउज्जो, आउज्जण । आदेशाभावे आवज्जो, आवज्जण । लुक्त्रादित्वादुपधाभूतभ-कारस्य विकल्पेन हकारे वस्योसि च उसहो, उसभो । उसादेशाभावे वसहो, वसभो ।

## बीभत्थस्य च्छो वा ।२।३।६०॥

अस्योपधायाश्छकारो वा स्यात् । बीभच्छो, बीभत्थो ।

बीभत्थस्येति—उपधाया वेत्यस्यानुवृत्ति । उपधाभूतस्य थकारस्य छकारे

अट्ठे व्यञ्जनस्येत्यनेन नकारस्य परमवर्णे बीभच्छो । छकाराभावे बीभत्थो ।
बीभत्स इत्यर्थं ।

## ईतो बीभत्थस्य ।३।३।१४।।

अस्य ईतो ह्रस्वो वा स्यात् । बिभच्छो, बिभत्थो ।

ईत इति—षष्ठ्येकवचनान्तम् । तकार उच्चारणार्थं । ईत , ईकारस्येत्यर्थं । जैमादीनामितो ह्रस्व इत्यनुवर्तते । छकारथकारघटितरूपद्वयस्य ह्रस्वत्वे बिभच्छो, बिभत्थो इति ।

## पुडपुरयोरुत्तरपदयो ।१।४।१७।।

अनयोरादेर्लोपो वा स्यात् । तालउड, तालपुड । गोउर, गोपुर ।

पुडेति—आदेर्लोपो वेत्येतेषामनुवृत्ति । उत्तरपदशब्दस्य समासचरमावयववाचकत्वात् समास । उत्तरपदभूतयो पुडपुरशब्दयोरित्यर्थ । आदिभूतपकारस्य लोपे तालउड । लोपाभावे तालपुड । एव गोउर, गोपुरमिति ।

## परिवारस्य ल ।२।३।६४।।

अस्योपधाया लकारो वा स्यात् । परिवालो, परिवारो ।

परिवारस्येति—बीभत्थस्येत्यत उपधाया इत्यस्यानुवृत्ति । परिवारशब्दउपधाभूतो रकारस्तस्य लकारादेशे परिवालो । आदेशाभावे परिवारो ।

## उडजस्य व ।२।३।६१।।

अस्योपधाया वकारो वा स्यात् । उडव, उडय, उडज ।

उडजस्येति—उपधाया वा इत्येतयोरनुवृत्ति । उडजशब्द उपधाभूतो जकारस्तस्य वकारे उडव । वकाराभावे जकारस्य यकारे उडय । यकाराभावे उडजमिति ।

## रिरुओ ।३।३।७२।।

उउशब्दस्यादेरिरित्यादेशो वा स्यात् । रिऊ, उऊ ।

रिरिति—रिरिति प्रथमान्तम् । उओरिति षष्ठ्यन्तम् । गेत्तस्यादेरिति सूत्रादादेरित्यनुकृष्यते । आदेरित्यस्य विशेषणेोपादानादन्त्यस्य षष्ठ्या इत्यस्य न प्रवृत्ति । अनेनादेशे रिऊ । आदेशाभावे उऊ, ऋतुरित्यर्थ ।

## उओरन्त्यस्य डुदुयाः ।३।४।५॥

अस्यान्त्यस्य डुदुय इत्येते आदेशाः स्युः । उड्ड, उद्, उओ ।

उओरिति—उउशब्दस्य षष्ठ्येकवचनम् । त्रयाणामादेशानामनेकवर्णत्वाद-न्त्यस्य षष्ठ्या इति परिभाषा बाधित्वाऽनेकवर्णसिदित्यनेन सर्वादेशे प्राप्ते सूत्रेऽन्त्यस्येति विशेषेणोपात्त तत्सामर्थ्यान्न सर्वादेश, किन्त्वन्त्यस्योकारस्यैव । डु इत्यादेशे उड्ड । दु इत्यादेशे उद् । यादेशे स्वराद्यस्येति यलोपे च उओ इति ।

## खेत्तस्यादेश्छः ।३।३।६६॥

अस्यादेश्छकारो वा स्यात् । छेत्त, खेत्त ।

खेत्तस्येति—वेत्यनुवर्त्तते । आदेरित्यस्योपादानादन्त्यस्य षष्ठ्या इति न प्रवर्त्तते । आदिभूतस्य खकारस्य छकारे छेत्त । छकाराभावे खेत्तमिति ।

## सणियम सणिम् ।४।४।२८॥

सणिय शब्दस्य सणिमादेशो वा स्याच्चरे परे । सणिंचरो, सणियचरो ।

सणिमिति—चर इति पूर्वसूत्रादनुवर्त्तते । सणियमित्यव्ययम् । शनैरि-त्यर्थ । सणिय चरति इति विग्रहे सणियमित्यस्य सणिमादेशे मकारस्यानुस्वारे सणिंचरो । आदेशाभावे सणियचरो ।

## सणियमश्चरश्च्छो वा ।२।४।८७॥

अस्मात्परस्य चर्धातोरादेश्च्छकारो वा स्यात् । सणिच्छरो । सणियच्छरो ।

सणियम इति—आदेरित्यस्यानुवृत्ति । एकदेशविकृतमनन्यवदिति सणि-मादेशेऽपि सणियम परत्वमक्षतम् । आदिभूतस्य चकारस्यच्छकारादेशे त्रयाणा-मित्यनुस्वारस्य लोपे सणिच्छरो । सणिमादेशाभावे सणियच्छरो ।

## अदसेर्लेसे ।३।४।१७॥

असिशब्दस्याकारान्तादेशो वा लेसाशब्दे परे । असलेसा, असिलेसा ।

अदिति—अन्त्यस्य षष्ठ्या इत्यनेनासेः षष्ठ्यन्तत्वादन्तादेश । असि-शब्दघटकेकारस्याकारादेशे असलेसा । अकारादेशाभावे असिलेसा । अश्लेषा नक्षत्रविशेष ।

## सो द्विः ।३।४।१८॥

असे॰ सकारस्य द्वित्वं वा स्यात्लेमाशब्दे परे । अस्सलेमा, असिलेमा ।

असेरिति—असेर्लेम इति पदद्वयं पूर्वसूत्रादनुवर्त्यते । स इति षष्ठ्यन्तं, सकारस्येत्यर्थः । असिशब्दसम्बन्धिनः सकारस्य न तु लेमाशब्दसम्बन्धिसकारस्य । तथा चानेन सकारस्य द्वित्वे पूर्वसूत्रेणेकारस्याकारादेशे अस्सलेमा । द्वित्वाभावेऽका रादेशाभावे च असिलेमा ।

## इलोरस्सिलेसयोः ।४।४।६६॥

असिलेमाशब्दघटकयोरिकारलकारयोर्वा लोपः । अस्सेमा ।

इलोरिति—वा लोप इति पदद्वयमनुवर्त्तते । असिलेमाशब्दसम्बन्धीकार-लकारयोर्लोपे अस्सेमा । सकारद्वयघटितरूपस्यैव सूत्र उपादानादेव सकारघटितस्येलोर्न लोपः । इलोर्लोपाभावपक्षे रूपचतुष्टयं तूपदर्शितमेव ।

## मिलेच्छस्य खुः ।२।३।६३॥

मिलेच्छशब्दस्योपधायाः खुरादेशो वा स्यात् । मिलेक्खू ।

मिलेच्छस्येति—उपधाया वेत्येतदनुवर्त्तते । उपधाभूतस्य खु इत्यादेशेऽवशिष्टस्य चकारस्य परसवर्णत्वे मिलेक्खू ।

## एतोऽदुतौ ।३।३।५१॥

मिलेच्छशब्दसम्बन्धिन एकारस्याकारोकारौ वा स्तः । मिलक्खू, मिलुक्खू । पक्षे मिलिच्छो, मिलेच्छो ।

एत इति—वा मिलेच्छस्येत्यनुवर्त्तते । मिलेच्छशब्दघटकैकारस्याकारे त्वादेशे परसवर्णे मिलक्खू । एकारस्योकारे मिलुक्खू । अकारोकाराभावे संयुक्ते ह्रस्वत्वे मिलिच्छो । ह्रस्वत्वाभावे मिलेच्छो ।

## मेच्छ ।३।३।५०॥

मिलेच्छस्य मेच्छादेशो वा स्यात् । मेच्छो, मिच्छो ।

मेच्छ इति—वा मिलेच्छस्येत्यनुवर्त्तते । मेच्छादेशे सति न खुर्नवाकारोकारौ । संयुक्ते ह्रस्वस्तु भवत्येव । तेन रूपद्वयं मेच्छो, मिच्छो ।

## मत्तिये तोट्टौ ।३।३।५८॥

मत्तियाशब्दस्थिततकारद्वयस्य टकारद्वयं वा स्यात् । मट्टिया, मत्तिया ।

मत्तिय इति—तोरिति षष्ठीद्विवचनं तस्य तकारयोरित्यर्थः । टाविति प्रथमाद्विवचनं तस्य टकारावित्यर्थः ।

## अहेरत्तस्य ठथौ ।२।३।६५॥

अहेरुपसर्गात्परस्यात्तस्योपधायाष्ठकारथकारौ पर्यायेण वा स्याताम् ।
अज्झट्ठ, अज्झत्थ।

अहेरिति—अहि+अत्तमित्यत्रोपधाभूतस्य द्वितीयतकारस्य ठकारादेशे पूर्वतकारस्य परसवर्णेन टकारे अहि+अट्ठमिति जाते तरह्भ्यश्चजझा इत्यनेन हकारोत्तरवर्त्तिकारस्य झकारे हकारस्य परसवर्णेन जकारे अज्झट्ठ । एवं थकारे अज्झत्थमिति ।

## णिच्चे च्चस्य तियः ।३।३।५७॥

णिच्चशब्दघटकस्य च्चस्य तियादेशो वा स्यात् । णिइय, णितिय, णिच्च ।

णिच्च इति—आदेशस्यानेकवर्णत्वादकारसहितचकारद्वयस्य स्थाने तियादेशः । तकारस्य यकारे यलोपे च णिइय । यकाराभावे णितिय । तियादेशाभावे णिच्च ।

## गिहस्य गहघरहराः ।३।३।५५॥

एते आदेशाः पर्यायेण वा स्युः । गह, घर, हर, गिह ।

गिहस्येति—अनेकवर्णत्वात्सर्वादेशाः । वेत्यनुवर्त्तते ।
पर्यायेणेति—क्वचिद् गहादेशः, क्वचिद् घरादेशः, क्वचिद् हरादेश इत्यर्थः ।

## पज्जाये ज्जायस्य रियागः ।३।३।५९॥

पज्जायशब्दघटकस्य ज्जायस्य रियागादेशो वा स्यात् । परियागो, पज्जायो ।

पज्जाय इति—अनेकवर्णत्वात्समग्रस्य ज्जायभागस्य रियागादेशे परियागो । यकारस्य लोपे परिआगोऽपि । आदेशाभावे पज्जायो ।

## परिवाट्या ड ।२।३।६६॥

परिवाटीशब्दस्योपधाया डकारादेशो वा स्यात् । परिवाडी, परिवाटी ।

परिवाट्या इति—उपधाया वा इत्येतत्पदद्वयमनुवर्त्तते । उपधाभूतस्य टका-

रस्य ढकारे परिघाढी । ढकाराभावे परिघाटी । बाहुल्याद्धकारस्य न घकारः । ढ इत्यत्राकार उच्चारणार्थः ।

### तत्थस्य तह ।२।२।५३॥

तत्थस्य तहादेशो वा स्यात् । तह, तत्थ ।

तत्थस्येति—अनेकवर्णत्वात्सर्वादेशः । वेत्यनुवर्तते । तत्थ सत्यम् ।

### धणोर्हक्कस्सकौ ।४।२।४॥

धणुशब्दस्य हक्स्सक् इत्येतावागमौ वा स्तः । धणुह, धणुक्स, धणुं ।

धणोरिति—हक्कस्सकोः कित्वाद्न्त्यावयवत्वम् अवयवावयविभावस्य षष्ठ्यर्थस्य निश्चयात् । तथाच हगागमे धणुह । क्सगागमे धणुक्स । तदभावे धणु ।

### परिहे प फः ।३।४।१४॥

परिहाशब्दघटकपकारस्य फकारो वा स्यात् । फरिहा, परिहा ।

परिह इति—परिह इति सप्तम्यन्तम् । सप्तम्यर्थः घटकत्वम् । प इति षष्ठ्यन्तम् । पकारस्येत्यर्थः । फ इत्यत्राकार उच्चारणार्थं ।

### महरट्ठस्य मरहट्ठ ।३।३।५२॥

अस्य मरहट्ठादेशो वा स्यात् । मरहट्ठ, महरट्ठ ।

महरट्ठस्येति—अनेकवर्णत्वात् सर्वादेशः । महाराष्ट्रमित्यर्थं ।

### पउमस्य पोम्म ।३।३।५६॥

पउमशब्दस्य पोम्मादेशो वा स्यात् । पोम्म, पउम ।

पउमस्येति—अनेकवर्णत्वात्सर्वादेश । पोम्ममित्यत्र बाहुल्याद् ह्रस्वो न । पउममित्यत्र प्रकृतिभावाच्च सन्धि ।

### यजोर्ज ।३।३।७३॥

यजुशब्दस्यादेर्जकारो वा स्यात् । जजुव्वेदो, यजुव्वेदो ।

यजोरिति—रोचस्यादेरिति सूत्रादादेरित्यनुवर्तते । आदिभूतस्य यका-रस्य जकारे जजुव्वेदो । जकाराभावे यजुव्वेदो ।

## उसिणपसिणयोः सिणस्य ण्हः ।३।३।६०॥

अनयोः सिणस्य ण्हादेशो वा स्यात्। उण्ह, उसिण। पण्ह, पसिणो।

उसिणेति—अनेकवर्णत्वात्सिणस्य सर्वस्यादेश। उसिणमित्यत्र सिणस्य ण्हादेशे उण्ह। पक्षे उसिण। उष्णमित्यर्थ। एव पण्हो, पसिणो। प्रश्न इत्यर्थ।

## नेः कसो घः ।२।४।७४॥

नेः परस्य कस्धातोरादेर्घकारो वा स्यात्। निघसो, निकसो।

नेरिति—न्युपसर्गादित्यर्थ.। कस् आकर्षणे। आदिभूतस्य ककारस्य घकारे निघसो। घकाराभावे निकसो। आदेरित्यस्य खेत्तस्यादेरित्यतोऽनुवृत्ति।

## गिम्हस्य घिंसुः ।३।३।५४॥

अस्य घिंसु इत्यादेशो वा स्यात्। घिंसू, गिम्हो।

गिम्हस्येति—अनेकवर्णत्वादनेकवर्णसिदित्यनेन सर्वादेश। सर्वादेशे घिंसू। आदेशाभावे गिम्हो।

इति व्यञ्जनविकारप्रकरणम्।



# अथ विभक्तिप्रकरणम्।

---

तत्र पुलिङ्गशब्दाः

---

## अविभक्ति नाम ।१।१।२४॥

विभक्तिरहित शब्दस्वरूप नामसज्ञ स्यात्।

अविभक्तीति—विभक्तिश्च सुप्त्यादिरित्युक्तं प्राक्। नास्ति विभक्तिर्यस्य तदविभक्ति। विभक्तिरहितमित्यर्थः। विशेषणस्य नपुंसकत्वात्तदनुरोधेन विशेष्य शब्दस्वरूपमध्याह्रियते। नैव धातोरपि नामत्वं स्यादिति वाच्यम्। सत्यपि नामत्वे तस्मान्न नामविभक्त्यो भवन्ति, किन्तु तिव्वसादयस्तादय एव प्रत्यया भवन्ति। विभक्तिसहितस्यापि नामसंज्ञाया विभक्त्यन्तादपि पुनर्विभक्तिप्रत्यय स्यादित्यत आह—अविभक्तीति। शब्दस्वरूपं चार्थवन्न्येत्यर्थशून्यमर्थवद्ग्रहणपरिभाषया। तेन घटो, पटो इत्यादौ प्रत्येकवर्णस्य घकारादेर्न नामसंज्ञा, किन्तु घट इति समुदायस्यैव। नामसंज्ञाया फलन्तु सत्या नामसंज्ञाया तस्मात् सुब्विभक्तिः।

## उदन्मेदिणेह्यएदणातोदिहितोस्साणमीसव' सुप् ।१।१।२५॥

उत् अत्, म इव्, इण इहि, अएत् अण, अतोव् इहितो, स्म अण, मि इसु, एते सुप्संज्ञा स्युः। तत्र उत्, अत् इति प्रथमा। म, इव् इति द्वितीया। इण, इहि इति तृतीया। अएत्, अण इति चतुर्थी। अतोव्, इहितो इति पञ्चमी। स्म, अण इति षष्ठी। मि, इसु इति सप्तमी।

उदिति—उच्च अच्च मश्च इच्च इणश्च इहिश्च अएच्च अणश्च अतोच्च इहितोश्च स्सश्च अणश्च मिश्च इसुश्चेति द्वन्द्वः। उदादावन्त्यतकारोऽसन्देहार्थः। द्वितीयैकवचने मकारेऽकार उच्चारणार्थः। संस्कृतवद्द्विवचनमत्र नास्ति। एकातिरिक्तस्यैव बहुत्वेन बहुवचने तदन्तर्भावाद्द्विवचनस्यानर्थक्यात्। विभक्तयस्तु संस्कृतवत्सप्तैव। तथाच सप्तैकवचनप्रत्यया सप्त बहुवचनप्रत्ययास्तेषा सुविति संज्ञा विधीयतेऽनेनेति।

## सुपश्च ।१।१।२६॥

सुपः प्रथमादिक्रमेण द्वौ द्वावेकवचनबहुवचनसंज्ञौ स्तः।

क्रमेणेति—प्रथमादिषु सप्तविभक्तिषु पूर्वोच्चरितमेकवचनसंज्ञं स्यात्, पश्चादुच्चरितं बहुवचनसंज्ञं स्यात्। यथा उत्, अत्—अत्रोत् प्रथमोच्चरितत्वादेकवचनसंज्ञा। अतः पश्चादुच्चरितत्वाद्बहुवचनसंज्ञा। एवं सप्तस्वपि।

## एकवचनम् ।१।२।१॥

नाम्न एकवचनं स्यात्।

एकवचनमिति—अत्रैकत्वविवक्षाया अपेक्षा नास्ति, सामान्यतो नाम्नो

भिधानात्। अतएवाव्ययेभ्यो भावतिङन्तेभ्यश्चैकवचन भवति।

## बहुत्वे बहुवचनम् ।१।२।१०॥

बहुत्वनिवक्षाया बहुवचनं स्यात्।

बहुत्व इति—एकत्वातिरिक्तमत्र बहुत्व विवक्षित, तेन द्वित्वस्याप्येकातिरिक्तत्वेन बहुत्वाक्षति।

## प्रत्यय: पर: ।१।२।११॥

अधिकारोऽयमाद्वितीयाध्यायद्वितीयपादसमाप्तेः।

अधिकार इति—अधिकारत्व च स्वदेशे वाक्यार्थबोधाजनकत्वे सति विधिशास्त्रेण सह वाक्यार्थबोधजनकत्वमित्युक्तमेव प्राक्। सूत्रमिद द्वितीयाध्यायस्य द्वितीयपादसमाप्तिपर्यन्तमनुगच्छति।

## नाम्नः सुप् ।१।२।१८॥

नामसज्ञकाच्छब्दस्वरूपात्सुप्प्रत्ययाः स्युः। अकारान्तः पुलिङ्गो जिणशब्दः।

नाम्न इति—पञ्चम्यन्तमिदमधिकृतपरशब्देनान्वेति। विभक्तिरहितशब्दस्वरूपस्य नामेतिसञ्ज्ञेत्युक्तमनुपदम्। सुबिति प्रथमान्त विशेषणमधिकृतेन विशेष्यीभूतप्रत्ययशब्देन युज्यते। प्रत्यय इत्यस्य बहुवचनत्वेन विपरिणाम, सुप्प्रत्ययाना बहुत्वात्। नामानि त्रिविधानि—पुलिङ्गकानि, स्त्रीलिङ्गकानि, नपुसकलिङ्गकानि च। तत्र पुलिङ्गस्य प्राधान्यात्प्रथम तान्येवोदाह्रियन्ते। तत्राप्यकारान्तत्वादिनाऽनेकविधस्वेऽप्यकारस्य स्वरेषु प्रथमोपस्थितत्वेन प्रथममकारान्तनाम्न उदाहरणत्वेनोपन्यास, तदुक्तमकारान्त पुलिङ्गो जिणशब्द। जिणो रागद्वेषजेता जिनस्तीर्थंकर इत्यर्थ।

## इदुतः पुंसि ।४।३।२॥

अकारान्तपुलिङ्गनाम्नः प्रथमैकवचनस्योकारस्येकारो वा स्यात्। जिणे, जिणो, जिणा। जिण, जिणे।

इदिति—अतो नाम्न इत्यनुवर्त्तते। इत, उत, पुंसि इति पदत्रयम्। तत्रोत इति षष्ठ्यन्तम्। विशेषण तदन्तस्येति परिभाषयाऽकारान्तादिति लाभ पुंस्यनन्तर वर्त्तमानादिति शेष। तथाच पुलिङ्गे वर्त्तमानादकारान्तनाम इत्यर्थ।

जिण+उ इति स्थितेऽनेनोकारस्यौकारे वृद्धिरूपे परसवर्णे जिणे । इकारागमाभावे वृद्धिरूपे परसवर्णे जिणो । जिण+अ इति स्थितेऽदिदुत सवर्णे इति दीर्घे जिणा । जिण+म् इति स्थिते म्रोरित्यनुस्वारे जिणं । जिण+इ इति स्थितऽत्र स्वर इत्यनेन परसवर्णे जिणे ।

## इणाणेहीसीसुनाम् ।४।२।१४॥

एषां समागमो वा स्यात् । जिणेण, जिणेण । जिणेहिं, जिणेहि ।

इणेति—इणश्च अणश्च इहिश्च इसिश्च इसुश्चेति द्वन्द्व । इणादय पञ्च सुप्प्रत्यया । सञ्जेणेति तृतीयैकवचनाम् । अणेति षष्ठीबहुवचनाम् । इहीति तृतीयाबहुवचनम् । इसीति मध्यणामोत्तरषष्ठीबहुवचनम् । इसु इति सप्तमीबहुवचनाम् । सम् वा इति पदद्वय पूर्वसूत्रादनुवर्तते । जिण+इणेति तृतीयैकवचनेऽनेन समागमे तस्य धात्वस्वरात्परत्वे सकारस्यानुस्वारेऽकारेकारयोः परसवर्णे जिणेण । समागमाभावे जिणेण । एव तृतीयाबहुवचने जिणेहिं जिणेहि इति रूपद्वयम् ।

## अएत स्सो नाम्न ।४।३।२०॥

नाम्नः परस्य चतुर्थ्येकवचनस्य स्सादेशो नाऽस्त्रियाम् । जिणस्स, जिणाए । जिणाय, जिणाय ।

अएत इति—वा स्त्रियामिति पूर्वसूत्रादनुवर्तते । अएत इति पञ्चम्यन्तम् । नाम्न इति पञ्चम्यन्तम् । अएदिति चतुर्थ्येकवचनप्रत्ययस्तत्र तकार उच्चारणार्थ । जिण+अए इत्यत्रानेन स्सादेशे जिणस्स । स्सादेशाभावे जिणाए । जिण+अणे त्यत्र समागमे सवर्णदीर्घेऽनुस्वारे जिणाणं । समागमाभावे जिणाण ।

## अतोऽएदतोतोरयाही क्वचित् ।४।३।२१॥

अकारान्तान्नाम्न परयोश्चतुर्थीपञ्चम्येकवचनयो क्रमेणायाही आदेशौ स्त क्वचिदस्त्रियाम् । जिणाय । जिणाहि ।

अत इति—विशेषण तदन्तस्येति परिभाषयाऽत इत्यस्याकारान्तादिति लाभ । वा स्त्रिया नाम्न इत्यस्यानुवृत्ति । समाना स्थान्यादेशादीना यथासंख्य स्यादिति न्यायादएत अयादेशः अतोत अहादेश स्यादित्यर्थ । एतावादेशौ न सर्वत्र भवत, किन्तु क्वचिदेव शास्त्रे तथाप्रयोगदर्शनादुक्त क्वचिदिति । अने-

कवर्णत्वात् सर्वादेश । जिण+अए इति स्थितेऽनेनायादेशे सवर्णदीर्घे जिणाय । जिण + अतोत् इति स्थितेऽतोत अह्यादेशे सवर्णदीर्घे जिणाहि । अस्त्रियामित्यनुवर्त्तते । स्त्रीभिन्ने पुंसि क्लीवे चेति तदर्थ ।

## अतोतोऽतः ।३।४।६१॥

अकारान्तान्नाम्नः परस्य पञ्चम्येकवचनस्यातोतोऽन्त्यस्य लोपो वा स्यात् ।
जिणा, जिणाओ । जिणेहिंतो । जिणस्स । जिणाण, जिणाण ।

अतोत इति—अन्त्यस्य षष्ठ्या इति परिभाषयाऽन्त्यस्येति लाभ । अत इत्यस्य विशेषणत्वाद्विशेषण तदन्तस्येत्यनयाऽकारान्तादिति लाभ । लोपो वेति पदद्वयमनुकृष्यते । जिण + अतोदिति स्थितेऽनेनान्त्यस्यौकारस्य लोपे तकारस्य यकारे तस्य लोपे सवर्णदीर्घे च जिणा । लोपाभावे च जिणाओ । क्वचिज्जिणाहि इत्युक्तमेवानुपदम् । पञ्चमीबहुवचने जिण + इहिंतो इत्यत्र परसवर्णे जिणेहिंतो । षष्ठ्या एकवचने किञ्चिद्विकाराभावादेकमेव रूपम् । बहुवचने तु ममागमविकल्पेन जिणाण जिणाणेति रूपद्वयम् ।

## सिः ।४।३।३२॥

नाम्नः परस्य सप्तम्येकवचनस्य मेः स्यादेशो वा स्यादस्त्रियाम् ।

सिरिति—नाम्न मे अस्त्रिया वेति पदचतुष्टय पूर्वसूत्रादनुवर्त्तते । अनेकवर्णत्वात् सपूर्णस्य मे स्थाने सिरित्यादेश । अस्त्रियामित्यस्य पुंसि क्लीबे चेत्यर्थ ।

## मौ व्यञ्जनादौ नाम्नः ।४।२।१८॥

व्यञ्जनादौ सप्तम्येकवचने परे नाम्नो ममागम स्यात् ।
जिणंसि, जिणमि ।

माविति—ममिति पूर्वसूत्रादनुवर्त्तते । माविति सप्तम्यन्तम् । व्यञ्जनादाविति तद्विशेषणम् । व्यञ्जनमादिर्यस्येति बहुव्रीहि । यदा मेरिसादेशस्तदा व्यञ्जनादित्वं नास्तीति तन्निवृत्त्यर्थं व्यञ्जनादाविति । स्त्रीलिंगेऽपि मेर्व्यञ्जनादित्वाभावात्तन्निवृत्ति । स्वराणामन्त्यादिति परिभाषया नाम्नोऽन्त्यस्वरात्परो ममागम । ममि मकारो मित्कार्यार्थ । अकार उच्चारणार्थ । अवशिष्टस्य मकारस्य म्नोरित्यनेनानुस्वारः । जिण + मि इत्यत्र मे स्यादेशे ममागमे जिणसि । स्यादेशाभा-

वेऽप्यनेन ममागमे निणमि। स्यादेशे मिपरत्व नास्तीति न शङ्क्य, यदादेशस्तद्वद्भवतीति न्यायात्स्यादेशोऽपि मिवद्भवतीति न ममागमे बाधः।

## मेरिस्तो नाम्नो वा ।४।३।११॥

अकारान्तान्नाम्नः परस्य सप्तम्येकवचनस्य मेरिसादेशो वा स्यात्। जिणे। जिणेसु, जिणेसु।

मेरिति—सित्वात्सर्वादेश । जिण+ङि इति स्थितेऽनेन मेरिसादेशे परसवर्णे जिणे इति सिद्धम्। जिण+इसु इति स्थिते इणाणेहीत्यनेन ममागमेऽनुस्वारे परसवर्णे च जिणेसु। ममभावे जिणेसु।

## अत्पुंसि वात' ।४।३।९॥

अकारान्तान्नाम्न' परस्यामन्त्रणार्थकप्रथमैकवचनस्योतोऽद्वा स्यात्पुंसि। भो जिणा, भो जिणे, भो जिणो। भो जिणा। एव गोयकप्रभृतयः।

अदिति—नाम्न आमन्त्रणे उत इति पदत्रयमनुवर्त्तते। आमन्त्रण इति सप्तम्यन्तपदस्यानुवृत्तेर्नोत इत्यनेन सहान्वय। सप्तम्यर्थो वाचकत्वम्। आमन्त्रण चेह स्वाभिमुखीकरणम्। सम्बोधनमिति यावत्। नपुसकलिंगनिवृत्त्यर्थं पुंसीति। जिण+उ इति स्थितेऽनेनोकारस्याकारे सवर्णदीर्घे जिणा। तदभावे इकारादेशे परसवर्णे जिणे। आदेशाभावे परसवर्णे भो जिणो। जिण+अदिति बहुवचने सवर्णदीर्घे भो जिणा।

## अट्ठादएतो ऽ ।४।३।६५॥

अट्ठशब्दात्परस्याएप्रत्ययस्यासादेशो वा स्यात्। अट्ठा, अट्ठस्स, अट्ठाए। शेष जिणवत्।

अट्ठादिति—वेत्यनुवर्त्तते। सित्त्वात्सर्वादेश। अट्ठ+अएदिति चतुर्थ्येकवचनेऽनेनासादेशे सवर्णदीर्घे अट्ठा। पक्षे स्सादेशे अट्ठस्स। तदभावे सवर्णदीर्घे अट्ठाए।

## न्तस्य सोन्मस्य म ।४।३।४८॥

प्रथमाद्वितीयैकवचनसहितस्य न्तमन्तसम्बन्धिन्तस्य वा म आदेश' स्यात्। भगव, भगवन्ते, भगवन्तो। भगव, भगवन्त। मतिम, मतिमन्ते, मतिमन्तो। मतिम, मतिमन्त। एव कारय कारयन्ते कारयन्तो इत्यादि।

न्तस्येति—न्तमन्तयोरिति पूर्वसूत्रादनुवर्त्तते । उश्च मश्च उन्मौ ताभ्या सहित सोन्म' तस्य । उदिति प्रथमैकवचनप्रत्यय । म इति द्वितीयैकवचनप्रत्यय । आदेशे सकारस्येत्त्वाद्विभक्तिप्रत्ययसहितस्य न्तस्य स्थाने मादेश । अकार उच्चारणार्थ. । मकार शिष्यते तस्य म्नोरित्यनेनानुस्वार । अन्तादिशब्देषु न्तस्यादेशो माभूदिति न्तमन्तयोरिति न्तो वर्त्तमानार्थककृत्प्रत्यय । मन्तश्च सम्बन्धार्थक्तद्धितप्रत्ययो बोध्य । भगवन्त+उदिति स्थिते मादेशेऽनुस्वारे भगव । मादेशाभावे उत इकारादेशे परसवर्णे भगवन्ते । इकारादेशाभावे परसवर्णे भगवन्तो । एव प्रथमैकवचने रूपत्रयम् । गकारस्य यकारे तु रूपषट्कम् । द्वितीयैकवचने ममादेशे भगव । मसादेशाभावे भगवन्त । एव मतिममित्यादीनि । ननु न्तस्य मन्तसम्बन्धित्वेऽपि न्तसम्बन्धित्व कथम् ? स्वस्मिन्स्वसम्बन्धित्वाभावादिति चेन्न, लौकिकन्यायात् व्यपदेशिवद्भावात्स्वस्मिन्नपि स्वसम्बन्धित्व विशिष्टोऽपदेश —मुख्यव्यवहारो व्यपदेश सोऽस्यास्तीति व्यपदेशी यथा मन्तघटको न्तशब्द' तत्र सम्बन्धित्वस्य मुख्यव्यवहारात्। तेन तुल्य तद्वत् तद्भावात् । यथा मन्तशब्दे मुख्यसम्बन्धित्वव्यवहारस्तथा केवलन्तशब्देऽपि व्यवहारो भवतीत्यदोष ।

## न्तमन्तयोर्न्तात् ।४।३।४६॥

न्तमन्तसम्बन्धिन्तात्परयो' प्रथमाद्वितीयाबहुवचनयोरुकारादेशो वा स्यात् ।
भगवन्तो, भगवन्ता । भगवन्तो, भगवन्ते । मतिमन्तो, मतिमन्ता ।
मतिमन्तो, मतिमन्ते ।

न्तमन्तयोरिति—अदितोरुर्वेति पदद्वयमनुवर्त्तते । अदिति प्रथमाबहुवचनप्रत्यय । इदिति द्वितीयाबहुवचनप्रत्यय । अश्च इश्चादितौ तयो । तकार उच्चारणार्थ । भगवन्त+अ इति स्थितेऽनेनाकारस्योकारे परसवर्णे भगवन्तो । इकाराभावे सवर्णदीर्घे भगवन्ता । द्वितीयाबहुवचने भगवन्त+इ इति स्थिते इकारस्योकारादेशे परसवर्णे भगवन्तो । उकारादेशाभावे परसवर्णे भगवन्ते । एव मतिमन्तो इत्यादीनि ।

## इणस्सयोरसुसौ ।४।३।४७॥

न्तमन्तसम्बन्धिन्तात्परयो' तृतीयाषष्ठ्येकवचनयोः क्रमेणासुसादेशौ स्तः ।

इणेति—न्तमन्तयोर्न्तादित्यनुवर्त्तते । इणश्च स्सश्चेति द्वन्द्व । यथासख्यमिणस्यास् स्सस्य चोसादेश' ।

## न्तस्यासुसो: ।४।१।१०॥

अस्यादेर्लोपः स्यादसुसोः परयो: । भगवता, भगवया । भगवतो, भगवओ । मतिमता, मतिमतो ।

न्तस्येति—आदेर्लोप इति पदद्वयमनुवर्त्तते । प्रत्ययाप्रत्यययोरिति परिभाषया न्तमन्तप्रत्ययस्यैव ग्रहणम् । तेनान्तादिशब्दघटको न्तो न गृह्यते । न्तस्यादिर्नरा-स्तस्य लोप इत्यर्थः । भगवन्त + इणेति स्थितेऽसादेशेऽ ो ) नकारलोपे सवर्ण-दीर्घे भगवता । तकारस्य यकारे भगवया । भगवया । भगवन्त + स्स इत्यत्रो-सादेशे नलोपे परसवर्णे भगवतो । तकारस्य यकारे लोपे च भगवओ । एव मतिमतेत्यादि ।

## इह्यएदओदिर्हितोऽणेपु न्तस्य ।४।१।२५॥

एपु परेपु न्तस्यादेर्लोपो वा स्यात् । भगवएहिं, भगवतेहिं । भगवयाए, भगवताए । भगवया, भगवयाओ, भगवता, भगवताओ । भगवएहिंतो, भगवतेहिंतो । भगवयाण भगवताण । शेष जिणवत् ।

इहीति—आदेर्लोपो वेत्यनुवर्त्तते । इहिश्च अण्च अओच इह्हितोश्चाणश्चेती-तरेतरयोगद्वन्द्व । भगवन्त + इहिमित्यत्र न्तस्यादेर्नकारस्य लोपे तकारस्य यकारे लोपे भगवएहिं । पक्षे भगवन्तेहिं । चतुर्थ्येकवचने भगवयाए, भगवन्ताए । पञ्चम्या भगवया, भगवयाओ, भगवन्ता, भगवन्ताओ । षष्ठीबहुवचने भगव-याण, भगवन्ताणमित्यादि । शेप सप्तम्येकवचनादिक जिणशब्दवत् ।

## सादिदणस्य भवतस्य भे वा ।४।३।२३॥

प्रथमाद्वितीयाषष्ठीबहुवचनसहितस्य भवतस्य भे वा स्यात् । भे । भवतो, भवता । भवते, भवताण ।

सादिदणस्येति—अच इच अणश्चेति द्वन्द्व । तै सहित साद्दिदणस्तस्य । अदिति इदिति अणेति च क्रमेण प्रथमाद्वितीयाषष्ठीबहुवचनानि । स्थलत्रयेऽप्य-नेन भे इत्यादेशे भे । पक्षे भवन्तो भवन्ते इत्यादीनि रूपाणि ।

## सोतो रस्य तारस्य ।३।४।६७॥

तारप्रत्ययसम्बन्धिनो रस्य प्रथमैकवचनसहितस्य वा लोप स्यात् । कत्ता, कत्तारे, कत्तारो । पसत्था, पसत्थारे, पसत्थारो ।

सोत इति—उता सहितस्येति समास । वा लोप इति पदद्वयमनुवर्त्तते । कर्त्तरि ताराकणाविति सूत्रेण जायमानस्य कर्त्रर्थकतारप्रत्ययस्यात्र ग्रहण प्रत्ययाऽप्रत्यययोर्मध्ये प्रत्ययस्य ग्रहणमिति परिभाषया । तेन समवतार इत्यादिस्थले नातिप्रसङ्ग । एकदेशविकृतमनन्यवदिति परिभाषाश्रयणेन पसत्थारशब्दे थारस्यापि तारत्वमक्षतम् । कत्तार + उदित्यत्र प्रत्ययसहितस्य रस्य लोपे कत्ता । लोपाभावपक्षे कत्तारे, कत्तारो । पसत्था इति—प्रपूर्वकससुधातोस्तारप्रत्यये तकारस्य थकारे सकारस्य परसवर्णे पसत्थार इति सिद्धम् । पसत्थार + उदित्यत्र सोतो रस्य लोपे पसत्था । पक्षे पसत्थारे, पसत्थारो इति ।

## उस्ताराद्वा ।४।३।४५॥

तारप्रत्ययान्तात्परयोः प्रथमाद्वितीयाबहुवचनयोरुकारादेशो वा स्यात् । कत्तारो, कत्तारा । कत्तारं । कत्तारो, कत्तारे । एव पसत्थारो, भत्तारो इत्यादि ।

उरिति—अदितोरुर्वेति पदत्रय पूर्वसूत्रादनुवर्त्तते । कत्तार + अदित्यत्र प्रथमाबहुवचनस्योकारादेशे वृद्धौ च कत्तारो । आदेशाभावे परसवर्णे कत्तारा । कत्तारमिति द्वितीयैकवचनान्तमिदम् । कत्तार + इदित्यत्रानेनोकारादेशे कत्तारो । पक्षे वृद्धौ कत्तारे । एवमिति—पसत्थारो, पसत्थारा । पसत्थार । पसत्थारो, पसत्थारे । भत्तारो, भत्तारा । भत्तार । भत्तारो, भत्तारे इत्यादीनि रूपाणि कत्तारवद्बोध्यानि ।

## उस्तारस्यारस्य तृतीयादौ वा ।४।३।१९॥

तारप्रत्ययसम्बन्धिन आरस्योसादेशो वा स्यात्तृतीयादिषु परेषु ।

उस्तारस्येति—वेत्यनुवर्त्तते । सित्त्वात्सर्वादेश ।

## अस्त्रियामिणस्य णाः ।४।३।५२॥

इदुद्भ्या परस्येणप्रत्ययस्य णादेशः स्यादस्त्रियाम् । कत्तुणा । पसत्थुणा । भत्तुणा । पक्षे कत्तारेण । पसत्थारेण । भत्तारेण ।

इणस्येति—इदुद्भ्यामित्यनुवर्त्तते । कत्तार + इणेत्यत्रारभागस्योकारे जातेऽनेनेणप्रत्ययस्य णादेशे कत्तुणा । उकाराभावे कत्तारेण । ममागमे कत्तारेण । एव पसत्थुणा । पसत्थारेण, पसत्थारेण । भत्तुणा । भत्तारेण, भत्तारेण । उसादेशपक्षे शेष साहुवत् । उसादेशाभावे जिणवदिति । आमन्त्रणे तु विशेषस्तमेव दर्शयति—

## उतोऽत्तारादारस्यामन्त्रणे ।३।४।४२॥

तारप्रत्ययान्तान्नाम परस्यामन्त्रणोतोऽत्तारादेशः स्यादारस्य लोपश्च । हे कत्त ! हे भत्त ! हे पसत्थ ! पक्षे जिणवत् ।

उत इति—प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमिति परिभाषया प्रत्ययान्तादिति लाभः । लोप इत्यस्यानुवृत्तिः । कत्तार+उ इति स्थितेऽनेनोकारस्यात्तारादेशे आरभागस्य च लोपे कत्त इति । एवं भत्त इत्यादि । अन्त्यस्य षष्ठ्या इत्यनेनाऽन्त्यस्य लोपो न भवति । आरस्येति विशेषोपादानादुक्त-परिभाषाया अनाप्रवृत्तेः । किन्तु सर्वस्यैव ।

## ओ रायादिभ्यः ।४।३।१५॥

एभ्यः परस्य प्रथमाया एकवचनस्याकारादेशः स्यात् । राया । अप्पा । अत्ता ।

अ इति—ओ इति प्रथमान्तम् । उत इत्यनुवर्तते । आदिशब्देनाप्पादयो गृह्यन्ते । राय+उदित्यत्रानेनाकारादेशे सवर्णदीर्घे राया । एवमप्पादयः ।

## रायादिभ्यो ङम् ।४।३।१३॥

एभ्यः परस्यामन्त्रणैकवचनस्य ङमादेशः स्यात् ।

रायादिभ्य इति—उत आमन्त्रण इति चानुवर्तते । वर्तमानस्येति शेषः । आमन्त्रणे वर्तमानस्य प्रथमैकवचनस्येत्यर्थः । हे राय+उदित्यत्रानेनोतो ङमादेशो भवति ।

## ङिति टे ।४।१।२६॥

ङिति परे टेर्लोपः स्यात् । हे राय ।

ङितीति—लोप इत्यनुवर्तते । टिसंज्ञा समाख्याता पूर्वम् । ङमादेशे सति तस्मिन्नतो लोपे हे राय । अतएव न दीर्घः ।

## अणो रायादिभ्यः ।४।३।२७॥

रायादिभ्यः परयोः प्रथमाद्वितीययोर्बहुवचनयोरणो इत्यादेशः स्यात् । रायाणो ।

अदितोरिति—अदितोरित्यस्यानुवृत्तिः । अथ इथ अदितौ तयोः । अणो-

रिति प्रथमैकवचनान्तम्। राय+अदित्यत्रानेनाणवादेशे सवर्णदीर्घे रायाणो। द्वितीयाबहुवचनेऽपि रायाणो।

## मोऽणङ्रायादिभ्यो वा ।४।३।१५॥

*रायादिभ्यः परस्य मप्रत्ययस्याणङागमो वा स्यात्। रायाण, राय।

म इति—म इति षष्ठ्यन्तम्। अणङिति प्रथमान्तम्। राय+म् इत्यत्र टित्त्वान्मकारस्यादावणङागमे सवर्णदीर्घे मोऽनुस्वारे रायाण। आगमाभावे राय।

## सेणस्य ।४।३।१६॥

तृतीयैकवचनसहितस्य रायशब्दस्य रन्नेत्यादेशः स्यात्। रन्ना।

रायस्येति—अनेकवर्णत्वात्सर्वादेश। क्वचिदेकदेशन्यायेन सेणस्येति विशेषणबलाच्च। रायशब्दमात्रानुवृत्तेर्विशेषणानुरूपविभक्तिविपरिणामाच्च वृत्तौ रायशब्दस्येत्युक्तम्।

## इह्मणयोरिः ।४।३।१७॥

रायशब्दस्येकारोऽन्तादेशः स्यादिह्मणयोः परयोः। राईहि, राईहिं।

इहीति—रायस्येत्यनुवर्त्तते। अन्त्यस्य षष्ठ्या इत्यनेनान्त्यादेश। राय+इहीत्यत्र यकारोत्तराकारस्येकारादेशे यलोपे सवर्णदीर्घे राईहि। ममागमे राईहिं।

## सस्सस्य रन्नोः ।४।३।१८॥

षष्ठ्येकवचनसहितस्य रायशब्दस्य रन्नो इत्यादेशः स्यात्। रन्नो। राईण, राईण। शेष जिणवत्।

सस्सस्येति—रायस्येत्यस्यानुवृत्ति। स्सेन सहित सस्सस्तस्य। रन्नोरिति प्रथमैकवचनान्तम्। राय+स्सेत्यत्रानेनादेशे रन्नो। राय+अणेत्यत्राकारस्येकारादेशे यलोपे सवर्णदीर्घे राईण। ममागमे राईण। पचमीसप्तम्यादिषु जिणवद्रूपाणि बोध्यानि।

## अत्ताप्पाभ्याम् ।४।३।५३॥

आभ्या परस्येणप्रत्ययस्य णा इत्यादेश. स्यात्। अत्तणा। अप्पणा।

अत्तेति—इणस्य णेत्यस्यानुवृत्ति । अनेकवर्णत्वात्सर्वादेश । अत्तात्पशब्दा वात्मवाचकौ । तद्रूपाणि प्रथमाद्वितीययो रायवद्भवन्ति । तृतीयैकवचनेऽनेन णादेशे अत्तणा, अप्पणा ।

## स्सस्य णो' ।४।३।५४॥

आभ्या परस्य ङसप्रत्ययस्य णो इत्यादेश स्यात् । अत्तणो । अप्पणो ।
शेष जिणवत् ।

स्सस्येति—अत्ताप्पाभ्यामिति पूर्वसूत्रादनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । चतुर्थीषष्ठयेकवचनेऽनेन णो इत्यादेशे अत्तणो । अप्पणो । अन्यानि रूपाणि जिणशब्दवज्ञेयानि ।

## इणातोत्स्सेषु जसादीना सक् ।४।३।६१॥

एषु परेषु जसादीना सगागमो वा स्यात् ।

इणेति—वेत्यनुवर्त्तते । जस, मण, वय, काय, तेय, चक्खु, जोग, एते जसादय । कित्वादन्त्यावयवः । तेन जसादीना सान्तत्व निष्पद्यते ।

## सान्तादिणस्या· ।४।३।५५॥

सकारान्तान्नाम्नः परस्येणप्रत्ययस्यासादेश' स्यात् । जससा । मणसा ।
वयसा । कायसा । तेयसा । चक्खुसा । जोगसा ।

सान्तादिति—सान्तादिति पञ्चम्यन्त विशेषणम् । नाम्न इति विशेष्येण तदन्वय । आसादेशे सकार इत्सञ्ज्ञकस्तेन सित्त्वात्सर्वादेश । जसादीना सगागमेन सान्तत्वे निष्पन्नेऽनेनेणस्यासादेशे जससा, मणसा, वयसा इत्यादि । सगागमाभावे तु जसेण, मणेण, वएण, काएण इत्यादि ।

## अतोत्स्सयोरो ।४।३।५६॥

सकारान्तान्नाम्न परयोरतोत्स्सयोरोमादेश स्यात् । जससो । मणसो ।
वयसो । कायसो । तेयसो । चक्खुसो । जोगसो ।

अतोदिति—सान्तादित्यस्यानुवृत्ति । अतोश्च स्सश्च अतोत्स्सौ तयो । सित्त्वात्सर्वादेश । जसादीना सगागमे सति सान्तत्वेऽस्य सूत्रस्य प्रवृत्ति । पञ्चमीषष्ठयेकवचनयोरोत्वे जससो, मणसो इत्यादि । सगागमाभावे जसस्स ।

मणस्स । वयस्स इत्यादि । मण + मि इत्यत्र मेरादेर्मिन्नेन मकारस्य सकारे मौ व्यञ्जनादाविति ममागमे मणसि । ममागमस्य बाहुल्येन कचित्तदभावे मणसि । मकाराभावे ममागमे मणमि ।

## कम्मधम्मयोरु ।४।३।६७॥

एतयोरुकारादेशो वा स्यादिणप्रत्यये परे । कम्मुणा । धम्मुणा । शेष जिणवत् ।

कम्मधम्मयोरिति—इणे वेति पदद्वयानुवृत्ति । अन्त्यस्य षष्ठ्येति परिभाषयाऽन्त्यादेश । एतयो —कम्मधम्मशब्दयो । उकारादेशे मतीणस्य णेत्यनेन णादेशे कम्मुणा, धम्मुणा । पक्षे कम्मेण, धम्मेण । तृतीयैकवचन विनाऽन्यत्र जिणशब्दवद्रूपाणि ज्ञेयानि ।

इकारान्तः पुलिङ्गो मुणिशब्दः ।

## आदिदुद्भ्य स्वरे सुपि पूर्वस्य ।३।२।३२॥

आकारादिकारादुकाराच्च स्वरादौ सुपि परे पूर्वपरयो पूर्वसवर्णदीर्घ एकादेशः स्यात् । मुणी ।

आदिदुद्भ्य इति—पूर्वपरयो सवर्ण दीर्घ इत्येतत्पदत्रयमनुवर्त्तते । सवर्णे स्वरेऽदित इति सूत्रेण दीर्घे सिद्धेऽप्यसवर्णस्वरादौ सुपि दीर्घविधानार्थमिद सूत्रम । तथा च सवर्णे सुप्यप्यनेनैव दीर्घो विशेषविहितत्वात । आच्च इश्च उश्चा-त्दुतस्तेभ्य । स्वरे सुपीति सप्तम्यन्त वर्णविधौ तदादाविति परिभाषया स्वरादाविति लाभ. । मुणि + उदित्यत्रानेनेकारोकारयो पूर्वसवर्णदीर्घैकादेशे मुणी ।

## इदुद्भ्यां णोरदितो ।४।३।४९॥

इदुद्भ्या परयोः प्रथमाद्वितीयाबहुवचनयोर्णो इत्यादेशो वा स्यात्पुंसि । मुणिणो, मुणी । मुणिं । मुणिणो, मुणी । मुणिणा । मुणीहिं, मुणीहि ।

इदुद्भ्यामिति—पुंसि वेति पदद्वयस्यानुवृत्ति । मुणि + अ इत्यत्रानेन णो इत्यादेशे मुणिणो । आदेशाभावे पूर्वसवर्णदीर्घे मुणी । एवमग्रेपि । मुणि + इणे-त्यत्र इणस्य णेत्यनेन णादेशे मुणिणा । मुणि + इहि—अत्र सवर्णदीर्घे ममागमे च मुणीहिं । ममागमाभावे मुणीहि ।

## अएदतोऽस्सानामस्त्रियाम् ।४।३।५०॥

इदुद्भ्या परेषामेषा णो इत्यादेशो वा स्यादस्त्रियाम् । मुणिणो, मुणिम्म, मुणीए । मुणीण, मुणीण । मुणिणो, मुणीओ । मुणीहिन्तो । मुणिणो, मुणिस्स । मुणीण । मुणिंसि, मुणिंमि, मुणीसु ।

अएदिति—इदुद्भ्याम् णो वेति पदत्रयम्यानुवृत्ति । अश्च अतोश्च स्सश्च अश्चातोस्सास्तेषामिति विग्रहः । मुणि + अए इत्यत्रानेन णो इत्यादेशे मुणिणो । पक्षे अत स स इति स्मादेशे मुणिस्स । पक्षे आदिदुद्भ्य इत्यादिना पूर्वसवर्णदीर्घे मुणीए इति रूपं भवति । मुणि + अण इत्यत्र आदिदुद्भ्य इत्यादिना पूर्वसवर्णदीर्घे इणाणेह्रीसीसूनागिस्यनेन वैकल्पिके ममागमे मुणीण । ममागमाभावे मुणीण । मुणि + अओत् अत्रानेन णो इत्यादेशे मुणिणो । पक्षे अकारस्य पूर्वसवर्णदीर्घादेशे प्रकृतिभावे मुणीओ । मुणि + इहितो अनादिदुत इति सूत्र प्रवाध्य पूर्वसवर्णदीर्घे मुणीहिन्तो । मुणि + स्स इत्यत्रानेन सूत्रेण णो इत्यादेशे मुणिणो । पक्षे मुणिस्स । मुणीण पूर्ववत् । मुणि + मि इत्यत्र सिरिति स्मादेशे मो व्यञ्जनादो नाम इत्यनेन ममागमे मुणिंसि । स्मादेशाभावे मुणिंमि । मुणि + इसु अत्र सवर्णदीर्घे मुणीसु ।

## इदुद्भ्यामामन्त्रण उत ।३।४।६८॥

इकारोकाराभ्या परस्यामन्त्रणैकवचनस्य लोपो वा स्यात् । भो ! मुणि ! मुणी ! मुणिणो, मुणी । एवं तरस्सिगिरिजलहिप्रभृतय ।

इदुद्भ्यमिति—लोपो वेति पदद्वयमनुवर्त्तते । मुणि + उ इत्यत्रानेनोतो लोपे भो ! मुणि ! पक्षे पूर्वसवर्णदीर्घे भो ! मुणी ! मुणि + अ इत्यत्राएदतोस्सानामस्त्रियामिति सूत्रेण णो इत्यादेशे भो ! मुणिणो ! पक्षे पूर्वसवर्णदीर्घे भो ! मुणी ! एवं सर्वत्र बोध्यम् ।

---

# अथ उकारान्ताः पुंलिङ्गाः ।

## साहु ।

## अतोऽयोडवोडौ पुंसि ।४।३।५१॥

इकारोकाराभ्या परस्य प्रथमाबहुवचनस्य क्रमेणायोड् अवोड् इत्यादेशौ वा स्याता पुंसि। साहवो, साहुणो, साहू । साहु । साहुणो, साहू । साहुणा। साहूहिं, साहूहि । साहुस्स, साहुणो, साहूए । साहूण, साहूणं। साहुणो, साहूओ । साहूहिन्तो। साहुस्स, साहुणो। साहूण, साहूण। साहुसि, साहुमि। साहूसु। भो साहु ! साहू! साहवो, साहुणो, साहू । एव सनन्नुभाणुप्रभृतयः।

अतोऽयोडेति—इदुद्भ्याम् वा इति चानुवर्त्तते । अत इति पञ्च्यन्तम् । अयोडवोडौ इति प्रथमाद्विवचनान्तम्। पुसीति सप्तम्यन्तम् । इकारात्परस्यायोड् उकारात्परस्यावोडित्यर्थ । साहु + अ इत्यत्रानेन सूत्रेणाकारस्यावोडादेशे डित्वा-ट्टेर्लोपे साहवो । एतदभावे णो इत्यादेशे साहुणो । पक्षे पूर्वसवर्णदीर्घे साहू । साहु + म् इत्यत्रानुस्वारे साहु । साहु + इ इत्यत्रेकारस्य णो इत्यादेशे साहुणो। पक्षे पूर्वसवर्णदीर्घे साहू । साहु + इणेत्यत्र इणस्य णा इत्यनेन णादेशे साहुणा । साहु + इहि इत्यत्रेणाणेहीसीसूनामिति वैकल्पिके ममागमे पूर्वसवर्णदीर्घे साहूहि । साहु + अए इत्यत्र अएत स्सो नाम्न इत्यनेन स्सादेशे साहुस्स, तदभावे णो इत्यादेशे साहुणो। तदभावे पूर्वसवर्णदीर्घे साहूए। साहु + अण इत्यत्र पूर्वसवर्ण-दीर्घे इणाणेहीसीसूनामिति सूत्रेण वैकल्पिके ममागमे मस्यानुस्वारे साहूण। पक्षे साहूण । साहु + अतो इत्यत्र अएदत्तोत्सानामस्त्रियामित्यनेन णो इत्यादेशे साहुणो। पक्षे तकारस्य यकारे लोपे पूर्वसवर्णदीर्घे प्रकृतिभावे साहूओ। साहु + इहिन्तो इत्यत्र पूर्वसवर्णदीर्घे साहूहिन्तो। साहुस्स, साहुणो, साहूण, साहूण। अन्य पूर्ववज्ज्ञेयम् । साहु + मि इत्यत्र सिरिति सूत्रेण स्यादेशे मौ व्यञ्जनादौ नाम्न इत्यनेन ममागमेऽनुस्वारे साहुसि। स्यादेशाभावे साहुमि। साहुइ + सु इत्यत्र पूर्वसवर्णदीर्घे साहूसु । साहु + उ इत्यत्रोतो लोपे भो ! साहु ! पूर्वसवर्णदीर्घे भो ! साहू ! शेष पूर्ववत्। एव सनन्नुभाणुप्रभृतयो बोध्या ।

## अएदतोत्स्सानामस्त्रियाम् ।४।३।५०॥

इदुद्भ्या परेषामेषां णो इत्यादेशो वा स्यादस्त्रियाम् । मुणिणो, मुणिम्म, मुणीए । मुणीण, मुणीण । मुणिणो, मुणीओ । मुणीहिन्तो । मुणिणो, मुणिस्स । मुणीण । मुणिंमि, मुणिंमि, मुणीसु ।

अएदिति—इदुद्भ्याम् णो वेति पदत्रयस्यानुवृत्तिः । अण्च अतोश्च स्सश्च अण्दतोत्सास्तेषामिति विग्रहः । मुणि + अण इत्यत्रानेन णो इत्यादेशे मुणिणो । पक्षे अण्त स्स इति स्सादेशे मुणिस्स । पक्षे आदिदुद्भ्य इत्यादिना पूर्वसवर्णदीर्घे मुणीए इति रूप भवति । मुणि + अण इत्यत्र आदिदुद्भ्य इत्यादिना पूर्वसवर्णदीर्घे इणाणेहीसीसूनामित्यनेन वैकल्पिके मगागमे मुणीण । मगागमाभावे मुणीण । मुणि + अओत् अत्रानेन णो इत्यादेशे मुणिणो । पक्षे अकारस्य पूर्वसवर्णदीर्घादेशे प्रकृतिभावे मुणीओ । मुणि + इहितो अत्रादिदुत इति सूत्र प्रबाध्य पूर्वसवर्णदीर्घे मुणीहिन्तो । मुणि + स्स इत्यत्रानेन सूत्रेण णो इत्यादेशे मुणिणो । पक्षे मुणिस्स । मुणीण पूर्ववत् । मुणि + मि इत्यत्र सिम्मित्ति स्यादेशे मौ व्यञ्जनादौ नाम्न इत्यनेन ममागमे मुणिंसि । स्यादेशाभावे मुणिंमि । मुणि + इसु अत्र सवर्णदीर्घ मुणीसु ।

## इदुद्भ्यामामन्त्रण उत ।३।४।६८॥

इकारोकाराभ्या परस्यामन्त्रणैकवचनस्य लोपो वा स्यात् । भो ! मुणि ! मुणी । मुणिणो, मुणी । एव तनस्मिगिरिजलहिप्रभृतयः ।

इदुद्भ्यमिति—लोपो वेति पदद्वयमनुवर्त्तते । मुणि + उ इत्यत्रानेनोतो लोपे भो ! मुणि ! पक्षे पूर्वसवर्णदीर्घे भो ! मुणी ! मुणि + अ इत्यत्राएदतोत्स्सानामस्त्रियामिति सूत्रेण णो इत्यादेशे भो ! मुणिणो ! पक्षे पूर्वसवर्णदीर्घे भो ! मुणी ! एव सर्वत्र बोध्यम् ।

---

# अथ उकारान्ताः पुंलिङ्गाः ।

## साहु ।

### अतोऽयोडवोडौ पुंसि ।४।३।५१॥

इकारोकाराभ्या परस्य प्रथमाबहुवचनस्य क्रमेणायोड् अवोड् इत्यादेशौ वा स्यातां पुंसि। साहवो, साहुणो, साहू । साहु । साहुणो, साहू । साहुणा। साहूहिं, साहूहि । साहुस्स, साहुणो, साहूए । साहूण, साहूणं। साहुणो, साहूओ। साहूहिन्तो। साहुस्स, साहुणो। साहूणं, साहूण। साहुसि, साहुमि। साहूसु। भो साहु ! साहू ! साहवो, साहुणो, साहू। एव सवन्नुभाणुप्रभृतयः।

अतोऽयोडेति—इदुद्भ्याम् वा इति चानुवर्तते । अत इति षष्ठ्यन्तम् । अयोडवोडौ इति प्रथमाद्विवचनान्तम् । पुंसीति सप्तम्यन्तम् । इकारात्परस्यायोड् उकारात्परस्यावोडित्यर्थः । साहु + अ इत्यत्रानेन सूत्रेणाकारस्यावोडादेशे डित्वाट्टेर्लोपे साहवो । एतदभावे णो इत्यादेशे साहुणो । पक्षे पूर्वसवर्णदीर्घे साहू । साहु + म् इत्यत्रानुस्वारे साहु । साहु + इ इत्यत्रेकारस्य णो इत्यादेशे साहुणो । पक्षे पूर्वसवर्णदीर्घे साहू । साहु + इणेत्यत्र इणस्य णा इत्यनेन णादेशे साहुणा । साहु + इहि इत्यत्रेणाणेहीसीसूनामिति वैकल्पिके मसागमे पूर्वसवर्णदीर्घे साहूहिं । साहु + अए इत्यत्र अएत स्सो नाम्न इत्यनेन स्सादेशे साहुस्स, तदभावे णो इत्यादेशे साहुणो । तदभावे पूर्वसवर्णदीर्घे साहूए। साहु + अण इत्यत्र पूर्वसवर्णदीर्घे इणाणेहीसीसूनामिति सूत्रेण वैकल्पिके मसागमे मस्यानुस्वारे साहूणं । पक्षे साहूण । साहु + अतो इत्यत्र अएदतोस्सानामरित्रयामित्यनेन णो इत्यादेशे साहुणो । पक्षे तकारस्य यकारे लोपे पूर्वसवर्णदीर्घे प्रकृतिभावे साहूओ । साहु + इहिन्तो इत्यत्र पूर्वसवर्णदीर्घे साहूहिन्तो । साहुस्स, साहुणो, साहूणं, साहूण । अत्र पूर्ववज्ज्ञेयम् । साहु + मि इत्यत्र सिरिति सूत्रेण स्यादेशे मौ व्यञ्जनादौ नाम्न इत्यनेन मसागमेऽनुस्वारे साहुसि । स्यादेशाभावे साहुमि । साहुइ + सु इत्यत्र पूर्वसवर्णदीर्घे साहूसु । साहु + उ इत्यत्रोतो लोपे भो ! साहु ! पूर्वसवर्णदीर्घे भो ! साहू ! शेष पूर्ववत् । एव सवन्नुभाणुप्रभृतयो बोध्या ।

## बहोरवेडतो वा पुंसि ।४।३।५७॥

बहुशब्दात्परस्य प्रथमाबहुवचनस्यानेडादेशो वा स्यात् । बहवे, बहवो, बहुणो । बहू ।

बहोरिति—बहोरिति पञ्चम्यन्तम् । अवेडिति प्रथमान्तम् । अत इति षष्ठ्यन्तम् । वेत्यनुवर्त्तते । बहु + अ इत्यत्रानेन सूत्रेणावडादेशे डित्वादुकारस्य लोपे बहवे । अवेडादेशाभावेऽतोऽयोडत्रोदौ पुंसीति सूत्रेणायोडादेशे उलोपे बहवो । पक्षे णो इत्यादेशे बहुणो पूर्वसवर्णदीर्घे बहू । बहुशब्दो बहुत्व संख्याविशिष्टवाचक । अतो नित्य बहुवचनान्त । शेष साधुवत् ।

## पितुप्रभृतिभ्यो डा ।४।३।४॥

एभ्यो विहितस्योत्प्रत्ययस्य डादेश स्यात् । पिया, पिता ।

पितुप्रभृतिभ्य इति—उत इत्यनुवर्त्तते । पितु + उत् इत्यत्रानेनोत स्थाने डादेशे तकारस्य यकारे पिया । यकाराभावे पिता ।

## अतोडरो ।४।३।५॥

पितुप्रभृतिभ्य शब्दस्य परस्यातो डरो इत्यादेश स्यात् । पियरो, पितरो ।

अत इति—पितुप्रभृतिभ्य इत्यनुवर्त्तते । पितु + अत इत्यत्रानेन सूत्रेणातो डरो इत्यादेशे डस्य लोपे डित्वाट्टिलोपे तस्य यत्वे पियरो । यत्वाभावे पितरो । अयमादेशो नित्यस्तेन पक्षे पूर्वसवर्णदीर्घ विभाय पितू इत्येव न भवति ।

## मो डरम् ।४।३।७॥

पितुप्रभृतिभ्य शब्दस्य परस्य मस्य डरमित्यादेश स्यात् । पियर, पितर ।

म इति—पितुप्रभृतिभ्य इत्यस्यानुवृत्ति । पितु + म इत्यत्रानेन सूत्रेण मकारस्य डरमित्यादेशे डलोपे डित्वाट्टिलोपे तकारस्य यकारे मस्यानुस्वारे पियर । यकाराभावपक्षे पितर । अत्रादेशस्य नित्यत्वात् पितुमिति न ।

## ए स्ससस्य वा ।४।३।६॥

पितुप्रभृतिभ्य' शब्दस्य परस्य स्सस्यैसादेशो वा स्यात् । पिउए, पिउस्स, पिउणो ।

ए स्सेति—पितुप्रभृतिभ्य इत्यनुवर्त्तते । अत्र स्सप्रत्ययस्य सामान्यतयोक्तत्वेन चतुर्थ्येकवचने स्सादेशोऽव्ययगादेशो बोध्य । पितु+आए इत्यत्रागत स्सो नाम्न इति सूत्रेण स्सादेशेऽनेन सूत्रेणैकारादेशे तकारस्य यकारे लोपे प्रकृतिभावे च पिउए । एतदभावे पिउस्स । स्सादेशाभावेऽएदतोत्स्सानामस्त्रियामिति सूत्रेण णो इत्यादेशे पिउणो । एव षष्ठ्येकवचनेऽपि ।

## उत आमन्त्रणे डश्च ।४।३।८॥

पितुप्रभृतिशब्देभ्यः परस्यामन्त्रणैकवचनस्योतो डडरमावादेशौ स्यातां पर्यायेण । हे पिय ! हे पियरम् ! शेष साहुवत् । एव भातु नत्तु जामात्वादयः।

उत इति—पितुप्रभृतिभ्य इत्यनुवर्त्तते डरमिति च । पितु+उ इति स्थितेऽनेनोकारस्य डादेशे डलोपे डित्वाट्टिलोपे तकारस्य यत्वे स्वराधस्य स्वरे इत्यत्र बहुलमित्यनुवृत्त्या यलोपाभावे हे पिय ! उकारस्य डरमादेशपक्षे डलोपे डित्वाट्टिलोपे तकारस्य यकारे हे पियरम् ! अत्रापि पूर्ववद् यलोपाभाव , बहुवचने प्रथमाबहुवचनवत् । शेषमिति पिउणो, पिऊ द्वि० व० । पिउणा, पिऊहिं, पिऊहि । तृ ०। पिउण, पिऊण च० बहु० । पिउणो, पिऊओ, पिऊहिंतो पञ्चमी । षष्ठी चतुर्थीवत । पिउस्सि, पिउम्मि । पिऊसु । स० ।

## ओत उदिहीहिंतविसुषु ।३।२।२६॥

ओतः परेषु उत् इहि इहिंतो इसु इत्येतेषु परेषु पूर्वपरयोः पूर्वसजातीयः स्यात् । गो ।

ओत इति—पूर्वपरयो पूर्व इत्यनुवर्त्तते । गोशब्दादुति प्रत्ययेऽनेनौकारस्योकारस्य चोभयो स्थाने ओकारे गो । एवमेव गोहिं । गोहिंतो । गोसु ।

## डावोर्गो. ।४।३।३९॥

गोः परयोरदितोर्डावोरादेशो भवति । गावो ।

डावोरिति—अदितोरित्यनुवर्त्तते । प्रथमाबहुवचनेऽतो द्वितीयाबहुवचने इतश्चानेन डावोर्भवति । तथा च गोशब्दादति विभक्तौ डावादेशे डिति टिलोपे गावो । एवमेव द्वितीयाबहुवचने बोध्यम् ।

## मिणाएदतोत्स्ससिपु गोर्गवः ।४।३।२०॥

एषु परेषु गोशब्दस्य गवादेशः स्यात् । गवं । गावो । गवेण । गोहिं । गवाए । गव । गवा, गवाओ । गोहिंतो । गवस्स ।

मिणाएदिति—मश्चणश्चाणश्चाएश्च स्मश्च सिश्चेति विग्रहः, इतरेतरयोगद्वन्द्वः । अनेकवर्णत्वात्सर्वादेशः । आदेशोऽदन्तः । अनयैवागमादेशो जिणवत्कार्याणि भवन्ति । गोहिं इत्यादौ तु गोवत्कार्याणि भवन्ति । गोशब्दादनन्तरविभक्तौ वक्ष्यमाणसूत्रेण डयमादेशे टिलोपे गव । एवमेव षष्ठीबहुवचनेऽपि ।

## अणस्य डवम् ।४।३।२१॥

गो परस्याणप्रत्ययस्य डवमादेशः स्यात् । गव । गवे, गवम्मि, गवम्मि । गोसु । हे गो ! गावो ।

अणस्य इति—टायोरिति सूत्रतो गोरित्यनुवर्तते । अनेकवर्णत्वात्सर्वादेशः । गोशब्दादणस्य डवमादेशे टिलोपे गव । मस्यानुस्वारः । सम्बोधने प्रथमावत् सामान्यतया उदतोरुपादानात् ।

---

## अथ सव्वणामशब्दाः ।

---

## सव्वादीनि सव्वणामानि ।१।१।२६॥

सव्वादयः शब्दाः सव्वणामसञ्ज्ञाः स्युः । सव्वे, सव्वो ।

सव्वादय इति—सव्वादीनुद्दिश्य सव्वणामसञ्ज्ञा विधीयते न तु सव्वणाममुद्दिश्य सव्वादिसञ्ज्ञा, लाघवार्थमेव सञ्ज्ञाया आवश्यकतयैकस्यानेकसञ्ज्ञाकरणे लाघवाभावेन तत्करणं व्यर्थं स्यात् । किञ्च यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणलक्षिततया सव्वादेरेवोद्देश्यत्वमुचितम् । न च सञ्ज्ञाया लाघवप्रयोजनकतया सादिसञ्ज्ञामपहाय नववर्णघटितगुरुसञ्ज्ञाविधाने किं फलमिति

यान्य, सव्वेसिं णाम सव्वणामभिति महासञ्ज्ञया सर्वार्थवाचकस्यैव सव्वणाम-सञ्ज्ञाया लाभेन यत्र कस्यचित् सव्वेति नाम कृत्वा सव्वशब्द प्रयुज्यते तत्र सव्वशब्दस्य सर्वार्थवाचकत्वाभावेन सव्वणामसञ्ज्ञाया अप्रवृत्तेरेव फलत्वात् । एवमग्रेऽपि । सव्व+उ इति स्थिते इदुत पुस्यत इत्यनेनोकारस्येकारे वृद्धावेकारे सव्वे । इकाराभावे वृध्यावोकारे सव्वो ।

## इः सव्वणामात् ।४।३।५८॥

अकारान्तसव्वणामशब्दात्प्रथमाबहुवचनस्येकारादेश' स्यात्पुसि । सव्वे । सव्वं । सव्वे । सव्वेण, सव्वेण । सव्वेहिं, सव्वेहि । सव्वस्स, सव्वाए ।

इः सव्वेति—पुसीत्यनुवर्त्तते अत इति च । यद्यपि सामान्यत प्रथमावि-भक्तौ विधानेऽपि न क्षति प्रथमैकवचनेऽपि सव्वे इत्यस्येष्टत्वात् । ननु तथा सति सव्वो इति कथ भवेदिति चेन्न, बहुलग्रहणसम्बन्धात्प्रथमैकवचने विक-ल्पेन प्रवृत्त्योक्तरूपसिद्धे । तथापि बहुलग्रहणसम्बन्धाभावसूचनायैव तथोक्तम-न्यथाऽत्रापि विकल्प सम्भवेत् । तथा चात्रापि सव्वो इत्यनिष्ट रूप विकल्पेन स्यात् । सव्व+अ इत्यत्रानेनाकारस्येकारे वृद्धावेकारे सव्वे । सव्व+म् इत्यना-नुस्वारे सव्व । सव्वे पूर्ववत् । सव्व+इण इत्यत्रेणाणेहीमीसूनामिति सूत्रेण विकल्पेन ममागमेऽनुस्वारे वृद्धौ सव्वेण । ममागमाभावे सव्वेण । सव्व+इहि अत्र ममागमेऽनुस्वारे वृद्धौ सव्वेहिं । ममागमाभावपक्षे सव्वेहि । सव्व+अए इति स्थितेऽएत स्स इत्यादिना स्सादेशे सव्वस्स । पक्षेऽदिदुत इति सूत्र प्रबाध्य पूर्वसवर्णदीर्घे प्रकृतिभावे सव्वाए ।

## अणस्येसिरस्त्रियाम् ।४।३।६१॥

अकारान्तसव्वणामशब्दात्परस्याणप्रत्ययस्येसिरादेश' स्यादस्त्रियाम् ।

सव्वेसिं, सव्वेसि । सव्वा, सव्वाओ । सव्वेहिंतो । सव्वस्स । सव्वेसिं, सव्वेसि । सव्वसि, सव्वम्मि, सव्वे । सव्वेसु ।

अणस्येसिरिति—सव्वणामात् अत इति पदद्वयमनुवर्त्तते । अनेकवर्ण-त्वात्सर्वादेश । सव्व+अण इत्यत्रानेन इसि इत्यादेशे इणाणेहीसीसूनामित्यनेन वैकल्पिके ममागमेऽनुस्वारेऽत स्वरे परस्य सवर्ण इति सूत्रेण वृद्धौ सव्वेसिं । ममागमाभावे सव्वेसि । सव्व+अत्तोदिति स्थितेऽत्तोतोऽत इति सूत्रेणौकारस्य लोपे तकारस्य यकारे लोपे पूर्वसवर्णदीर्घे च सव्वा । पक्षे पूर्वसवर्णदीर्घे तकारस्य

यत्वे यस्य लोपे प्रकृतिभावे मव्वाओ । सव्व + इहितो इति स्थिते वृद्धौ बहुल ग्रहणात्तकारस्य यकाराभावे मव्वेहितो । मव्वस्स । सव्वेसि पूर्ववत् ।

## से. स्सि वा ।४।३।५९।।

अकारान्तमव्वणामशब्दात्परस्य सप्तम्येकवचनस्य से' स्सिमादेशो वा स्यात् । मव्वम्मि ।

से' स्सिमिति—अत सव्वणामादिति पदद्वयमनुवर्त्तते । मव्व + मि इत्यत्र सिरित्यनेन स्यादेशेऽनन सूत्रेण से स्सिमादेशेऽनुस्वारे मव्वसि । पक्षे सव्व + मि इत्यत्र सिरित्यनेन स्यादेशे मौ व्यञ्जनादौ नाम इत्यनेन ममागमेऽनुस्वारे सव्वमि । स्यादेशाभावे मव्वमि । पक्षे मेग्नि इति सूत्रेण इसादेशे वृद्धौ सव्वे । सव्व + इसु इत्यत्र वृद्धौ मव्वेसु ।

## जतकेभ्योऽतोतो वा म्हा ।४।३।६२।।

सर्वनामसञ्ज्ञकेभ्यं एभ्य परस्य पञ्चम्येकवचनस्य म्हादेशो वा स्यादस्त्रियाम् । जम्हा । शेष सव्वशब्दवत् ।

जतकेभ्य इति—यश्च तश्च यश्चेति द्वन्द्व । सव्वणामात् अस्त्रियामिति पदद्वयमनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । ज + अतोदित्यत्रानेन सूत्रेण विभक्तेर्म्हादेशे जम्हा । म्हादेशाभावेऽतोतोऽतइति सूत्रेणौकारस्य लोपे तस्य यत्वे यलोपे पूर्वसवर्णदीर्घे च जा । पक्षे पूर्वसवर्णदीर्घे तकारस्य यकारे लोपे प्रकृतिभावे जाओ । शेषमिति—जे, जो । जे ॥ प्र० ॥ ज । जे ॥ द्वि० ॥ जेण, जेण, जेहिं, जेहि ॥ तृ० ॥ जस्स, जाए । जेसिं, जेसि ॥ च० ॥ जेहिंतो ॥ प० बहु० ॥ जस्स । जेसिं, जेसि ॥ ष० ॥ जसि, जमि, जे, जम्मि । जेसु ॥ स० ॥ शेष सव्वशब्दवदित्यत्र जशब्दस्येति शेष । तादिशब्देषु विशेषरूपाणा मूल एव दर्शितत्वात् ।

## उत्येततयोरक्लीवे स ।२।३।७८।।

एततशब्दयोरुपधाया प्रथमैकवचने परे मकारादेश' स्यादक्लीने ।

उत्येतेति—उपधाया इत्यनुवर्त्तते । उनि एततयो अक्लीवे स इति पदचतुष्टयम् । एतश्च तश्चेति द्वन्द्व । अन्यवचने परे क्लीवे च सकाराभावादुतीति अक्लीवे इति चोक्तम् । सकारोत्तराकार उच्चारणार्थ ।

## एतताभ्यां पुंसि वा ।३।४।७०॥

आभ्यां परस्य प्रथमैकवचनस्य लोपो वा स्यात्पुंसि । स, से, सो । ते ।

एतताभ्यामिति—उत इति लोप इति द्वयोरनुवृत्ति । त + उ इत्यत्रोत्येत-तयोरक्लीबे स इत्यनेन तकारस्य सकारेऽनेन विभक्तेर्लोपे स । लोपाभावे 'इदुत पुस्यत्' इति सूत्रेणोकारस्येकारे वृद्धौ से । तदभावे वृद्धौ सो । ते । त । ते । तेण, तेण । तेहिं, तेहि । तस्स, ताए । तेसिं, तेसि । त + अतोदित्यत्र 'अतवेभ्योऽतोतो वा म्हा' इति विभक्तेर्म्हादेशे तम्हा । एतदभावेऽतोतोऽत इति सूत्रेणौकारस्य लोपे तकारस्य यकारे यलोपे पूर्वसवर्णदीर्घे च ता । पक्षे पूर्व-सवर्णदीर्घे तस्य यत्वे लोपे प्रकृतिभावे ताओ । तेहिंतो ।

## तस्य सस्सस्य सेः ।४।३।७२॥

तशब्दस्य षष्ठ्येकवचनस्ससहितस्य से इत्यादेशो वा स्यात् । से, तस्स । तेसिं, तेसि । शेष जशब्दवत् ।

तस्येति—स्सेन सहित मस्सस्तस्येत्यर्थ । वेत्यनुवर्त्तते । षष्ठ्येकवचन एवायमादेशो न तु चतुर्थ्यामप्यनभिधानात्तदाह षष्ठ्येकवचनेति । त + स्सेत्य-त्रानेन प्रकृतिप्रत्यययोरुभयो स्थाने से इत्यादेशे से, तस्येत्यर्थ । पक्षे तकारस्य स्सादेशे तस्स । तेसिं, तेसि । तसि, तम्मि, ते तस्सिं । तेसु । के, को । के । क । के । केण, केण । केहिं, केहि । कस्स, काए । केसिं, केसि । कम्हा, का, काओ ।

## कादिहिन्तोरितो डओ ।४।३।२३॥

कशब्दात्परस्येहिंतोप्रत्ययस्यादेर्डओ इत्यादेशः स्यादस्त्रियाम् । कओहिंतो । शेष जशब्दवत् ।

कादीति—कात् इहिंतो इत डओरिति पदचतुष्टयम् । अस्त्रियामित्य नुवर्त्तते । क + इहिंतोऽत्रानेन विभक्तेरादेरिकारस्य डओ इत्यादेशे डलोपे डित्त्वाट्टिलोपे प्रकृतिभावे कओहिंतो । कस्स । केसिं, केसि । इत्यादि ।

## इमस्य सोत पुस्ययम् ।४।३।२४॥

इमस्येति—उः मः सौ इत्यस्य, मोन इत्यर्थः । वेत्यनुवर्तते । इम+उ इत्यत्र प्रकृतिप्रत्ययोरुभयोः स्थानेऽयमित्यादेशो अगम् । पक्षे 'अदुत पुरुषत' इत्यनेनकारादेशो वृद्धौ इमे ।

## इमस्य मोर्णद् ।४।२।५॥

इमसम्बन्धिनो मो इत्यस्य णडागमो वा स्यात् । इणमो, इमो । इमे ।

इमस्येति—वेत्यनुवर्तते । इम+उ इत्यत्रेणागमाभावे वृद्धौ इमो इति स्थितेऽनेन सूत्रेण मो इत्यस्य णडागमे टित्वादाद्यवयवे इणमो । णडागमाभावे इमो । इणमो इत्यत्र "जयू' इणमो अण्हयसवरविणिवाइय पवयणस्स णिस्स द' इति पण्ह० १, १, प्रमाणमस्ति । इम+अ इति स्थिते 'इ सव्वणामाद्त' इत्यनेनाकारस्येकारादेशे वृद्धावेकारे इमे ।

## मस्य णो मि ।४।३।२७॥

इमशब्दसम्बन्धिमकारस्य णकारादेशो वा स्यान्मप्रत्यये परे ।
इणं, इमं । इमे ।

मस्येति—इमस्येति वेति चानुवर्तते । इम+म् इत्यत्रानेन मकारस्य णकारेऽनुस्वारे इणं । पक्षे इमं । इणमित्यत्र "गोयमो इणमब्बवी । उत्त० २३।२१ । इणमक्खेव पुच्छे" भग० २, १, इति प्रमाणमस्ति । इमे । पूर्ववत् ।

## अस्त्रियामिणेऽण ।४।३।२८॥

इमशब्दस्याणादेशो वा स्यादिणप्रत्यये परेऽस्त्रियाम् । अणेण, इमेण, इमेणं । इमेहिं, इमेहि । इमस्स, इमाए । इमेसिं, इमेसि । इमा, इमाओ । इमेहिन्तो ।

इमस्येति—इमस्येत्यनुवर्तते । अनेकवर्णत्वात्सर्वादेश । इम+इण इत्यवस्थायामनेनेमस्याणादेशे वृद्धौ अणेण । पक्षे वृद्धौ वैकल्पिके ममागमे च कृतेऽनुस्वारे इमेणं । ममागमाभावपक्षे इमेण । इम+इहि अत्र ममागमे वृद्धौ इमेहिं । ममागमाभावे इमेहि । इम×अए इत्यत्राणत रसो नाम्न इत्यनेन स्सादेशे इमस्स । स्सादेशाभावे तु पूर्वसवर्णदीर्घे प्रकृतिभावे इमाए । इम×अण इत्यत्राणस्येसिरस्त्रियामिति सूत्रेण इसिरित्यादेशे इणाणेहीसीसूनाम् इति विकल्पेन ममागमेऽनुस्वारे अत स्वरे परस्य सवर्ण इत्यनेन वृद्धौ इमेसिं । ममागमाभावे इमेसि ।

इम × अतोदित्यत्रातोतोऽत इति सूत्रेणौकारस्य लोपे तकारस्य यकारे लोपे पूर्वसवर्णदीर्घे इमा । पक्षे पूर्वसवर्णदीर्घे तस्य यत्वे लोपे प्रकृतिभावे इमाओ । इम × इहिंतो इत्यत्र वृद्धौ इमेहिंतो ।

## स्सिस्सयोरस् ।४।३।२९॥

इमशब्दस्यासादेशो वा स्यात् स्सिंस्सयोः परयोरस्त्रियाम् ।
अस्स, इमस्स । इमेसिं, इमेमि ।

स्सिंस्सयोरिति—इमस्य वा अस्त्रियामिति पदत्रयमनुवर्तते । सित्त्वात् सर्वादेश । अत्र स्सशब्देन षष्ठ्येकवचनस्यैव ग्रहण नतु चतुर्थ्येकवचनस्य, चतुर्थ्यां तादृशप्रयोगस्यादर्शनात् । इम + स्स इत्यत्रानेन सूत्रेणेमस्यासादेशे इत्सञ्ज्ञकस्य सस्य लोपे अस्स । पक्षे इमस्स । इमेसिं । पूर्ववत् । इमस्सिं करिंसवत् ।

## अय· सौ ।४।३।२६॥

इमशब्दस्यायादेशो वा स्यात् सौ परे । अयसि, अस्सिं, इमस्सिं, इममि, इमे, इमेसु । एस, एसे, एसो । एए । एय । एए । एएण, एएण । एएहिं, एएहि । एयस्स, एयाए, एएसिं, एएमि । एया, एयाओ । एएहिंतो, एयस्स । एएसिं, एएसि । एयमि, एयमि, एए, एयस्सिं, एएसु । एवमन्न-कयरेयरादयः ।

अय इति—इमस्य वा इति चानुवर्तते । अनेकवर्णत्वात्सर्वादेश । इम + मि इत्यत्र 'सि ' इति सूत्रेण स्यादेशेऽनेन सूत्रेणेमस्यायादेशे ममागमेऽनुस्वारे अयसि, अयसि लोए ॥ इत्युत्त० १७।२०॥ पक्षे से स्सिमिति सेर्विकल्पेन स्सिमादेशे 'स्सिंस्सयोरस्' इति सूत्रेणेमस्यासादेशे मस्यानुस्वारे अस्सिं । असादेशाभावे इमस्सिं । स्सिमादेशाभावे ममागमेऽनुस्वारे इमसि । स्यादेशाभावे तु इममि । पक्षे मेरिसिति सूत्रेणेसादेशे वृद्धौ इमे । इम + इसु इत्यत्र वृद्धौ इमेसु । एत + उ इत्यत्रोत्येततयोरक्लीबे स इत्यनेनोपधायास्तकारस्य सकारे 'एतताभ्यामक्लीबे वा' इत्यनेन विभक्तेर्लोपे एस । लोपाभावे 'इदुत पुस्यत' इति सूत्रेणोकारस्यकारे वृद्धौ एसे । इत्वाभावे वृद्धौ एसो । एत + अ इत्यत्र 'इ सव्वणामादत ' इति सूत्रेणाकारस्येकारे तकारस्य यकारे लोपे वृद्धौ प्रकृतिभावे एए । एत + म् इत्यत्र तकारस्य यत्वे लोपाभावेऽनुस्वारे एय । एत + इ इत्यत्र तस्य यत्वे लोपे वृद्धौ एए । एत + इण इत्यत्र तस्य यत्वे लोपे ममागमेऽनुस्वारे वृद्धौ च एएण ।

ममागमाभावे एएण। एत+इहि अत्र तस्य यत्वे लोपे वैकल्पिक ममागमेऽनुस्वारे वृद्धौ च एएहिं। ममागमाभावे एएहि। एत+अए इत्यत्राण्त स्सो नाम्र इति सूत्रेण स्सादेशे एयस्स। बहुलग्रहणात्तकारस्य यकाराभावे एतस्स। स्सादेशाभावे तकारस्य यकारे पूर्वसवर्णदीर्घे प्रकृतिभावे बहुलग्रहणाद् यकारस्य लोपाभावे एयाए। एत+अण इत्यत्र 'अणस्येसिरसिस्रियामि ति सूत्रेणेस्यादेशे 'इणाणेहीसीसूनाम्' इति वैकल्पिके ममागमेऽनुस्वार तकारस्य यकारे लोपे च वृद्धौ एएसिं। ममागमाभावपक्षे एएसि। एत+अतोदिस्यत्रातोतोऽत इति सूत्रेणोकारस्य लोपे तकारस्य यत्वे लोपे एत+अ इति जाते पूर्वसवर्णदीर्घे तकारस्य यकारे बहुलग्रहणाल्लोपाभावे एया। ओकारस्य लोपाभावपक्षे पूर्ववत् सर्वकार्ये प्रकृतिभावे एयाओ। एत+इहिंतो इत्यत्र वृद्धौ एतशब्दस्थतकारस्य यकारे लोपे बहुलग्रहणाद्विभक्तिस्थतकारस्य यकाराभावे प्रकृतिभावे एएहिंतो। एयस्स। एएसिं, एएसि। पूर्ववत्। एत+मि इत्यत्र स्यादेशे तस्य यत्वे ममागमेऽनुस्वारे एयसि। स्यादेशाभावे एयमि। पक्षे मेस्मिादेशे तकारस्य यकारे लोपे वृद्धौ प्रकृतिभावे एए। मे सिसिमिति स्सिमादेशे तकारस्य यकार एयसिं। एत+इसु इत्यत्र वृद्धौ तकारस्य यकारे लोपे प्रकृतिभावे एएसु।

## अम्हस्य हमहमौ सोत ।४।३।७६॥

उप्रत्ययसहितस्याम्हशब्दस्य ह अहमित्यादेशौ पर्यायेण स्याताम्। हं, अहं।

अम्हस्येति—उना सह वर्तमान सोत् तस्येति बहुव्रीहिः। अम्हशब्दस्यानेन हमादेशेऽनुस्वारे हं। अहमादेशे अहं।

## वा सातो वयम् ।४।३।८२॥

अप्रत्ययसहितस्याम्हशब्दस्य वयमित्यादेशो वा स्यात्। वयं, अम्हे।

वा सेति—अम्हस्येत्यनुवर्त्तते। अता सह वर्तमान सात् तस्येति बहुव्रीहिः। अम्ह+अ इत्यत्रानेन प्रकृतिप्रत्यययोरुभयो स्थाने वयमादेशेऽनुस्वारे वयं। पक्षे 'ड सव्वणामाण्त' इति सूत्रेणाकारस्यैकारे वृद्धौ अम्हे।

## समो मेममममम ।४।३।७७॥

मप्रत्ययसहितस्याम्हशब्दस्य मे म मम ममम् इत्येते आदेशा पर्यायेण स्युः। मे, मं, ममं, ममम्।

मम इति—अम्हस्येत्यनुवर्तते । मकारेण सह वर्तमान ममस्तस्येति बहुव्रीहि । अम्ह+म् इत्यत्रानेन प्रकृतिप्रत्यययोरुभयो स्थाने मे इत्यादेशे मे । तदभावे म इत्यादेशे म । तदभावे मम इत्यादेशे मम । एतदभावे ममिमित्या-देशेऽनुस्वारे मम । एव रूपचतुष्टयम् ।

## सेतो नेनावौ ।४।३।८३॥

द्वितीयाबहुवचनसहितस्याम्हशब्दस्य ने नो इत्यादेशौ वा स्याताम् । णे, ने, णो, नो, अम्हे ।

सेतो नेनेति—अम्हस्य वा इति पदद्वयमनुवर्तते । इता सह सेत् तस्येति बहुव्रीहि । अम्ह+इ इत्यत्रानेन प्रकृतिप्रत्यययोरुभयो स्थाने ने इत्यादेशे णत्वे णे । णत्वाभावे ने । एव णो, नो । पक्षे वृद्धौ अम्हे ।

## सेणस्य मेमएमयाः ।४।३।७८॥

इणप्रत्ययसहितस्याम्हशब्दस्य मे मए मया इत्येत आदेशाः पर्यायेण स्युः । मे, मए, मया ।

सेणस्येति—अम्हस्येत्यनुवर्तते । इणेन सह वर्तमान सेणस्तस्येति बहुव्रीहि । मेश्च मएश्च मयाश्चेति द्वन्द्व । अम्ह+इण इत्यत्रेणसहितस्याम्हशब्दस्य स्थानेऽनेन सूत्रेण मे इत्यादेशे मे । मए इत्यादेशे प्रकृतिभावे मए । मया इत्यादेशे मया ।

## सेहेर्नेः ।४।३।८४॥

इहिप्रत्ययसहितस्याम्हशब्दस्य ने इत्यादेशो वा स्यात् । णे, अम्हेहिं, अम्हेहि ।

सेहेरिति—अम्हस्य वा इति द्वयोरनुवृत्ति । इहिसहित सेहिस्तस्येति बहुव्रीहि । अम्ह+इहि इत्यत्रानेनेहिसहितस्याम्हशब्दस्य ने इत्यादेशे णत्वे णे । पक्षे वृद्धौ वैकल्पिके ममागमेऽनुस्वारेऽम्हेहिं । ममागमाभावेऽम्हेहि । दिट्ठ च णे सुय च णे । आचा० ।१।४।२॥

## सातोतो ममाओममाहितावौ ।४।३।८०॥

पञ्चम्येकवचनसहितस्याम्हशब्दस्य ममाओ ममाहिंतो इत्येतावादेशौ पर्यायेण स्याताम् । ममाओ, ममाहिंतो । अम्हेहिंतो ।

सातोत इति—अम्हस्येत्यनुवर्तते । अतोणा सह मातो (सातो) तस्येति बहुव्रीहिः । ममाओश्च ममाहिंतोश्चेति द्वन्द्वः । अम्ह + अतो इत्यत्रानेन सूत्रेणातोसहितस्याम्हशब्दस्य स्थाने ममाओ इत्यादेशे प्रकृतिभावे ममाओ । पक्षे ममाहिंतो इत्यादेशे ममाहिंतो । अम्ह + इहिंतो इत्यत्र वृद्धौ अम्हेहिंतो । बहुलग्रहणात्सर्वत्र तकारस्य यकारः ।

## ¹सस्सस्य मेममममज्झमहमोमज्झाः ।४।३।७९॥

स्सप्रत्ययसहितस्याम्हशब्दस्य मे मम मम मज्झ मह मो मज्झ इत्येते आदेशा स्युः पर्यायेण । मे, मम, मम, मज्झ, मह, मो, मज्झ ।

मम्मस्येति—अम्हस्येत्यनुवर्तते । स्सेन सह सस्सस्तस्येति विग्रहः । मेश्च ममश्च ममश्च मज्झश्च महश्च मोश्च मज्झश्चेति द्वन्द्वः । अम्ह + स्स इत्यत्र प्रकृतिप्रत्यययोरुभयोः स्थानेऽनेन सूत्रेण मे इत्यादेशे मे । ममादेशे मम । ममादेशेऽनुस्वारे मम । मज्झमादेशेऽनुस्वारे मज्झ । महमादेशेऽनुस्वारे मह । मो इत्यादेशे मो । मज्झादेशे मज्झ ।

## अम्ह साणस्य ।४।३।८५॥

अणसहितस्याम्हशब्दस्याम्हमादेशो वा स्यात् । अम्ह ।

अम्हमिति—अणेन सह साणस्तस्येति बहुव्रीहिः । अम्हस्य वेति द्वयोरनुवृत्तिः । अम्ह + अण इत्यत्रानेन प्रकृतिप्रत्यययोरुभयोः स्थाने अम्हमित्यादेशेऽनुस्वारे अम्ह ।

## नेनवस्साकम ।४।३।८६॥

अणसहितस्याम्हशब्दस्य ने नो अस्माकमित्येत आदेशा वा स्युः । णे, ने, णो, नो, अस्माक, अम्हाण ।

नेनवेति—साणस्य अम्हस्य वेति पदत्रयमनुवर्तते । अम्ह + अण इत्यत्रानेन ने इत्यादेशे णत्वे णे । णत्वाभावे ने । नो इत्यादेशे णत्वे णो । णत्वाभावे नो । अस्माकमादेशेऽनुस्वारे अस्माक । एतदभावे ममागमे पूर्वसवर्णदीर्घेऽनुस्वारे अम्हाण । णे इत्यत्र 'एए णे पेच्छ भवे' ओघ० २७, इति प्रमाणम् । एतदस्माक प्रेत्य भव इति तदर्थः ।

## मम्हि ससेः ।४।३।८७।।

सिप्रत्ययसहितस्याम्हशब्दस्य मम्हिमादेशो वा स्यात् । मम्हि ।

मम्हिमिति—अम्हस्येति वेति चानुवर्तते। सिना सह ससिस्तस्येति विग्रहः । अम्ह+मि इत्यत्र 'सि' इति सूत्रेण मे स्यादेशेऽनेन सिसहितस्याम्हस्य 'मम्हिम्' इत्यादेशेऽनुस्वारे मम्हि । दृश्यते च "त भद ण भवतु देवाणुप्पियाण मम्हि । जस्स अणुप्पभावेण अक्किट्ठे जाव विहरामि ।।" भग० ।। ३-१ ।। तद्भद्र भवतु देवानुप्रियाणा मयि यस्यानुप्रभावेणाक्लिष्टो यावद्विहरामि । पक्षे—

## मौ ममम् ।४।३।८९।।

अम्हशब्दस्य ममभित्यादेश' स्यात् सप्तम्येकवचने परे। ममसि, ममम्मि । अम्हेसु ।

मावित—अम्हस्येत्यनुवर्तते । अम्ह मि इत्यत्र मे स्यादेशेऽम्हशब्दस्यानेन सूत्रेण मममादेशेऽनुस्वारे ममसि। स्यादेशाभावेऽनेन मममादेशेऽनुस्वारे ममम्मि । अत्र बाहुलकाल्लोपो न । अम्ह+इसु इत्यत्र वृद्धौ अम्हेसु ।

---

# अथ तुम्हशब्दः ।

## सोतस्तुम्हस्य तन्तुमेतुमम ।४।३।८८।।

उप्रत्ययसहितस्य तुम्हशब्दस्य त तुमे तुमम् इत्येत आदेशाः पर्यायेण स्युः । त, तुमे, तुमम् ।

सोत इति—उता सह सोतस्तस्येति बहुव्रीहि । तश्च तुमेश्च तुमश्चेति द्वन्द्व । तुम्ह+उ इत्यत्रानेन सूत्रेणोप्रत्ययसहितस्य तुम्हशब्दस्य तमादेशेऽनुस्वारे त । तुमे इत्यादेशे तुमे । तुममित्यादेशेऽनुस्वारे तुम ।

## बहुवचनेषु तुब्भतुज्झौ वा ।४।३।८९॥

तुम्हशब्दस्य बहुवचने परे तुब्भ तुज्झ इत्येतावादेशौ वा स्तः पर्यायेण ।

तुब्भे, तुज्झे, तुम्हे ।

बहुवचनेष्विति—तुम्हस्येत्यनुवर्तते । तुब्भश्च तुज्झश्चेति द्वन्द्वः । तुम्ह + अ इत्यत्रानेन तुब्भादेशे 'इः सव्वणामान्तः' इत्यनेनाकारस्येकारे वृद्धौ तुब्भे । तुज्झादेशपक्षे तुज्झे । एतदभावे तुम्हे ।

## समस्ते ।४।३।९०॥

सप्रत्ययसहितस्य तुम्हशब्दस्य ते इत्यादेशो वा स्यात् । ते पक्षे ।

सम इति—तुम्हस्येति वेति चानुवर्तते । सम्रहित सम् तस्येति समासः । तुम्ह + म् इत्यत्रानेन प्रकृतिप्रत्यययोरुभयोः ते इत्यादेशे ते । पक्षे—ते इत्यादेशाभाव इत्यर्थः ।

## मिमोस्तुम्हस्य हस्य ।३।४।५७॥

मिप्रत्यये मप्रत्यये च परे तुम्हसम्बन्धिहकारस्य लोपः स्यात् । तुम ।

तुब्भे, तुज्झे, तुम्हे ।

मिमोरिति—लोप इत्यनुवर्तते । मिमोरिति सप्तम्यन्तम् । तुम्ह + म् इत्यत्रानेन हकारस्य लोपेऽनुस्वारे तुम । तुम्ह + इ इत्यत्र 'बहुवचनेषु तुब्भतुज्झौ वा' इति सूत्रेण तुब्भादेशे वृद्धौ तुब्भे । तुज्झादेशपक्षे तुज्झे । पक्षे तुम्हे ।

## सेणस्य तुमे ।४।३।९२॥

इणप्रत्ययसहितस्य तुम्हशब्दस्य तुमे इत्यादेशः स्यात् । तुमे ।

तुब्भेहिं, तुब्भेहि । तुज्झेहिं, तुज्झेहि । तुम्हेहिं, तुम्हेहि ।

सेणस्येति—इणेन सहित सेणस्तस्येति विग्रहः । तुम्हस्येत्यनुवर्तते । तुम्ह + इण इत्यत्रानेनेणसहितस्य तुम्हस्य तुमे इत्यादेशे तुमे । तुम्ह + इहि इत्यत्र 'बहुवचनेषु तुब्भतुज्झौ वा' इति सूत्रेण तुब्भादेशे 'इणाणहीसीसूनामि'ति सूत्रेण समागमेऽनुस्वारे वृद्धौ तुब्भेहिं । समागमाभावे तुब्भेहि । तुज्झादेशे तुज्झेहिं, तुज्झेहि । आदेशाभावपक्षे तुम्हेहिं, तुम्हेहि ।

## सातोतस्तुमाहिंतोः ।४।३।९४॥

अतोत्प्रत्ययसहितस्य तुम्हशब्दस्य तुमाहिंतो इत्यादेशः स्यात् ।
तुमाहिंतो । तुब्भेहिंतो, तुज्झेहिंतो, तुम्हेहिंतो ।

सातोत इति—अतोता सह वर्तते सातोत्तस्येति बहुव्रीहिः । तुम्हस्येत्यनुवर्तते । तुम्ह + अतोदित्यत्रानेन प्रकृतिप्रत्ययसमुदायस्य तुमाहिंतो इत्यादेशे तुमाहिंतो । तुम्ह + इहिंतो इति स्थिते तुब्भादेशे वृद्धौ तुब्भेहिंतो । तुज्झादेशे तुज्झेहिंतो । एतदभावे वृद्धौ तुम्हेहिंतो ।

## सस्सस्य तेतवतुज्झंतुमंतुहतुब्भतुज्झाः ।४।३।९३॥

स्सप्रत्ययसहितस्य तुम्हशब्दस्यैत आदेशाः पर्यायेण स्युः । ते, तव,
तुज्झं, तुम, तुह, तुब्भ, तुज्झ ।

सस्सस्येति—स्सेन सहितः सस्सस्तस्येति समासः । तुम्हस्येत्यनुवर्तते । तुम्हस्स इत्यवस्थायां स्ससहितस्य तुम्हस्यानेन सूत्रेण ते इत्यादेशे ते । एवं तव तुज्झमित्यादिकमपि बोध्यम् । चतुर्थ्येकवचनेऽप्येतादृशमेव, 'अएत स्सो नाम्न' इत्यत्र बहुलमित्यनुवर्तनान्नित्यमेवात्र प्रवृत्तौ तुम्हाए इत्यादेरसम्भवात् ।

## अणस्य मः ।४।३।९१॥

तुम्हशब्दसम्बन्धिनोऽणप्रत्ययस्य मादेशो वा स्यात् । तुब्भ, तुज्झ,
तुम्ह, तुम्हाण । तुमसि, तुमम्मि । तुब्भेसु, तुज्झेसु, तुम्हेसु ।

अणस्येति—अणस्येति षष्ठ्यन्तम् । म प्रथमान्तम् । अकार उच्चारणार्थः । तुम्ह + अण इत्यत्र 'बहुवचनेषु तुब्भतुज्झौ वा' इत्यनेन तुब्भादेशेऽनेन सूत्रेण मकारेऽनुस्वारे तुब्भं । तुज्झादेशे तुज्झं । तदभावे तुम्हं । मादेशाभावे तुम्हाण । तुज्झाण, तुब्भाण इत्यपि बोध्यम्, सूत्रप्राप्ते समानत्वात् । एवं चतुर्थीबहुवचनेऽप्येतादृशमेव रूपं बोध्यम् । तुम्ह + मि इत्यत्र मिमोस्तुम्हस्य ह्रस्येति सूत्रेण ह्लोपे 'मौ व्यञ्जनादौ नाम्न' इति सूत्रेण ममागमेऽनुस्वारे 'सि' रित्यनेन सूत्रेण स्यादेशे तुमसि । स्यादेशाभावे तुमम्मि । मकारस्य लोपस्तु बाहुलकान्न । तेन 'तुमे' इति न भवति । तुम्ह + इसु इत्यत्र तुब्भादेशे वृद्धौ तुब्भेसु । एवं तुज्झेसु । पक्षे तुम्हेसु ।

इति स्वरान्ताः पुलिङ्गाः ।

---

# अथ स्वरान्ताः स्त्रीलिङ्गाः ।

---

## तत्राकारान्तो मालाशब्दः । माला ।

तत्रेति—तत्र तेषु स्वरान्तस्त्रीलिङ्गेषु मालाशब्दः कथ्यते । माला + ङ इत्यत्र 'आदिदुदुभ्य —' इति सूत्रेण पूर्वसवर्णदीर्घे माला ।

## आदितोरोगादिदुन्द्भ्य स्त्रिया वा ।४।३।७०॥

आदिदुद्भ्य परयोः प्रथमाद्वितीयाबहुवचनयोरोगागमो वा स्यात् स्त्रियाम् । मालाओ, माला ।

आदितोरिति—अश्च इश्चेति द्वन्द्वः । माला + अ इत्यत्रानेनौगागमे कित्त्वा-दन्त्यावयवे माला + ओ इति जाते पूर्वसवर्णदीर्घे प्रकृतिभावे मालाओ । ओगागमाभावे पूर्वसवर्णदीर्घे माला ।

## आदीदूतां ह्रस्वो बहुलं मि ।२।२।१॥

आकारेकारोकाराणां मपरे ह्रस्वो बहुलं स्यात् । मालं । मालाओ, माला ।

आदीदूतामिति—आश्च ईश्च ऊश्चेति द्वन्द्वः । माला + म् इति स्थितेऽने-नाकारस्य ह्रस्वत्वेऽनुस्वारे च मालं । माला + इ इत्यत्र 'आदितोरोगादिदुद्भ्य स्त्रिया वे'ति सूत्रेण ओक् इत्यागमे माला + इओ इति जाते पूर्वसवर्णदीर्घे प्रकृतिभावे मालाओ । पक्षे पूर्वसवर्णदीर्घे माला ।

## इणस्ससीनामए ।४।३।७१॥

आदिदुद्भ्य परेषामेषां विभक्तीनामए इत्यादेशः स्यात् स्त्रियाम् । मालाए । मालाहिं, मालाहि । मालाए । मालाण । मालाओ । मालाहिंतो । मालाए । मालाण । मालाए । मालासु ।

इणस्समीति—आदिदुद्भ्य स्त्रियामिति पदद्वयमनुवर्तते । अनेकवर्णत्वात् सर्वादेशः । माला + इण इत्यत्रानेन अए इत्यादेशे पूर्वसवर्णदीर्घे प्रकृतिभावे मालाए । माला + इहि इत्यत्रेणाणेहीसीसूनामिति सूत्रेण वैकल्पिके ममागमेऽ-

नुस्वारे पूर्वसवर्णदीर्घे मालाहिं। ममागमाभावे मालाहि। माला + अए इत्यत्र पूर्वसवर्णदीर्घे प्रकृतिभावे मालाए। माला + अण इत्यत्र ममागमेऽनुस्वारे पूर्व-सवर्णदीर्घे मालाण। माला + अत्तोदित्यत्र पूर्वसवर्णदीर्घे तकारस्य यकारे लोपे प्रकृतिभावे च मालाओ। माला + इहिंतो इत्यत्र पूर्वसवर्णदीर्घे मालाहिंतो। माला + स्स इत्यत्रानेन सूत्रेण स्सस्याए इत्यादेशे पूर्वसवर्णदीर्घे प्रकृतिभावे मालाए। अत्र माला + स्स इति दशायां 'संयुक्ते' इति सूत्रेण ह्रस्वस्तु न भवति, 'निमित्त विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्त कार्यं न कुर्वन्ति' इति परिभाषया स्सकारस्य विनाशभावित्वेन तन्निमित्तकह्रस्वाप्रवृत्ते। मालाण पूर्ववत्। माला + मि इत्यत्रानेन सूत्रेण मे अए इत्यादेशे पूर्वसवर्णदीर्घे प्रकृतिभावे मालाए। माला + इसु इत्यत्र पूर्वसवर्णदीर्घे मालासु।

## आतो डे· ।४।३।१०॥

आकारान्तान्नाम्नः परस्यामन्त्रणैकवचनस्य डे इत्यादेशो वा स्यात्। भो माले! माला।

आत इति—ना उत आमन्त्रणे नाम्न इत्येतेषामनुवृत्ति। माला + उ इत्यत्रानेनोकारस्य डे इत्यादेशे डित्त्वादाकारस्य लोपे भो माले! पक्षे पूर्व-सवर्णदीर्घे माला! बहुवचने प्रथमाबहुवचनवत्।

## अम्माया डोश्च ।४।३।११॥

अम्माशब्दात्परस्यामन्त्रणैकवचनस्य डो इत्यादेशो वा स्यात्। भो अम्मो! भो अम्मे! भो अम्मा!

अम्मेति—आमन्त्रणे उत वा इति पदत्रयमनुवर्तते। अम्मा + उ इत्यत्रा-नेनोकारस्य डो इत्यादेशे डित्त्वाट्टिलोपे भो अम्मो! डे इत्यादेशे भो अम्मे! आदेशाभावपक्षे तु पूर्वसवर्णदीर्घे भो अम्मा! शेष मालावत्।

## सिमातोऽणस्य ।४।३।६०॥

आकारान्तसव्वयामशब्दात् परस्याणस्य सिमादेश. स्यात्। सव्वासिं। षष्ठीबहुवचनेऽप्येवमेव। शेष मालावत्।

सिमात इति—विशेषण तदन्तस्येत्यनेनाकारान्तादिति लाभ। सव्वणा-

मात् इति पदमनुवर्तते । अनेकवर्णत्वात्सर्वादेश । सव्वा + अण इत्यत्रानेन सूत्रेण सिमादेशेऽनुस्वारे सव्वासि । शेषमिति—सव्वा । सव्वाओ, सव्वा ॥१॥ सव्व । सव्वाओ, सव्वा ॥२॥ सव्वाए । सव्वाहिँ, सव्वाहि ॥३॥ सव्वाए । चतुर्थी एकव० ॥ सव्वाओ । सव्वाहिंतो ॥५॥ सव्वाण । सव्वासि ॥६॥ सव्वाए । सव्वासु ॥७॥ हे सव्वे ! हे सव्वा ! हे सव्वाओ ! हे सव्वा ! आमन्त्रणम् ।

## इणे जातयोरि ।४।३।६६॥

जा ता शब्दयोरिकारादेशो वा स्यादिणे परे । जीए, जाए । जाहिँ, जाहि ।

इण इति—अन्त्यस्य षष्ठ्येति परिभाषया जा ता शब्दयोरन्त्यस्येकारादेश । वेत्यनुवर्तते । जा । जाओ, जा । ज । जाओ, जा । जा + इण इत्यत्रानेन सूत्रेण जाशब्दस्याकारस्येकारादेशे 'इणस्समीनामण' इति सूत्रेणेणस्याए इत्यादेशे पूर्वसवर्णदीर्घे प्रकृतिभावे जीए । इकारादेशाभावे पूर्वसवर्णदीर्घे प्रकृतिभावे जीए । जा + इहि इत्यत्र समागमेऽनुस्वारे पूर्वसवर्णदीर्घे जाहिँ । समागमाभावपक्षे जाहि ।

## अएस्समीनां जाकातेमाभ्यो डीसे ।४।३।६७॥

जा का ता इमा शब्देभ्य. परेषा चतुर्थी षष्ठीसप्तम्येकवचनाना डीसे इत्यादेशो वा स्यात् । जीसे, जाए ३ । शेष सव्वाशब्दवत् । एव का ता शब्दौ ।

अएस्सेति—वेत्यनुवतते । अएश्च स्सश्च मिश्च अएस्समयस्तेषामिति विग्रह । जा च का च ता चेमा च जाकातेमास्तेभ्य इति समास । जा + अए इत्यत्रानेन विभक्तेर्डीसे इत्यादेशे डित्त्वाट्टिलोपे जीसे । पक्षे पूर्वसवर्णदीर्घे प्रकृति भावे जाए । जासि । जाओ । जाहिंतो । जा + स्स इत्यत्राप्यनेन डीसे इत्यादेशे आकारलोपे जीसे । पक्षे जाए । जासि । जीसे, जाए । जासु । हे जे ! हे जा ! हे जाओ ! हे जा ! एव काशब्दे ताशब्दे चाप्यूह्यम् ।

## स्त्रियामियम् ।४।३।२५॥

इमशब्दस्योप्रत्ययसहितस्येयमित्यादेशो वा स्यात् स्त्रियाम् । इयं, इमा ।

स्त्रियामिति—इमस्य सोत वेति पदत्रयस्यानुवृत्ति । इमा + उ इत्यत्रानेन

सूत्रेण प्रकृतिप्रत्यययोरुभयो स्थाने इयमित्यादेशेऽनुस्वारे इय । पक्षे पूर्वसवर्णदीर्घे इमा ।

## डेरिमात्स्त्रियाम् ।४।३।३८॥

इमशब्दात्परयोरदितोर्डे इत्यादेशो वा स्यात् स्त्रियाम् । इमे, इमाओ, इमा । इम । इमे, इमाओ, इमा । इमाए । इमाहिं, इमाहि । इमीसे, इमाए । इमार्सि । इमाओ । इमाहिंतो ।

डेरिति—अदितोर्वेति पदद्वयमनुवर्तते । इमा + अ इत्यत्रानेनाकारस्य डे इत्यादेशे डित्त्वादाकारलोपे इमे । एतदभावे ओगागमे पूर्वसवर्णदीर्घे प्रकृतिभावे इमाओ । तदभावे पूर्वसवर्णदीर्घे इमा । इम । इमे इमाओ, इमा ॥२॥ इमाए । इमाहिं, इमाहि ॥३॥ इमीसे, इमाए । इमासिं ॥४॥ इमाओ । इमाहिंतो ॥५॥ एतेषा साधुत्व पूर्ववद्बोध्यम् ।

## स्सस्य डीए· स्त्रियामिमात् ।४।३।६३॥

इमशब्दात्परस्य स्सप्रत्ययस्य डीए इत्यादेशो वा स्यात् स्त्रियाम् । इमीए, इमीसे, इमाए । इमासिं । इमीसे, इमाए ।

स्सस्येति—वेति पदमनुवर्तते । इमा + स्स इत्यत्रानेन स्सस्य डीए इत्यादेशे डित्वादाकारस्य लोपे प्रकृतिभावे इमीए। पक्षे 'अएस्समीना—' इत्यादिना विभक्तेर्डीसे इत्यादेशे डित्त्वादाकारलोपे इमीसे । तदभावे 'इणस्समीनामए' इत्यनेन स्सस्याए इत्यादेशे पूर्वसवर्णदीर्घे कस्तोश्चारणसामर्थ्यात् प्रकृतिभावे इमाए । इमासिं । पूर्ववत् । इमा + मि इत्यत्र परत्वाद् 'अएस्समीना—' इत्यनेन डीसे इत्यादेशे डित्त्वादाकारलोपे इमीसे । पक्षे मे अए इत्यादेशे पूर्वसवर्णदीर्घे प्रकृतिभावे इमाए ।

## मेर्डीसाए· क्वचित् ।४।३।६४॥

इमशब्दात्परस्य मिप्रत्ययस्य डीसाएः इत्यादेशो वा स्यात् स्त्रिया क्वचित् । इमीसाए । इमासु । एसा । एयाओ, एया । शेष सव्वावत् ।

मेरिति—इमात्स्त्रिया वेत्यनुवर्तते । इमीसाए इत्यपि प्रयोग क्वचिद्दृश्यते । अतएवोक्त क्वचिदिति । इमा + मि इत्यत्रानेन मे डीसाए इत्यादेशे डित्त्वादाकारलोपे इमीसाए । इमा + इसु इत्यत्र पूर्वसवर्णदीर्घे इमासु । एता + उ

इत्यत्र 'उत्वेनतयोरद्दीर्घे स' इत्यनेन सूत्रेण नस्य सत्वे पूर्वसवर्णदीर्घे एमा। एता+अ इत्यत्र तकारस्य यकारे 'अदितोरोगादिदुद्रुय रित्रया वा' इत्यनेनो-गागमे एया+अ ओ इति जाते पूर्वसवर्णदीर्घे प्रकृतिभावे एयाओ। ओगागमा-भावे एया। शेष सव्वाऽऽन्वद्वोध्यम्।

## इकारान्त. स्त्रीलिङ्गो दिट्ठिशब्दः।

दिट्ठी। दिट्ठीओ, दिट्ठी। दिट्ठिं। दिट्ठीओ, दिट्ठी। दिट्ठीए। दिट्ठीहिं, दिट्ठीहि। दिट्ठीए। दिट्ठीण। दिट्ठीओ। दिट्ठीहिंतो। दिट्ठीए। दिट्ठीण। दिट्ठीए। दिट्ठीसु। भो दिट्ठी! भो दिट्ठीओ! भो दिट्ठी!

दिट्ठीति—दिट्ठि+उ इत्यत्र 'आदिवर्णोवर्णेभ्य' इति सूत्रेण पूर्वसवर्णदीर्घे दिट्ठी। दिट्ठि+अ इत्यत्र 'अदितोरोगादिदुद्रुय रित्रया वा' इति सूत्रेण विकल्पे-नौगागमे दिट्ठि+अ ओ इति जाते पूर्वसवर्णदीर्घ प्रकृतिभावे दिट्ठीओ। पक्षे पूर्वसवर्णदीर्घे दिट्ठी। दिट्ठि+म् इत्यत्रानुस्वारे दिट्ठिं। दिट्ठि+इ इत्यत्रौगागमे पूर्वसवर्णदीर्घे प्रकृतिभावे दिट्ठीओ। ओगागमाभावे पूर्वसवर्णदीर्घे दिट्ठी। दिट्ठि+इण इत्यत्रेणससमीनामएरिति सूत्रेण विभक्तेरए इत्यादेशे पूर्वसवर्णदीर्घे प्रकृतिभावे दिट्ठीए। दिट्ठि+इहि इत्यत्रेणाणेहीसीसूनामिति ममागमेऽनुस्वारे पूर्वसवर्णदीर्घे दिट्ठीहिं। दिट्ठि+अए अत्र पूर्वसवर्णदीर्घे प्रकृतिभावे दिट्ठीए। दिट्ठि+अण इत्यत्र ममागमे पूर्वसवर्णदीर्घेऽनुस्वारे दिट्ठीण। दिट्ठि+अतोदित्यत्र पूर्वसवर्ण-दीर्घे तकारस्य यकारे लोपे प्रकृतिभावे दिट्ठीओ। दिट्ठि+इहिंतो इत्यत्र पूर्वसवर्ण-दीर्घ दिट्ठीहिंतो। दिट्ठी+स्स इत्यत्र स्सस्य अए इत्यादेशे पूर्वसवर्णदीर्घे प्रकृति भावे दिट्ठीए। दिट्ठीण। पूर्ववत्। दिट्ठी+मि इत्यत्र विभक्तेरए इत्यादेशे पूर्वसवर्णदीर्घे प्रकृतिभावे दिट्ठीए। दिट्ठि+इसु इत्यत्र पूर्वसवर्णदीर्घे दिट्ठीसु। दिट्ठि+उ इत्यत्र पूर्वसवर्णदीर्घे भो दिट्ठी। दिट्ठि+अ इत्यत्रौगागमे पूर्वसवर्ण-दीर्घ प्रकृतिभावे भो दिट्ठीओ। ओगागमाभावे तु भो दिट्ठी।

## ईकारान्त स्त्रीलिङ्ग समणीशब्द।

समणी। समणीओ, समणी। समणिं। समणीओ, समणी। समणीए। समणीहिं, समणीहि। समणीए। समणीण। समणीओ। समणीहिंतो। समणीए। समणीण। समणीए। समणीसु।

समणीति—समणी + उ इत्यत्र 'आदिवर्णोवर्णेभ्य' इति पूर्वसवर्णदीर्घे

समणी। समणी + अ इत्यत्र 'अन्तिोरोगा—' इत्यादिनौगागमे पूर्वसवर्णदीर्घे प्रकृतिभावे समणीओ। ओगागमाभावे पूर्वसवर्णदीर्घे समणी। समणी + म् इत्यत्र 'आदीदूता ह्रस्वो बहुल मि' इति सूत्रेणेकारस्य ह्रस्वत्वेऽनुस्वारे समणिं। समणी + इ इत्यत्रौगागमे समणी + इ ओ इति सञ्जाते पूर्वसवर्णदीर्घे प्रकृतिभावे समणीओ। पक्षे पूर्वसवर्णदीर्घे समणी। समणी + इणेत्यत्रेणस्याए इत्यादेशे पूर्वसवर्णदीर्घे प्रकृतिभावे समणीए। समणी + इहि इत्यत्र ममागमेऽनुस्वारे पूर्वसवर्णदीर्घे समणीहिं। ममागमाभावे समणीहि। समणी + अए अत्र पूर्वसवर्णदीर्घे प्रकृतिभावे समणीए। समणी + अण इत्यत्र ममागमे पूर्वसवर्णदीर्घेऽनुस्वारे समणीण। समणी + अतोदित्यत्र तकारस्य यकारे लोपे पूर्वसवर्णदीर्घे प्रकृतिभावे च समणीओ। समणी + इहिंतो अत्र पूर्वसवर्णदीर्घे समणीहिंतो। समणी + स्स इत्यत्र स्सस्याए इत्यादेशे पूर्वसवर्णदीर्घे प्रकृतिभावे समणीए। समणीण । पूर्ववत्। समणी + मि इत्यत्र मे अए इत्यादेशे पूर्वसवर्णदीर्घे प्रकृतिभावे समणीए। समणी + इसु इत्यत्र पूर्वसवर्णदीर्घे समणीसु।

## ईदूद्भ्यां डिड्डू ।४।३।१२॥

**ईदूदन्ताभ्या परस्यामन्त्रणैकवचनस्य डिड्डू इत्यादेशौ क्रमेण वा स्तः।**

**हे समणि ! हे समणी ! हे समणीओ ! हे समणी !**

ईदूद्भ्यामिति—आमन्त्रणे उत वा इति पदत्रयमनुवर्तते। डिश्च डुश्च डिड्डू इति द्वन्द्व। यथासख्यानादीकारात्परस्य विभक्तेर्डि, ऊकारात्परस्य विभक्तेर्डुर्भवतीत्याह—क्रमेणेति। समणी + उ इत्यत्रानेनोकारस्य डि इत्यादेशे डित्त्वादीकारलोपे हे समणि! पक्षे पूर्वसवर्णदीर्घे हे समणी! हे समणीओ! हे समणी! प्रथमाबहुवचनवत्।

## उकारान्तः स्त्रीलिङ्गो धेणुशब्दः।

**धेणू। धेणूओ, धेणू। धेणु। धेणूओ, धेणू। धेणूए। धेणूहिं, धेणूहि। धेणूए। धेणूण। धेणूओ। धेणूहिंतो। धेणूए। धेणूण। धेणुए, धेणूसु। भो धेणु! धेणू! भो धेणूओ! भो धेणू!**

धेण्विति—धेणु + उ इत्यत्र 'आदिवर्णोवर्णेभ्य' इति सूत्रेण पूर्वसवर्णदीर्घे धेणू। धेणु + अ इत्यत्र 'अदितोरोगादिदुद्भ्य स्त्रिया वा' इति सूत्रेणौगागमे धेणु + अ ओ इति स्थिते पूर्वसवर्णदीर्घे प्रकृतिभावे धेणूओ! पक्षे पूर्वसवर्णदीर्घे

धेणू । घेणु + म् इति स्थितेऽनुस्वारे घेणुं । घेणु + इ इत्यत्रौगागमे पूर्वसवर्णदीर्घे प्रकृतिभावे धेणूओ । पक्षे पूर्वसवर्णदीर्घे धेणू । घेणु + इण इत्यत्र 'इणस्ममीनामए' इति सूत्रेण विभक्तेरए इत्यादेशे पूर्वसवर्णदीर्घे प्रकृतिभावे धेणूए । धेणु + इहि इत्यत्र ममागमेऽनुस्वारे पूर्वसवर्णदीर्घे धेणूहिं । ममागमाभावे घेणूहि । धेणु + अए इत्यत्र पूर्वसवर्णदीर्घे प्रकृतिभावे धेणूए । धेणु + अण इत्यत्र ममागमे पूर्वसवर्णदीर्घेऽनुस्वारे धेणूण । घेणु + अतोदित्यत्र पूर्वसवर्णदीर्घे तकारस्य यकारे लोपे प्रकृतिभावे धेणूओ । धेणु + इहिंतो इत्यत्र पूर्वसवर्णदीर्घे धेणूहिंतो । धेणु + स्स इत्यत्र स्सस्याए इत्यादेशे पूर्वसवर्णदीर्घे प्रकृतिभावे च धेणूए । धेणूण । पूर्ववत् । धेणु + मि इत्यत्र मे अए इत्यादेशे पूर्वसवर्णदीर्घे प्रकृतिभावे धेणूए । धेणु + इसु इत्यत्र पूर्वसवर्णदीर्घे धेणूसु । धेणु + उ इत्यत्र 'ईदूद्भ्या डिड्ढ' इति सूत्रेण विभक्तेर्डु इत्यादेशे डित्वादुकारलोपे हे धेणु ! पक्षे पूर्वसवर्णदीर्घे धेणू ! धेणु + अ इत्यत्रौगागमे पूर्वसवर्णदीर्घे प्रकृतिभावे हे धेणुओ ! पक्षे पूर्वसवर्णदीर्घे हे धेणू !

## उकारान्त स्त्रीलिङ्गो वहूशब्दः ।

वहू । वहूओ, वहू । वहुं । वहूओ, वहू । वहूए । वहूहिं । वहूहि । वहूए ।
वहूण । वहूओ । वहूहिंतो । वहूए । वहूण । वहूए । वहूसु । भो वहु !
भो वहू ! भो वहूओ ! भो वहू !

वहिति—वहू + उ इत्यत्र पूर्वसवर्णदीर्घे वहू । वहू + अ इत्यत्र 'अदितोरोगा—' इत्यादिनौगागमे वहू + अ ओ इति जाते पूर्वसवर्णदीर्घे प्रकृतिभावे वहूओ । पक्षे पूर्वसवर्णदीर्घे वहू । वहू + म् इत्यत्र 'आदीदूता बहुल मि' इति सूत्रेण ह्रस्वेऽनुस्वारे वहुं । वहू + इ अत्रौगागमे पूर्वसवर्णदीर्घे प्रकृतिभावे वहूओ । ओगागमाभावपक्षे पूर्वसवर्णदीर्घे वहू । वहू + इण अत्रेणस्याए इत्यादेशे पूर्वसवर्णदीर्घे प्रकृतिभावे वहूए । वहू + इहि इत्यत्र ममागमेऽनुस्वारे पूर्वसवर्णदीर्घे वहूहिं । ममागमाभावे वहूहि । वहू + अए इत्यत्र पूर्वसवर्णदीर्घे प्रकृतिभावे वहूए । वहू + अण इत्यत्र ममागमे पूर्वसवर्णदीर्घेऽनुस्वारे वहूण । वहू + अतोदित्यत्र तकारस्य यकारे लोपे पूर्वसवर्णदीर्घे प्रकृतिभावे वहूओ । वहू + इहिंतो इत्यत्र पूर्वसवर्णदीर्घे वहूहिंतो । वहू + स्स इत्यत्र स्सस्य अए इत्यादेशे पूर्वसवर्णदीर्घे प्रकृतिभावे वहूए । वहूण । पूर्ववत् । वहू + मि इत्यत्र विभक्तेरए इत्यादेशे पूर्वसवर्णदीर्घे प्रकृतिभावे वहूए । वहू + इसु इत्यत्र पूर्वसवर्णदीर्घे

वहूसु । वहू+उ इत्यत्रेदूद्भ्या ङिड्ड् इत्यनेनोकारस्य ड्डु इत्यादेशे ङित्वादूकारलोपे भो वहु । पक्षे पूर्वसवर्णदीर्घे भो वहू । भो वहूओ । भो वहू । प्रथमाबहुवचनवत् ।

---

# अथ स्वरान्तनपुंसकलिङ्गाः ।

## क्लीवान्मो वा ।४।३।३॥

नपुंसकात्परस्य प्रथमाया एकवचनस्य मादेशो वा स्यात् । वणं । दहिं । महुं ।

क्लीवादिति—उत इत्यनुवर्तते । अकार उच्चारणार्थं । क्लीबो नपुंसकस्तदाह नपुंसकादिति । वण+उ इत्यत्रानेनोकारस्य मकारेऽनुस्वारे वणं । दहि+उ इत्यत्रानेन मकारेऽनुस्वारे च दहिं । महु+उ इत्यत्रानेन मकारेऽनुस्वारे महुं । पक्षे पुंवत् ।

## णिती क्लीवात् ।४।३।४४॥

क्लीबात्परयोः प्रथमाद्वितीयाबहुवचनयोः प्रत्येकं णि ति इत्येतावादेशौ पर्यायेण स्तः ।

णितीति—अदितो प्रत्येकमिति पदद्वयमनुवर्तते । णिश्च तिश्चेति द्वन्द्वः । वण+अ इत्यत्रानेन सूत्रेणाकारस्य णि इत्यादेशे वण+णि इति जाते—

## णित्योर्नाम्नः ।३।२।३७॥

नाम्नः स्वरस्य दीर्घः स्याण्णित्योः परयोः । वणाणि । दहीणि । महूणि ।

णित्योरिति—दीर्घ इत्यस्यानुवृत्तिः । णिश्च तिश्च णिती तयोर्णित्योः । वण+णि इत्यत्रानेन सूत्रेण णकारोत्तरवर्तिनोऽकारस्य दीर्घे वणाणि । दहि+अ

इत्यत्र 'णिती' इति सूत्रेणाकारस्य ण्यादेशोऽनेनेकारस्य दीर्घे दहीणि। एव महु+अ इत्यत्र 'णिती' इत्यनेनाकारस्य ण्यादेशेऽनेन सूत्रेणोकारस्य दीर्घे महूणि। एव सर्वत्र बोध्यम्।

## तेर्वा ।४।२।१९॥

आदेशभूतस्य तिशब्दस्य समागमो वा स्यात्। वणाइ, वणाइ। दहीइ, दहीइ। महूइ, महूइ। एव द्वितीयायामपि।

तेरिति—समित्यनुवर्तते। तिशब्दश्चादिस्थानिक एवान्यस्यासम्भवात्। वण+अ इत्यत्र 'णिती'इत्यनेन विभक्तेः ति इत्यादेशेऽकारस्य 'णित्यो'रिति दीर्घे वणा+ति इति जातेऽनेन वैकल्पिके समागमेऽनुस्वारे तकारस्य यकारे लोपे प्रकृतिभावे वणाइ, समागमाभावे वणाइ। एव दहीइ, दहीइ। महूइ, महूइ। एव द्वितीयायामपि। तद्यथा—वण। वणाणि, वणाइ, वणाइ। दहि। दहीणि, दहीइ, दहीइ। महु। महूणि, महूइ, महूइ।

## नाम्नः क्लीबे नित्यम् ।३।४।६९॥

नाम्नः परस्यामन्त्रणार्थकप्रथमैकवचनस्य नित्य लोप स्यात्। हे वण! हे वणाणि! वणाइ, वणाइ। हे दहि! हे दहीणि! हे दहीइ! हे दहीइ! हे महु! हे महूणि! हे महूइ! हे महूइ! शेष पुंवत्। सव्व। सव्वाणि, सव्वाइ, सव्वाइ। ज। जाणि, जाइ, जाइ। त। ताणि, ताइ, ताइ। क। काणि, काइ, काइ। इम। इमाणि, इमाइ, इमाइ। एय। एयाणि, एयाइ, एयाइ। शेष पुंवत्।

नाम्न इति—आमन्त्रणे उत लोप इति पदत्रयमनुवर्तते। वण+उ इत्यत्रानेनोकारस्य लोपे हे वण! वणाणीत्यादि तु पूर्ववत्। एव हे दहीत्यादि बोध्यम्। शेष पुंवदिति। तत्र वणशब्दस्य रूपाणि जिणशब्दवत्। दहिशब्दस्य रूपाणि मुणिशब्दवत्। महुशब्दस्य रूपाणि साहुशब्दवत्। एव सव्वादे रूपाणि यथायथ बोध्यानि।

---

# संख्यावाचकास्त्रिलिङ्गाः ।

## वेडोण्णी प्रत्येकम् ।४।३।४३॥

दुशब्दात्परयोरदित्प्रत्यययोः प्रत्येक वेडोण्णि इत्येतावादेशौ वा स्तः ।
दुवे, दोण्णि ।

वेडोण्णीति—अदितोरिति दोरिति चानुवर्तते । वेश्च डोण्णिश्च वेडोण्णी । दु+अ इत्यत्रानेनाकारस्य वे इत्यादेशे दुवे । डोण्णि इत्यादेशे तु दोण्णि । एव द्वितीयाबहुवचनेऽपि बोध्यम् । 'अतोऽयोडवोडौ पुसि' इत्यादिसूत्राणा त्वत्र न प्रवृत्ति , विशेषविहितेनानेन बाधात् । न च दुशब्दस्य द्वित्ववाचकत्वेन बहुवचनान्तत्वमयुक्तमिति वाच्यम् , एकातिरिक्तस्यैव बहुत्वेन बहुवचनान्तत्वाक्षते । एवमग्रेऽपि ।

## डोर्दोः ।४।३।४१॥

दुशब्दात्परयोरदित्प्रत्यययोर्डो इत्यादेश• स्यान्नित्यम् । दो ।

डोरिति—अदितो नित्यमिति च द्वयमप्यनुवर्तते । नित्यमित्यनुवर्तनाद्बहुलमित्यस्यासम्बन्ध । दु+अ इत्यत्र पूर्वसूत्रस्य वैकल्पिकत्वेनाप्रवृत्तावनेन डो इत्यादेशे डित्त्वादुकारलोपे दो । एव द्वितीयाबहुवचनेऽपि ।

## ओदिह्यणेर्हितविसुपु दो• ।४।३।२२॥

दुशब्दस्यौकारादेशो नित्य स्यादिहि अण इर्हितो इसु प्रत्ययेपु ।

ओदिति—नित्यमित्यनुवर्तते । इह्निश्च अणश्च इर्हितोश्च इसुश्च इह्यणेर्हितविसवस्तेष्विति विग्रह ।

## इहीहितविसूनां द्वादिभ्यः स्वरस्य ।४।१।१५॥

दुप्रभृतिभ्यः सख्यावाचकेभ्यः परेपामेपामादिस्वरस्य लोप' स्यात् । दोर्हि, दोहि ।

इहीर्हितेति—आदे लोप इति पदद्वयस्यानुवृत्ति । इह्निश्च इर्हितोश्च इसुश्च

इहीहिंतविसवस्तेषामित्यर्थं । दुप्रभृतीना सङ्ख्याभूतत्वे एतदमवृत्त्यर्थमुक्त सङ्ख्यावाचकेभ्य इति । एवमन्यत्रापि बोध्यम् । दु + इहि इत्यत्र 'ओदिहणेहिंतविसुपु दो' इति सूत्रेण दुशब्दसम्बन्धिन उकारस्यौकारेऽनेन विभक्तेरादिस्वरस्येकारस्य लोपे 'इणाणेहीसीसूनामि'ति सूत्रेण ममागमेऽनुस्वारे दोहिं । ममागमाभावे दोहि ।

## सङ्ख्याया अणस्य ण्ह ।४।४।५।।

सङ्ख्यार्थकशब्दात्परस्याणप्रत्ययस्य ण्ह इत्यादेशः स्यात् ।

दोण्ह । दोहिंतो । दोण्ह । दोसु ।

सङ्ख्याया इति—दु + अण इत्यत्र दोरुकारस्यौकारेऽनेनाणस्य ण्हादेशे 'तत्स्थानापन्नस्तद्धर्मं लभते' इति न्यायाद् ण्हादेशस्याणत्वेन ममागमेऽनुस्वारे दोण्ह । दु + इहिंतो इत्यत्रोकारस्यौकारे विभक्तेरादिस्वरस्येकारस्य लोपे दोहिंतो । दोण्ह । पूर्ववत् । दु + इसु इत्यत्रोकारस्यौकारे विभक्तेरादिस्वरस्य लोपे दोसु ।

## तेर्ण्णिर्वा ।४।३।४२।।

तिशब्दात्परयोरदित्प्रत्यययोर्ण्णि इत्यादेशो वा स्यात् । तिण्णि ।

तेरिति—अदितोरित्यस्यानुवृत्तिः । ति + अ इत्यत्रानेनाकारस्य ण्णि इत्यादेशे तिण्णि । एवं द्वितीयायामपि ।

## ड्यो ।४।३।४०।।

तिशब्दात्परयोरदितोर्ड्यो इत्यादेशः स्यात् । तओ । तओ ।

तिहिं, तिहि । तिण्ह । तिहिंतो तिण्ह । तिसु ।

ड्योरिति—ते अदितोरिति द्वयोरनुवृत्तिः । ति + अ इत्यत्र ण्णि इत्यादेशाभावेऽनेनाकारस्य ड्यो इत्यादेशे ड्त्वात्तेरिकारस्य लोपे यकारलोपे प्रकृतिभावे तओ । एवं द्वितीयायामपि । ति + इहि इत्यत्र 'इणाणेहीसीसूनामि'ति सूत्रेण विकल्पेन ममागमेऽनुस्वारे तिहिं । ममागमाभावे तिहि । ति + अण इत्यत्र 'सङ्ख्याया अणस्य ण्ह' इत्यनेनाणस्य ण्हादेशे 'तत्स्थानापन्नस्तद्धर्मं लभते' इति न्यायेन ण्हादेशस्याणत्वेन ममागमेऽनुस्वारे तिण्ह । ति + इहिंतो इत्यत्र विभक्तेराद्यस्वरस्य लोपे तिहिंतो । तिण्ह । पूर्ववत् । ति + इसु इत्यत्र विभक्तेराद्यस्वरस्यैकारस्य लोपे तिसु ।

## रोरदितोर्वा ।४।३।३६॥

चतुशब्दात्परयोरदितो रो इत्यादेशो वा स्यात् । चउरो । चउरो ।

रोरिति—चतोरित्यनुवर्तते । रो अदितो वा इति च्छेद । चतु + अ इत्यत्रानेनाकारस्य रो इत्यादेशे तकारस्य यत्वे यलोपे प्रकृतिभावे चउरो । एव द्वितीयाविभक्तावपि । चतु + इ इत्यत्रेकारस्य रो इत्यादेशे तकारस्य यकारे लोपे प्रकृतिभावे च चउरो ।

## सादितश्चत्तारि चतोर्नित्यम् ।४।३।३५॥

अदित्प्रत्ययसहितस्य चउशब्दस्य चत्तारि इत्यादेशो नित्य स्यात् ।
चत्तारि । चत्तारि । चउहिं, चउहि । चउण्ह । चउहिंतो ।
चउण्ह । चउसु ।

सादित इति—अध इश्च अदितौ अदिद्भ्या सहित सादित् तस्येति विग्रह । चउ + अ इत्यत्र रो इत्यादेशाभावपक्षेऽनेन प्रकृतिप्रत्यययोरुभयो स्थाने चत्तारि इत्यादेशे चत्तारि । एव द्वितीयायामपि । चउ + इहि इत्यत्र ममागमेऽनुस्वारे विभक्तेरादे स्वरस्य लोपे चउहिं । ममागमाभावे चउहि । चउ + अण इत्यत्र ण्हादेशे ममागमेऽनुस्वारे चउण्ह । चउ + इहिंतो इत्यत्र विभक्तेरादे स्वरस्य लोपे चउहिंतो । चउण्ह । पूर्ववत् । चउ + इसु इत्यत्र विभक्तेरादे स्वरस्य लोपे चउसु ।

## अदितो. पञ्चादिभ्य· ।३।४।४३॥

सख्यावाचकेभ्यः पञ्चादिभ्य' परयोरदितोर्लोपः स्यात् । पञ्च । पञ्च ।
पञ्चहिं, पञ्चहि । पञ्चण्ह । पञ्चहिंतो । पञ्चण्ह । पञ्चसु । एव
छशब्दादारभ्याष्टारसपर्यन्तं बोध्यम् ।

अदितोरिति—लोप इत्यनुवर्तते । पञ्च + अ इत्यत्रानेन विभक्तेर्लोपे पञ्च । एव द्वितीयायामपि । पञ्च + इहि इत्यत्र ममागमेऽनुस्वारे विभक्तेरादिस्वरस्य लोपे पञ्चहिं । ममागमाभावे पञ्चहि । पञ्च + अण इत्यत्र ण्हादेशे ममागमेऽनुस्वारे पञ्चण्ह । पञ्च + इहिंतो इत्यत्र विभक्तेरादे स्वरस्य लोपे पञ्चहिंतो । पञ्चण्ह ।

पूर्ववत्। पञ्च+इसु इत्यत्र विभक्तेरादिस्वरस्य लोपे पञ्चसु। एवं वीसादौ विशेषकार्यस्य वक्ष्यमाणत्वेनाष्टादशपर्यन्तमित्युक्तम्।

## संख्या तेः ।३।४।४४॥

संख्यार्थकतिप्रत्ययान्तात्परयोरदितोर्लोपः स्यात्। कति। जति। तति। वीसाद्याः शब्दाः संख्यासंख्येयोभयवाचकाः। तत्र संख्येयवाचकत्वे नित्यमेकवचनान्ताः। संख्यावाचकत्वे तूभयवचनान्ताः।

संख्येति—अदितोर्लोप इत्यनुवर्तते। संख्याया वर्तमानादित्यर्थः। प्रत्ययाप्रत्यययोरिति परिभाषया तिप्रत्ययान्तादिति लाभः। कति+अ इत्यत्रानेन विभक्तेर्लोपे कति। शेषं तिशब्दवत्। एवं द्वितीयायामपि बोध्यम्। एवं जतिततिशब्दावपि। वीसादिशब्दानां संख्यासंख्येयवाचकत्वेऽपि संख्याविशिष्टवाचकत्वे नित्यमेकवचनान्तता। संख्यापरत्वे तु बहुवचनान्ततापि।

## वीसादिभ्यः ।४।३।१४॥

नउइशब्दपर्यन्तानां वीसादिशब्दानां प्रथमायां नपुंसकवद्रूपं स्यान्नित्यम्। वीसं। वीसं। चत्तालीसं। तृतीयादौ तु वीसाए। चत्तालीसाए इत्यादि।

वीसादिभ्य इति—उत इति डमिति पदद्वयस्यानुवृत्तिः। वीसाशब्दादारभ्य नवनउइशब्दपर्यन्तानां नित्यस्त्रीलिङ्गानां प्रथमायां नपुंसकरूपातिदेशोऽनेन क्रियते। सतादीनां तु सर्वविभक्तौ पुनपुंसकत्वमिति तत्रातिदेशापेक्षा नास्ति। द्वितीयायां नपुंसकत्वविधानं व्यर्थं, मप्रत्यये परे स्वत एव ह्रस्वसिद्धेरत प्रथमायामित्येवोक्तम्। वीसाशब्दात्पूर्वेषामपि संख्यावाचकानां त्रिलिङ्गत्वम्। नउइशब्दोपादानेन नवनउइपर्यन्तस्य ग्रहणं नवनउइशब्देऽपि नउइशब्दस्य विद्यमानत्वात्। वीसा+अ इत्यत्रानेनाकारस्य डमादेशे डित्त्वादाकारलोपेऽनुस्वारे वीसं।

# अथाव्ययप्रकरणम् ।

---

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥१॥

सदृशमिति—त्रिषु लिङ्गेषु सदृश समानमेकप्रकारमिति यावत् । सर्वासु च विभक्तिषु समान सर्वेषु वचनेषु च समानमत एव यन्न व्येति विविधप्रकार प्राप्नोति तदव्ययम् ॥१॥

## अव्ययमहादि ।१।१।२५॥

अहादिगणपठितमव्ययसञ्ज्ञक स्यात् ।

अह । अ । अण । अइरा । अइव । अईव । अग । अतर । अंतरेण । अते । अतो । अकम्हा । अचिर । अजस्स । अज्ज । अज्जयाए । अज्जसुए । अणिम । अति । अत्थि । अदु । अदुत्तर । अदुवा । अधो । अभि । अभिक्ख । अभिक्खण । अल । अलमथु । अनि । अविअ । अविआइ । असइ । असतिं । अहवण । अहावर । अहे । अहो । आ । आइ । आउ । आरा । आविर् । इइ । इइ । इति । इत्ति । इय । इन । ईस । ईसि । ईसिं । उ । उण । उणो । उदाउ । उदाइ । उपरि । उप्पि । उवरि । उस्सण्ण । उस्सन्न । ए । एम । एमाइ । एमेव । एयावंति । एव । एव । एवण्ह । किं । किञ्च । कियाइ । किण्ण । किर । किल । कीस । कदु । कु । खलु । खिप्प । च । चण । चण । चि । चिट्ठ । चिय । चे । च्च । जइ । जति । जदि । जा । जाउ । जाव । जाव । जावत् । जुगव । झत्ति । ण । ण । णवर । णवरि । णइ । णाइ । णाणा । णिहो । णु । णूण । णो । ण्ण । ण्ह । त । ता । ताव । ताव । तावत् । ति । त्ति । तु । थ । दिया । दुट्ठु । दूरा । धणिय । धिद्धि । धिर । धिसि । न । नणु । नमो । नवर । नवरि । नहु । नाणा । नूण । नो । नोण । पए । पगे । पच्छा । पभिइ । पभित्ति । परेव्व । पसढ । पाउ ।

पाउर् । पाए । पाओ । पातो । पाय । पि । पिव । पिह । पिहु । पिहो । पुढो । पुण । पुणो । पुरच्छा । पुरत्था । पुरा । पुरे । पुला । बहि । बहिं । बहिया । भंते । भिस । भुज्जो । भूज्जो । मे । मो । मज्झे । मणय । मणा । माइ । मिन । मिहो । मुसा । मुहा । मुहु । य । युगव । रह । रहो । राओ । रिते । वि । विव । विस । विसु । व्व । सइ । सद्द । सपइ । सपय । सपाओ । सक्ख । सणिअ । सद्धिं । सम । समत । समता । सय । सयय । मयराह । साय । सुइर । सुए । सुट्ठु । सुतर । सेव । हता । हद । हदि । हभो । हउ । हणिहणि । हद्दी । हव्व । हिज्जो । ही । हुरत्था । हुलिय । हे । हेट्ठ । हेट्ठा । हेट्ठिं । हेट्ठिल्ला । हेहो ।

अव्ययमिति—अहशब्द आदिर्यस्य तदहादि इति तद्गुणसविज्ञानो बहुव्रीहि । स्वान्वयिनि स्वविशेषणस्याप्यन्वयेऽय समास । यथा लम्बकर्ण पुरुषमानयेत्यादौ । पुरुषान्वयिन्यानयने लम्बकर्णस्यापि सम्बन्धात्तद्गुणसविज्ञानस्तद्भिन्नोऽतद्गुणसविज्ञानो यथा दृष्टसागर पुरुषमानयेत्यादौ । अत्र हि पुरुषान्वयिन्यानयने सागरस्य नान्वय । तथा प्रकृतेऽपि स्वान्वयिसंज्ञायामह शब्दस्यापि सम्बन्धात्तद्गुणसविज्ञान एव । न व्येति लिङ्गसख्याकारकप्रयुक्तविकारान्न प्राप्नोति यत् तदव्ययम् । अत एव 'सदृश त्रिषु लिङ्गेषु' इति श्रुतिरपि सङ्गता । अहशब्दस्यान्यार्थे नीयमानकलशादिवत् स्वतो मङ्गलत्वेन तमेव शब्दमाद्यवयवीकृत्य गणो निर्दिष्ट । अत एव विपरीतशङ्कालेशोऽपि न । अहादिगणस्तु मूल एव निर्दिष्ट । तत्र क्रमेणार्था उच्यन्ते । अह आनन्तर्यादौ । अ । अण । निषेधे । अइरा तत्काले । अइन्न अईन अधिके । अग आमन्त्रणे । अन्तर अन्तरेण अभाववति । अते अतो मध्यदेशे । अक्म्हा दैवादित्यर्थे । अचिर शीघ्रतायाम् । अनस्स निरन्तरे । अज्ज अस्मिन्नहनि । अज्जयाए अद्यप्रभृत्यर्थे । अज्जमुए अद्यश्च इत्यर्थे । अणिस सतते । अति अतिशये । अत्थि अस्तीति तिङन्तप्रतिरूपकमव्ययम् । अदु अदुत्तर आनन्तर्यादौ । अदुवा पक्षान्तरे । अधो नीचैरित्यर्थे । अभि आभिमुख्ये । अभिक्खण अभिक्ख पौन पुन्ये । अल पर्याप्त्यादौ । अलमथु अलमस्त्वित्यर्थे । अवि समुच्चयादौ । अविअ पक्षान्तरे । अवियाइ सम्भावनायाम् । असइ असतिं पौन पुन्ये । अहवण अथवार्थे । अहावर अहे तत परमित्यर्थे । अहो नीचदेशे । आ मर्यादाभिविध्यादौ । आइ वाक्यालङ्कारे । आउ पक्षान्तरे । आरा समीपे । आविर् प्रकटीभावे ।

इ इ प्राकट्ये । इइ इति इत्ति इय प्रकारे । इव साहश्ये । ईस ईसि ईसिं अल्पत्वे । उ उण उणो पुनरित्यर्थे । उदाहु उद्दाइ पक्षान्तरे । उपरि उप्पि उवरि उपर्यर्थे । उस्सण्ण उस्सन्न प्रायोऽर्थे । उपरि पूर्वप्रकारे । ए सम्बोधने एतत्प्रकारे च । एम एमाइ इत्यादौ । एमेव एतत्प्रकारे । एयावति-इयत्तायाम् । एव अवधारणे । एव पूर्वोक्तरीतौ । एवण्ह वाक्यालङ्कारे । किं जिज्ञासायाम् । किंच पक्षान्तरे । खिणाइ किञ्चिन्मात्रमित्यर्थे । किण्ण जिज्ञासायाम् । किर किल निश्चये । कीस कस्मादित्यर्थे । कद् कु कुत्सायाम् । खलु निश्चये वाक्यालङ्कारे च । खिप्प शीघ्रतायाम् । च य समुच्चयादौ । चण चण चि चे चेदित्यर्थे । चिय चैवार्थे । चिट्ठ भृशमित्यर्थे । जइ जति जदि यद्यर्थे । जाउ कदाचिदित्यर्थे । जा जाव जाव जावत् यावदित्यर्थे । जुगव एकस्मिन् काले । झत्ति शीघ्रतायाम् । ण निषेधे । ण वाक्यालङ्कारे । णवर णवरि कैवल्यार्थे । णहु णाइ निषेधे । णाणा अनेकस्मिन् । णिहो नीचदेशे । णु प्रश्ने । णूण निश्चये । णो निषेधे । ण्ण ण्ह वाक्यालङ्कारे । त तत्रेत्यर्थे । ता ताव ताव तावत् यावदित्यर्थे । ति त्ति पूर्वोक्तप्रकारे समाप्तौ च । तु समुच्चये । थ वाक्यालङ्कारे । दिया दिवसे । दुट्ठु असम्यगर्थे । दूरा दूरदेशे । धणिय अतिशये । धिद्धि धिर धिसि धिक्कारार्थे । न निषेधे । नणु शङ्कायाम् । नमो नमस्कारे । नवर नवरि कैवल्यार्थे । नहु निषेधे । नाणा अनेकस्मिन् । नूण निश्चये । नो नोण निषेधे । पए पगे प्रभाते । पच्छा उत्तरत्र । पभिय पभित्ति प्रारभ्येत्यर्थे । परेव्व परदिने । पसढ प्रसह्येत्यर्थे । पाउ पाउर् प्रादुर्भावे । पाए प्रायोऽर्थे । पाओ पातो प्रभाते । पाय प्रायोऽर्थे प्रभाते च । पि अप्यर्थे । पिव इवार्थे । पिह पिहु पिहो पुढो पृथगर्थे । पुण पुणो पुनरित्यर्थे । पुरच्छा पुरत्था पुरे अग्रे इत्यर्थे । पुरा पुला पूर्वकाले अग्रे च । बहि बहिं बहिया बाह्ये । भते पूज्यसम्बोधने । भिस अतिशये । भुज्जो भूज्जो बाहुल्ये । भे भो सम्बोधने । मज्झो मध्ये । मणय मणा अल्पे । माह निषेधे । मिव इवार्थे । मिहो परस्परस्मिन् । मुसा असत्ये । मुहा निष्प्रयोजने । मुहु पौन पुन्ये । य चार्थे । युगव एककाले । रह रहो एकान्ते । राओ रात्राविर्त्यर्थे । रिते विनार्थे । वि अप्यर्थे । विव इवार्थे । विस वीसु पृथक्त्वे । व्व इवार्थे । सइ सकृदर्थे सदार्थे च । सपइ सपय एतत्काले । सपाओ प्रभाते । सक्ख प्रत्यक्षज्ञाने । सणिअ शनैरित्यर्थे । सद्धि सम सहार्थे । समत समता सर्वप्रकारेणेत्यर्थे । सय सकृदित्यर्थे स्वयमित्यर्थे वा । सयय सतते । सयराह सत्वरमित्यर्थे । साय सूर्यास्तमनसमये । सुइर दीर्घकाले । सुए अनागतदिने । सुट्ठु सौष्ठवे । सुतर सहजत इत्यर्थे ।

सेव तदेवमित्यर्थे। हता स्वीकारे। हद आश्रर्यार्थे। हदि हभो आमन्त्रणे गुद्दसम्बोधने विकल्पविषादपश्चात्तापनिश्चयेषु च। हउ हा इत्यर्थ। हणिं हणि प्रतिदिनम्। हद्धी खेदे। हञ्च शीघ्रतायाम्। हिज्नी अतीतदिवसे। ही आश्चर्ये। हुरत्था बहिर्देशे। हुलिय शीघ्रतायाम्। हे सम्बोधने। हेट्ठ हेट्ठा हेट्ठि हेट्ठिल्ल नीचदेशे। हे हो आमन्त्रणे।

## अत्यादय उपसर्गाश्च ।१।१।३८॥

अत्यादय उपसर्गसंज्ञा अव्ययसनाश्च स्यु ।

अति, अइ, अणु, अनु, अधि, अहि, अभि, अव, उव, आ, ओ, उद्, उप, उव, ओव, णि, नि, णिर्, निर्, दुर्, प, प्प, पडि, पति, परा, परि, पलि, वि, सम्, एतेऽत्यादय ।

अत्यादय इति—चकारोऽत्राव्ययसंज्ञासमावेशार्थ । तेनोभयसंज्ञा भवत्येषामत आह चेति । अति अइ । उत्कर्षातिशयातिक्रमणादयो ऽर्था । अणु अनु पश्चात्सादृश्यसमीपलक्षणाद्यर्थेषु । अधि अहि अधिकरणाधिकाराद्यर्थे । अभि आभिमुख्यादौ । अव उव निश्चयावगत्यनादरालम्बनादिषु। आ सम्यगादौ। ओ अववत्। उद् ऊर्ध्वादौ । उप उव समीपादौ। ओव उववत्। ओ शब्दस्यापि समीपादौ वृत्ति । णि नि निषेधादौ। णिर् निर् अभावे निश्चयादौ। दुर् पीडादौ। प प्प प्रकर्षादौ । पडि पति व्याप्तिलक्षणादौ। परा प्राधान्यादौ। परि पलि सर्वत्रादौ। वि वियोगादौ।

## सोप्रभृतितद्धिता ।१।१।३९॥

सोप्रभृतितद्धितप्रत्ययान्ता शब्दा अव्ययसंज्ञा स्यु । कमसो इत्यादय ।

सोप्रभृतीति—अव्ययमित्यनुवर्तते। प्रभृतीति कथनेन स्स सि ह ह हा हिं अम् आ आवत्ति इ इ इण इण्ण इह ई ए क्खुत्तो चण चि चिय ण्ह ण्हि ण्हु ता ति तो त्थ दा दाणि धा या सि हिय हुणा इत्यादितद्धितप्रत्ययान्तानामपि अव्ययसंज्ञा भवति। अत्र प्रत्ययग्रहणपरिभाषया तदन्तविधि । यद्यपि संज्ञाविधौ अन्यत्र प्रत्ययग्रहणे तदन्तविधिर्न तथापि प्रयोजन सर्वनामाव्ययसंज्ञायामिति वचनात्तदन्तविधि । केवलयो कृत्तद्धितयो संज्ञाया निष्फलत्वात्, अत एवोक्तप्रत्ययान्तेभ्य शब्देभ्य परस्य सुप "अव्ययात्सुपः" इति

वक्ष्यमाणसूत्रेण लोपो भवति । यमसो यमश इत्यर्थे । सोप्रत्ययान्तोऽय शब्द । एव घट्टुसो पायसो दवदवस्स एकस्सि इत्यादय ॥

## हेत्वर्थादिकृत ।१।१।३९॥

हेत्वर्थादिकृत्प्रत्ययान्ताः शब्दा अव्ययसंज्ञकाः । गच्छित्तए । गच्छित्ता । अभिगन्तु । गणिउ । घेत्तुं । गहिउ । पग्गहित्तु । नेऊण । भजिऊण । गमेऊणं । पडिविमज्जिय । उस्सक्किया । किच्च । किच्चा । कट्टु । उवागम्म । पकत्थ ॥

हेत्वर्थेति—अव्ययमित्यनुवर्तते । हेतुरर्थो येषा ते हेत्वर्थास्त आदयो येषा ते हेत्वर्थादय । ते च कृतश्चेति विग्रह । उदाहरणन्तु क्रमेण मूल एव स्पष्टम् । अत्रापि पूर्ववत्तदन्तविधि ।

## अव्ययीभावश्च ।१।१।३७॥

अव्ययीभावोऽव्ययसज्ञः स्यात् ।

अव्ययीभाव इति—अव्ययमित्यनुवर्त्तते । उदाहरणन्तु मूलएव तत्प्रकरणे प्रदर्शयिष्ये ।

## णमनमौ ।१।१।४०॥

णमन्तोऽनमन्तश्चाव्ययसज्ञौ भवतः । जीवग्गाह । अक्तिकार । अतगमण मोक्खगमण ।

णमनमाविति—अव्ययमनुवर्त्तते । णम् अनम् प्रत्ययौ वक्ष्येते तदन्तयोरव्ययसज्ञाऽनेन विधीयते । तेन सर्वविभक्तौ समानमेव रूप भवति । साधनप्रकारोऽपि तत्रैव प्रदर्शयिष्यते ।

## अव्ययात्सुवप ।३।४।४६॥

अव्ययात्परस्य सुपोऽपश्च लोपः स्यात् । जत्त । तत्त ॥

अव्ययादिति—लोप इत्यनुवर्त्तते । अबिति स्त्रीप्रत्यय । स चादन्तत्वाज्जत्त्यादौ जायमानोऽनेन लुप्यते ॥

इत्यव्ययप्रकरणम् ।

---

# स्त्रीप्रत्ययः ।

## अत स्त्रियामप् ।१।२।२॥

अदन्तान्नाम्नः स्त्रीत्वे द्योत्ये अप् प्रत्ययः स्यात् । अम्मा । अनिला । अनोगडा । देवया । पहुया । सोमया ।

अत इति—नाम्न प्रत्यय इति पदद्वयमनुवर्तते । नाम्न इत्यस्य विशेषणत्वेनान्छब्दात्तदन्तविधि । लिङ्गस्य नामार्थत्वेन स्त्रीप्रत्ययो हि तद्द्योतक । अत एवाह द्योत्य इति । ननु 'स्तनकेशवती स्त्री स्याल्लोमश पुरुष स्मृत' । इति लौकिकलिङ्गस्याचेतनेऽभावेन कथमचेतनवाचकात् स्त्रीप्रत्यय इति चेन्न, अयमिति व्यवहारविषयत्व पुस्त्वम् । इयमिति व्यवहारविषयत्व स्त्रीत्वम् । इदमिति व्यवहारविषयत्व नपुसकत्वमित्येव शास्त्रकारव्यवहृतलिङ्गस्याचेतनेऽपि सत्त्वेनाक्षते । अप्प्रत्यये दीर्घे अम्माप्रभृतयः । देवशब्दाद्भावार्थकतप्रत्ययेऽनेनापि तकारस्य यकारे देवया । एव पहुशब्दात्तप्रत्यये पहुया सोमया इत्यादि ।

## त्ताद्वा ।१।२।४॥

त्तप्रत्ययान्तादप्प्रत्ययो वा स्यात् स्त्रियाम् । अपरत्ता । अपरत्त । उस्सुगत्ता, उस्सुगत्त । अरित्ता, अरित्त ।

त्तादिति—नाम्न प्रत्यय अप् स्त्रियाम् इत्येतेऽनुवर्तन्ते । सामान्यसूत्रस्य नित्यत्वादप्प्रत्ययस्य नित्यत्वेन विकल्पेन विधीयते । अपरशब्दात् त्तप्रत्ययेऽप्प्रत्यये अपरत्ता । पक्षे अपरत्त । अपरता अपरत्व चेत्यर्थ । उस्सुकशब्दात् त्तप्रत्ययेऽप्प्रत्यये कस्य गत्वे उस्सुगत्ता । उत्सुकतेत्यर्थ । पक्षे उस्सुगत्त । उत्सुकत्वमित्यर्थ । अरिशब्दात् त्तप्रत्ययेऽप्प्रत्यये अरित्ता । अरितेत्यर्थ । पक्षे अरित्त । अरित्वमित्यर्थ ।

## के ।२।३।३॥

स्वार्थनिहिते कप्रत्यये परे स्वरस्य ह्रस्वः स्यात् । अम्मया । मामिया ।

क इति—ह्रस्व इत्यनुवर्त्तते। ह्रस्वश्रवणात् स्वरस्येत्युपतिष्ठते। अपत्यादि-विहितकादिप्रत्यये परे ह्रस्वादर्शनादाह स्वार्थविहित इति। अत्र व्याख्या-नादेव स्वार्थ इति लभ्यते। अम्माशब्दात् कप्रत्ययेऽनेन ह्रस्वे अम्मया। मामी-शब्दात्कप्रत्ययेऽनेन सूत्रेण ह्रस्वे मामिया। काभावे मामी।

## अपि महादालयस्यालिय। ।४।४।७०॥

महशब्दात्परस्यालयशब्दस्यालियादेशो वा स्यादपि परे।
महालिया, महालया।

अपीति—वेत्यनुवर्तते। महशब्दात् स्वार्थे 'आलय' प्रत्ययो भवति। तत्र स्त्रियामपि कृतेऽनेनालियादेशे महालिया। पुंसि तु महालय इत्येकमेव भवती-त्युक्तमपीति।

## दिसाड्डिश्च ।१।२।३॥

दिसशब्दाड्डिः प्रत्ययश्चकारादप् स्यात् स्त्रियाम्। दिसी। दिसा।

दिसादिति—अप् स्त्रियाम् नाम्न प्रत्यय इति पदचतुष्टयमनुवर्तते। दिस-शब्दादनेन 'डि' प्रत्यये दिसि। अपि तु दिसा।

## अधिगरणादिभ्यो डीप् ।१।२।५॥

एभ्यो डीप् प्रत्ययः स्यात् स्त्रियाम्। अहिगरणी। अभियोगी।
अवचुल्ली। गावी। आरवी॥

अधिगरणादिभ्य इति—नाम्न प्रत्यय स्त्रियामिति पदत्रयस्यानुवृत्तिः। अत्र सूत्रे अणन्तजातिवाचकन्तान्तभिक्खादीन्दादीना महशब्दस्य पचपत्ता-द्यतिरिक्तसस्यापूर्वसत्पुरुषादेश्च तद्गणघटकता बोध्या। केवलमहशब्दस्य पाठादेव महालियेत्यादौ न डीप्। पचपत्ताद्यतिरिक्तत्वनिवेशादेव पचपत्त-मित्यादौ न। पुयोगेऽपि यद्यप्यनेनैव सिध्यति, तथाप्यर्थविशेषविषयकत्व-बोधनाय पृथक्तयोक्तम्। तथा चानेनैव विधीयमानप्रत्यये प्रकृतिविशेषोद्देश्यकत्व बोधयन्ननुवदति। अतएवात्र गणतया निर्देशेनाकृतिगणत्वस्यावश्यकत्वादनेनैव प्रकृतिविशेषादपि प्रत्ययसिद्धौ व्यर्थं तदिति शङ्काया नावसरः। अहिगरण, अभियोग, अवचुल्ल, आराहण, कप्पण, कमढ, करह, काग, गाहावइ, गुरु, गो, चउद्दस, नत्तु, न्तमन्तप्रत्ययान्ता जातिमन्तवर्ज्जा, पञ्चरस, मउ, मह,

एतेमासवाचका । वातोल, वीअण, वेताल, वेदब्भ, सधार, सवेगण, साहु, सिरस, सीस, एतेऽहिगरणादय ।

## डीपो न्तात्तुद् ।४।२।५५॥

### न्तान्तात्परस्य डीपस्तुडागमः स्यात् ।

डीप इति—विशेषणेन तदन्तविधौ न्तान्तादिति लभ्यते । ननु "अर्थवतो ग्रहणसम्भवे नानर्थकस्य ग्रहण भवति" इति न्यायेनार्थवतो न्तप्रत्ययस्य ग्रहणसम्भवेनानर्थकस्य मन्तघटकस्य न्तस्य ग्रहणासम्भवाद्भयवतीत्यादि न स्यादिति चेन्, लक्ष्यानुरोधादत्रैतत्परिभाषाया अप्रवृत्ते अर्थवद्ग्रहणेत्य स्यानित्यत्वाच्च । आगमे उकार उच्चारणार्थ ।

## तीपि न्तस्य ।३।४।५१॥

### तीपि परे न्तस्य लोप॰ स्यात् । सई । सती । भयवती, भगवती । मतिमती ।

तीपीति—लोप इत्यनुवर्तते । ननु षष्ठीनिर्दिष्टत्वादन्त्यस्यैव लोपसम्भवेन 'सई' इत्यादि न स्यादिति चेन्न, प्रत्ययस्य ङित्त्वेनैवान्त्यलोपसिद्धौ सूत्रारम्भसामर्थ्यात्समुदायस्य लोपसिद्धे । डीपि इत्यनुवृत्त्यैव सिद्धौ तीपीत्युच्चारणन्तु तुटि सति लोपविधानार्थम् । अन्यथा पूव लोपे न्तान्तत्वाभावेन तुण् न स्यात् । न चैकदेशविकृतन्यायेन सन्तादिशब्दग्रहणेन सादिशब्दग्रहण सम्भवतीति वाच्यम्, सन्तादिशब्दग्रहणेन सादेर्ग्रहणेऽपि तस्य न्तान्तत्वासम्भवात् । छिन्न पुच्छे शुनि "एकदेशविकृतमनन्यवत्" इति परिभाषया श्वत्वव्यवहारसत्त्वेऽपि पुच्छवत्त्वव्यवहाराभावेन विकृतावयवनिबन्धनव्यवहाराभावात् । सन्तशब्दा- 'दधिगरणादिभ्यो डीप्' इति सूत्रेण डीपि 'डीपो न्तात्तुदि'त्यनेन तुडागमेऽनेन न्तलोपे तकारस्य यकारे लोपे प्रकृतिभावे सई । मन्तघटकन्तलोपे भयवती ।

## महादिभ्योऽङित् ।१।२।७॥

### महादिशब्देभ्य॰ परो डीबङित् स्यात् ।

महादिभ्य इति—डीबित्यनुवर्तते । नङिदङित् । तेन महादिशब्देभ्यो डीपि परे टिलोपो न भवति ।

## महाच्च ।४।२।५६॥

महच्छब्दात्परस्य ङीपस्तुडागमः स्यात् । महती ।

महादिति—ङीपः तुट् इति पदद्वयस्यानुवृत्तिः । महच्छब्दाङ्गीप्प्रत्ययेऽनेन तुडागमे महती । अत्र 'महादिभ्योऽङित्' इति सूत्रेण ङीपोऽङित्त्वेन टिसंज्ञकस्य हकारोत्तरवर्तिन अकारस्यापहारो न भवति । एवमग्रेऽपि ।

## भिक्ख्वादिभ्यो णुट् ।४।२।५७॥

एभ्यः परस्य ङीपो णुडागमः स्यात् । भिक्खुणी । साहुणी ।
गाहावइणी । आसाविणी ।

भिक्ख्वादिभ्य इति—ङीप इत्यनुवर्तते । भिक्खइ जा सा भिक्खुणी । भिक्खधातोरुप्रत्यये तदन्ताङ्गीप् प्रत्ययेऽनेन ङीपो णुडागमे भिक्खुणी । साहेइ जा सा साहुणी आत्मकज्जमिति शेषः । गाहावइशब्दाड् ङीपि प्रत्ययेऽनेन णुडागमे गाहावइणी । आसावइ जा सा आसाविणी । आपूर्वकसवधातोः कर्त्तरि इणि प्रत्यये तदन्ताड् ङीपि प्रत्ययेऽनेन णुडागमे आसाविणी । भविस्सइ जा सा भाविणी । भिक्खु, गहवइ, गारत्थ, गाहावइ, गुव्व, घर, नत्तु, साहु, सिस्स, सीस, एते भिक्खवादयः ।

## णीपीदत ।४।३।३४॥

अदन्तस्य नाम्न इकारोन्तादेशः स्याण्णीपि परे । गारत्थिणी । गुव्विणी ।
घरिणी । सिस्सिणी । सीसिणी । पुण्णमासिणी ।

णीपीति—नाम्न इत्यनुवर्तते । तद्विशेषणेनाच्छब्देन तदन्तविधिः । णीपि इत् अत इति पदत्रयम् । अत्रार्थवदिति परिभाषाबलाण्णीप् पदेनार्थवानेव णीप् गृह्यते । तेनाणीब्घटकणीपो ग्रहणं न भवति । "आगमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वमि"ति नियमेनाणुडागमसमभिव्याहारे आणुडागमविशिष्टङीप एवार्थवत्त्व, न तद्घटकस्य णीपः । णुडागमविशिष्टस्य तु तथाभूतस्य ग्रहणं भवति । तथा च भिक्ख्वादिगणपठितादन्तस्यैवात्र ग्रहणमिति फलितम् । अतएवेन्दाणीत्यादौ नेकारः, गारत्थिणीत्यादौ तु भवति । गारत्थस्स इत्थी गारत्थिणी । गुव्वशब्दाङ्गीपि प्रत्यये णुडागमेऽनेनेकारान्तादेशे गुव्विणी । घरो अत्थि इमाए घरिणी घरशब्दादिप्रत्यये तदन्ताड् ङीपि णुडागमेऽनेनेकारादेशे घरिणी ।

एतेमासमाचयाः । यातोल, धीअण, वेताल, वेदम, सधार, सवेगण, साट्ट, सिस्स, सीस, एतेऽहिगरणादय ।

## डीपो न्तात्तुद् ।४।२।५५॥

न्तान्तात्परस्य डीपस्तुडागमः स्यात् ।

डीप इति—विशेषणेन तदन्तविधौ न्तान्तादिति लभ्यते । नु"अर्थवतो ग्रहणसम्भवे नानर्थकस्य ग्रहण भवति" इति न्यायेनार्थवतो न्तप्रत्ययस्य ग्रहणसम्भवेनानर्थकस्य मन्तघटकस्य न्तस्य ग्रहणासम्भवाद्भयवतीत्यादि न स्यादिति चेन्न, लक्ष्यानुरोधादत्रैतत्परिभाषाया अप्रवृत्ते अर्थवद्ग्रहणेत्य स्यानित्यत्वाश्च । आगमे उकार उच्चारणार्थ ।

## तीपि न्तस्य ।३।४।५१॥

तीपि परे न्तस्य लोप. स्यात् । सई । मती । भयवती, भगवती । मतिमती ।

तीपीति—लोप इत्युवर्तते । नु षष्ठीनिर्दिष्टत्वादन्त्यस्यैव लोपसम्भवेन 'सई' इत्यादि न स्यादिति चेन्न, प्रत्ययस्य ङित्त्वेनैवान्त्यलोपसिद्धौ सूत्रारम्भसामर्थ्यात्समुदायस्य लोपसिद्धे । डीपि इत्यनुवृत्त्यैव सिद्धौ तीपीत्युच्चारणन्तु तुटि सति लोपविधानार्थम् । अन्यथा पूर्व लोपे न्तान्तत्वाभावेन तुण् न स्यात् । न चैकदेशविकृतन्यायेन सन्तादिशब्दग्रहणेन मादिशब्दग्रहण सम्भवतीति वाच्यम्, सन्तादिशब्दग्रहणेन सादेर्ग्रहणेऽपि तस्य न्तान्तत्वासम्भवात् । छिन्न पुच्छे शुनि "एकदेशविकृतमनन्यवत्" इति परिभाषया श्वत्वव्यवहारसत्त्वेऽपि पुच्छवत्त्वव्यवहाराभावेन विकृतावयवनिबन्धनव्यवहाराभावात् । सन्तशब्दा 'दधिगरणादिभ्यो डीप्' इति सूत्रेण डीपि 'डीपो न्तात्तुडि'त्यनेन तुडागमेऽनेन न्तलोपे तकारस्य यकारे लोपे प्रकृतिभावे सई । मन्तघटकन्तलोपे भयवती ।

## महादिभ्योऽडित् ।१।२।७॥

महादिशब्देभ्य' परो डीयडित् स्यात् ।

महादिभ्य इति—डीबित्यनुवर्तते । नङिदङित् । तेन महादिशब्देभ्यो डीपि परे टिलोपो न भवति ।

# अथ कारकप्रकरणम् ।

## कारके ।१।१।४१॥

अधिकारोयम् ।

## अभिहिते प्रथमा ।१।२।२२॥

उक्ते कारके प्रथमा स्यात् । अज्ज जबू अप्पाण भावेमाणे विहरति ।

अभिहित इति—सामान्यसूत्रेण विहितानामुप्रभृतिविभक्तीनामर्थविशेषे व्यवस्था दर्शयितुमारभते 'अभिहित'इत्यादिना । अभिधानञ्च त्यादिना कृदादिना च ग्राह्य न तु येन केनापि, तथा सति सर्वत्र नाम्नोक्तत्वेन द्वितीयाद्यनापत्ते । कारकत्वञ्च क्रियाजनकत्व नतु क्रियान्वयित्व ब्राह्मणस्य पुत्र पन्थान पृच्छतीत्यादौ ब्राह्मणस्यापि पुत्रद्वारा क्रियान्वयित्वेन कारकत्वापत्ते । क्रियाजनकत्वस्य कारकत्वे तु क्रिया प्रति पुत्रेणान्यथासिद्धस्य ब्राह्मणस्य क्रियाजनकत्वाभावेन न कारकत्वम्, अतएव षष्ठ्या कारकत्वञ्चास्तीति प्राच्यमत सङ्गच्छते । न चान्यथासिद्धस्य कारणत्व कुतो नेति वाच्यम्, अन्यथासिद्धिशून्यत्वे सति नियतपूर्ववृत्तित्वमेव हि कारणत्वम्, अन्यथासिद्धे तु तत्त्वमेव न । अवश्यक्लृप्तान्वयव्यतिरेकिभिन्नत्वमन्यथासिद्धत्वम् । यथाऽत्रैव पुत्ररूपकर्म विना पृच्छति क्रियोत्पत्तिरेव न सम्भवति इति स्वातन्त्र्येण तयोरन्वयव्यतिरेक । पुत्ररूपकर्मसम्बन्धिनोऽभावेऽपि क्रियोत्पत्तिसम्भवेन न ब्राह्मणेन सहान्वयव्यतिरेक । नाम्न प्रत्यय इति पदद्वयमनुवर्तते। 'अज्ज जम्बू—इत्यादीना''मार्य जम्बू आत्मान भावयन् विहरति ।'' नाया० १—५ ॥ इत्यर्थ ॥

## आमन्त्रणे च ।१।२।२३॥

आमन्त्रणेऽर्थे प्रथमा स्यात् । भो जिरा !

आमन्त्रण इति—आमन्त्रण सम्बोधन तथाभिमुखीकरणम् । अतएव "सिद्धस्याभिमुखीभावमात्र सबोधन विदु । प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते । सम्बोधन न वाक्यार्थ इति पूर्वेभ्य आगम " इति हरिवचन सङ्गच्छते । अनेन च वाक्येन क्रियासु विनियोगपदत्वमभिमुखीभवन

सासिज्जइ जा सा सिस्सिणी । सीसिणी । सिस्ससीसशब्दाभ्या ङीपि णुडागमेऽनेनेकारादेशे सिस्सिणी । सीसिणी । अनयो साधनप्रणाली कृदन्ते द्रष्टव्या । पुण्णो मासो जस्सि पुण्णमासिणी । बहुव्रीहिसमासे ङीपि प्रत्यये णुडागमेऽनेनेकारादेशे पुण्णमासिणी । णीपि परे क्वचिदिकारो नैव भवति । अतएव सिस्सणीत्यादौ न । अत एवात्र बहुलग्रहणसम्बन्धो बोध्य ।

## पुसम्बन्धात्पुनाम्न. ।१।२।६।।

पुस. सम्बन्धात्स्त्रिया वर्त्तमानात् पुवाचकाङ्गीप् प्रत्यय' स्यात् । गोरी । सुद्दी ।

पुसम्बन्धादिति—स्त्रिया नाम्न प्रत्यय ङीप् इत्येतेऽनुवर्तन्ते । वर्त्तमानादिति शेप । पुसम्बन्धादिति किम् ? देवदत्ता । अत्र हि देवदत्तेति सञ्ज्ञाशब्द स्वभावादेव स्त्रिया वर्तते नतु पुयोगादतोऽत्र ङीप्प्रत्ययवारणाय तथोक्तम् । पुनाम्न किम् ? प्रसूता । अयञ्च सञ्ज्ञाशब्दो जातप्रसवा स्त्रीमाह । स च प्रसवो गर्भधारणद्वारा पुयोगनिमित्तक इत्यस्ति पुयोग , किन्तु पुवाचकत्वाभावान्न दोष । गोवस्स इत्थी गोवी । सुद्दस्सापत्त इत्थी सुद्दी । अत्र पुसम्बन्धो दाम्पत्य एव न, किन्तु जन्यजनकभावोऽपि । अत एव सम्बन्धद्वयतात्पर्येणोदाहरणद्वयमत्र दत्तम् ।

## इन्द्रादिभ्य आनुट् ।४।२।५८।।

एभ्य परस्य ङीप आनुडागम स्यात् । इन्दाणी । खत्तियाणी । भवाणी ।

इन्द्रादिभ्य इति—ङीप इत्यनुवर्तते । टित्त्वादादौ । इन्दस्स इत्थी इन्दाणी । खत्तियस्स इत्थी खत्तियाणी । भवस्स इत्थी भवाणी । सर्वत्र ङीपि प्रत्यय आनुटि कृते णत्वम् । उकार उच्चारणार्थ ।

इति स्त्रीप्रत्ययप्रकरणम् ।

फलवत्त्वेन हि प्राधान्ये कर्मत्वकर्तृत्वम्, अत एव न पचत्यादिष्वकर्मणि प्रसङ्गः । आख्यातार्थव्यापारे पचत्यादौ सत्त्वेऽपि विवक्षितप्राधान्याभावात् । यदा तु व्यापाराश्रयत्वेन न विवक्षा तदा कर्तृत्वमेव भवति । यथा ग्राम इव अध्वगो इत्यादि । व्यापाराश्रयत्वेनैव व्यापाराश्रयत्वविवक्षा च प्रयोगवशात् गन्तव्यम् ।

## अनुक्ते कर्मणि द्वितीया ।१।२।११॥

अनुक्ते कर्मणि द्वितीया स्यात् । "अप्पाणं भावेमाणे विहरति" "सेणिए राया कोडुंबियपुरिसे सद्दावेति" । अनुक्ते किम् । "जहिं बद्धे अय जीवे" ।

अनुक्त इति—नाम्नः प्रत्यय इत्यनयोरनुवृत्तिः । अप्पाणमिति—"आत्मानं भावयन् विहरति" "श्रेणिको राजा कौटुम्बिकपुरुषान् शब्दापयति" अत्र शब्दो प्रेरणार्थकप्रत्यये सति णिजन्तमप्यर्थः, तत्र स्वानुकूलव्यापाररूप तादृशव्यापारजन्यफलनिरूपकत्वाश्रयतया आत्मनः कर्मता, ततश्च तादृशकर्मवाचकात् पाणनशब्दात् द्वितीया । शब्दविषयकोच्चारणानुकूलव्यापारस्तु सद्धातोरर्थस्तत प्रेरणार्थकप्रत्यये कृते सति तादृशव्यापारानुकूलव्यापारोऽर्थः सम्पन्नः । तथा चान्तिमव्यापारजन्यद्वितीयव्यापाररूपफलाश्रयत्वेन कोडुंबियपुरिसशब्दात्तादृशकर्मवाचकाद् द्वितीया । जेहिमित्यादि—यैः कर्मभिरयंजीवो बद्ध इत्यर्थः । अनुक्तग्रहणाभावेऽपि उत्तरदेशसंयोगाभावानुकूलव्यापाररूपबन्धधात्वर्थफलीभूतोत्तरसंयोगाश्रयत्वात्कर्मत्वेन द्वितीयापत्तेः । तद्ग्रहणे तु कृत्प्रत्ययेन कर्मण उक्तत्वान्न दोषो भवति ।

## कालाध्वनोर्व्यापकत्वे द्वितीया ।१।२।२४॥

कालावयवाध्वावयववाचिशब्दाभ्यां व्यापकत्वेऽर्थे द्वितीया स्यात् । "संखेज्जाइं जोयणाइं उड्ढं निसिरइ" "एकदिवसमवि ते रायगिरिं पासित्तए" । "ततेणं से धनदेवे अड्ढाइज्जाइं राइंदियाइं तं पयं झामेइ" ।

कालाध्वनोरिति—नाम्नः प्रत्यय इति पदद्वयमनुवर्तते । कालावयवो मासादि । अध्वावयवः क्रोशयोजनादि । तद्वाचकाद् निधानाम्न काल पठति । अध्वानं कुटिला नदीत्यादिप्रयोगः । संखेज्जाइमित्यादेः संख्येयानि योजनानि

सम्बोधनमिति दर्शितम् । सिद्धस्येत्यनेन येन रूपेण न सिद्धस्तेन रूपेण न सम्बोध्यत्वमिति सूचितम् । अतएव कुमारावस्थाया राजन् ! युध्यस्वेति न राजावस्थायामपि राजन् ! राजा भव युध्यस्वेति न । क्रियासु विनियुज्यते इत्यनेन सम्बोध्यस्यापि कर्तृत्व सूचितम् । क्रियासम्बन्ध विना क्रियाविनियुक्तत्वमेव न स्यात् । एवञ्च हे देवदत्त ! अह व्रजामीत्यादावपि जानीहि त्वमित्यस्याध्याहार । सम्बोध्यस्यैव त्वपदार्थत्वेन विनियोज्यक्रियाकर्तृत्वात् । प्रथमा नाम्न प्रत्यय इत्येतेषामनुवृत्ति । उदाहरति भो जिण ! इति ।

## कर्त्राऽऽप्तुमिष्यमाणतमं कर्म ।१।१।४२॥

### कर्ता स्ववृत्तिव्यापारप्रयोज्यफलेन यं सम्बद्धुमिच्छति स कारक कर्मसज्ञ स्यात् ।

कर्त्रेति—कारके इत्यनुवर्तते । कर्त्राऽऽप्तुमित्युक्ते केनेत्याकाङ्क्षायामुपस्थितत्वात् स्वविशेषणीभूतव्यापारेणेति लाभ । न च व्यापारेण सम्बन्ध कर्तु, कर्मणस्तु कदाचिदपि न सम्भवतीति वाच्यम्, समवायेन व्यापारस्य कर्तर्येव सत्त्वेऽपि स्वजन्यफलवत्त्वरूपसम्बन्धेन कर्मण्यपि सम्भवात् । तथा च स्वजन्यफलवत्त्वसम्बन्धेन व्यापारेण सह सम्बद्धुमिष्यमाणतममिति लाभेऽर्थत एव कर्तृवृत्तिव्यापारजन्यफलेन सम्बद्धुमिष्यमाणतममिति लाभस्तत्फलितमेवाह कर्तेत्यादि । प्रेरणार्थकप्रत्यये द्विकर्मकस्थले चोभयोरनेनैव कर्मसज्ञा भवति । कर्तृवृत्तिव्यापारजन्यफलवत्त्वप्रकारकेच्छानिरूपितविषयताश्रयत्वस्योभयत्र सत्त्वात् । यथा—सुय विणय च गाहिए बाले ( उत्त० १७ । ४ ) इत्यादौ । अत्र शुद्धग्गहादिधात्वर्थव्यापाराश्रयबालादिकर्तु प्रेरणार्थकप्रत्यये सति प्रयोजककर्तृवृत्तिप्रेरणाप्रत्ययार्थव्यापारजन्यशुद्धधात्वर्थव्यापाररूपफलाश्रयत्वसत्त्वेन कर्मसज्ञा । स एव प्रयोज्यकर्तेति कथ्यते । द्विकर्मकस्थले तु स्वत एव धातो र्व्यापारद्वयार्थकत्वेन मुख्यव्यापारजन्यद्वितीयव्यापाररूपफलाश्रयत्वेन कर्मसज्ञा । यथा—भायर बहुमाणेण इम वयणमब्बवी ( उत्त० १३।४ ) इत्यादौ । अत्र ब्रुधातोर्ज्ञानानुकूलव्यापारानुकूलव्यापारार्थकत्वेन प्रथमव्यापारजन्यव्यापाररूपफलाश्रयत्वेन भ्रातु कर्मसज्ञा द्वितीयव्यापारजन्यज्ञानरूपफलाश्रयत्वेन वाक्यस्य कर्मसज्ञा । एव वुत्तो नरिंदो सो सुसभतो सुविम्हिओ । वयण अस्सुअपुव्व साहुणा विम्हय नीओ । उत्त० ।२०।१३। इत्यादौ । प्रधानकर्मणि प्रत्ययविधानेन तत्र प्रथमा । प्रकृतधात्वर्थप्रधानीभूतव्यापारजन्यफला-

प्रयत्वमेव हि प्राधान्य कर्मप्रत्ययनियामकम्, अत एव न पचनादिरूपकर्माणि प्रत्यय । आर्थिकप्राधान्यस्य पचनादौ सत्त्वेऽपि विवक्षितप्राधान्याभावात् । यदा तु व्यापारद्वयार्थकत्वेन न विवक्षा तदा एककर्मक एव भवति । यथा अस्त इम अव्ययी इत्यादि । व्यापारद्वयार्थकत्वैकव्यापारार्थकत्वविवक्षा च प्रयोगवशात् स्वयमूह्यम् ।

## अनुक्ते कर्मणि द्वितीया ।१।२।११॥

अनुक्ते कर्मणि द्वितीया स्यात् । "अप्पाण भावेमाणे विहरति" "सेणिए राया कोडुंबियपुरसे सद्दावेति" । अनुक्ते किम् । "जेहिं बद्धे अयं जीवे" ।

अनुक्त इति—नाम्न प्रत्यय इत्यनयोरनुवृत्ति । अप्पाणमिति—"आत्मान भावयन् विहरति" "श्रेणिको राजा कौटुम्बिकपुरुषान् शब्दाययति" भवधातो प्रेरणार्थकप्रत्यये सति चिन्तनमप्यर्थ, तथ स्मृत्यनुकूलव्यापाररूप तादृशव्यापारजन्यस्मृतिरूपफलस्याश्रयतया आत्मन कर्मसंज्ञा, ततश्च तादृशकर्मवाचकादप्पाणशब्दादनेन द्वितीया । शब्दविषयकोत्पत्त्यनुकूलव्यापारस्तु सद्धातोरर्थस्तत प्रेरणार्थकप्रत्यये कृते सति तादृशव्यापारानुकूलव्यापारोऽर्थ सम्पन्न । तथा चान्तिमव्यापारजन्यद्वितीयव्यापाररूपफलाश्रयत्वेन कोडुबियपुरिसशब्दात्तादृशकर्मवाचकाद् द्वितीया । जेहिमित्यादि—यै कर्मभिरयजीवो बद्ध इत्यर्थ । अनुक्तग्रहणाभावेऽत्रापि उत्तरदेशसयोगाभावानुकूलव्यापाररूपबन्धधात्वर्थफलीभूतोत्तरसयोगाश्रयताकर्मत्वेन द्वितीयापत्ते । तद्ग्रहणे तु क्तप्रत्ययेन कर्मण उक्तत्वान्न दोषो भवति ।

## कालाध्वनोर्व्यापकत्वे द्वितीया ।१।२।२४॥

कालावयवाध्वावयववाचिशब्दाभ्यां व्यापकत्वेऽर्थे द्वितीया स्यात् । "सखेज्जाइ जोयणाइ दड निसिरइ" "एकदिवसमवि ते रायसिरिं पासित्तए" । "ततेण से वनदवे अड्ढाइज्जाइ रातिंदियाइ त वण झामेइ" ।

कालाध्वनोरिति—नाम्न प्रत्यय इति पदद्वयमनुवर्तते । कालावयवो मासादि । अध्वावयव क्रोशयोजनादि । तद्वाचकाद् विधानान्न काल पठति । अध्वान कुटिला नदीत्यादिप्रयोगः । सखेज्जाइमित्यादे सख्येयानि योजनानि

दण्ड नि सरतीत्यर्थः । अत्राध्वावयववाचियोजनशब्दात्तेन द्वितीया । तथा च सत्येययोजनव्यापक दण्डकर्मक नि सारणमित्यर्थ । एकदिवसमधीत्यादे एकदिवसमपि ते राजश्रिय द्रष्टुमित्यर्थ । अत्र कालावयववाचिन एकदिवसशब्दादनेन द्वितीया । तथाच एकदिनव्यापक राजश्रीकर्मक दर्शनमित्यर्थ । क्रोश दण्डनि सारणे प्रहरण राजश्रीदर्शने च न तथा प्रयोग , योजनादिव्यापकत्वस्य नि सारणादावभावात् । व्यापकत्वञ्च तत्समानाधिकरणात्यन्ताभावाप्रतियोगित्वम् । एव तृतीयोऽपि प्रयोगो बोध्य । ततेणमित्यादे"स्तत स वनदवस्त्यर्द्धानि रात्रिदिवानि तद्वन ध्मापयति ।" इत्यर्थ ।

## ठादीनामधिपूर्वाणा कर्म ।१।१।४३॥

अधिपूर्वकाणा ठादिधातूनामाधार कर्मसज्ञ स्यात् । "सुयमहिट्ठेज्जा" । पसत्थाओ अहिट्ठए मुणी ।

ठादीनामिति—कारके आधार इति पदद्वयमनुवर्तते । अधि पूर्वो येषा तेऽधिपूर्वास्तेषामधिपूर्वाणाम् । सुयमहिट्ठेज्जा श्रुतमधितिष्ठेदिति छा० । अधिकरणसज्ञापवादत्वे कर्मसज्ञाया द्वितीया । अतएव "तम्हा सुयमहिट्ठेज्जा" । उत्त० ११।३२ । एव पसत्थाओ अहिट्ठए मुणी । उत्त० ।३४।६१ । इति सगच्छते । एवमेवाहिसयाञ्ञासादिधातुयोगेऽपि बोध्यम् । अधिपूर्वत्वोपादानादेव केवल ठादिधातुयोगे न । ननु द्वितीयैव विधीयता किं कर्मसज्ञा विधाय द्वितीयाकरणे नेति चेन्न, कर्मसज्ञाविधानादेव हि सकर्मकत्वसिद्ध्या कर्मणि प्रत्ययोऽपि सिध्यति । अत एव तथोक्तम् । अधिट्ठिओ सुओ इत्यादि सिध्यति ।

## अकर्मकधातुयोगे देशादय ।१।१।४४॥

अकर्मकधातूनां योगे देशादिवाचका कर्मसज्ञका स्यु । ठाण ठाइ । मास वसइ । कोम आसइ । लाभ अलाभ च सुह च दुक्ख, सचिक्खमाणो चरिस्सामि मोण ।

अकर्मकधात्विति—कर्म कारके इति पदद्वयमनुवर्तते । अकर्मकधातूना योगे इति विग्रह । देशवाचककालवाचकभावविहितप्रत्ययान्तगन्तव्याध्ववाचकादिशब्दाना कर्मसज्ञा विधीयते । ठाण ठाइ । स्थान तिष्ठति । स्थाने तिष्ठतीत्यर्थ । देशवाचकठाणशब्दस्यानेन कर्मसज्ञकत्वात्तस्माद्द्वितीया । कालवाचकमासशब्दस्यानेन कर्मसज्ञकत्वात्तस्माद्द्वितीया । भावप्रत्ययान्तस्योदाहरणन्तु

गुणवाद आसइ । गन्तव्याध्ववाचकस्य कोस आसइ । क्रोशमास्ते इत्यर्थ । लाभमलाभञ्च सुग च दु ग सतिष्ठन् चरिष्यामि मौनम् । उत्त० ।१४।३२॥ अत्राकर्मकधातुयोगेऽनेन सुहादिशब्दाना कर्मसज्ञकत्वात्तेभ्यो द्वितीया । समानतया पश्यन्निति तु भावार्थ । आदिपदेन कालभावगन्तव्याध्वना ग्रहणम् ।

## अन्वादिभिर्लक्षणादिषु ।१।२।२५॥

लक्षणादिषु द्योत्येषु अन्वादिभिर्योगे द्वितीया स्यात् । जीवन्तमणु जीवंति । मिगव्व उवनिग्गए । अन्तर अभि । आयाणहेउ अभिनिक्खमाहि ।

अन्वादिभिरिति—द्वितीया नाम्न प्रत्यय इत्येतेषामनुवृत्ति । अभि पडि इत्यादय आदिपदग्राह्या । जीवन्तमणुजीवति । जीवन्तमनुजीवन्ति । उत्त० १८।१४। जीवञ्ज्ञाप्यजीवनमित्यर्थ । मिगव्वमिति । षष्ठीति शेष । तथाच मृगया प्रति उपनिर्गत इत्यर्थ । मृगयाज्ञाप्योपनिर्गमनाश्रय । अन्तर अभि । अन्तरमभीत्यर्थ । अन्तरमभिवर्तते । अन्तरज्ञाप्यवर्त्तनमिति बोध । आयाणेत्ति-आदानहेतुमभिनिष्क्रमेति-छाया । आदान सयमस्तद्धेतुमभिलक्ष्य प्रव्रज्या गृहाणेत्यर्थ । उत्त० ।१३।२०॥

## जावादिभि ।१।२।२६॥

जावादियोगे द्वितीया स्यात् । जाव जीव । जावज्जीव ।

जावादिभिरिति—नाम्न प्रत्यय द्वितीया इति पदत्रयस्यानुवृत्ति । जाव जीव, जीव यावदित्यर्थ । अयञ्चाकृतिगण ।

## जावज्जावयोश्चतुर्थी च ।१।२।२७॥

जावज्जावशब्दयोगे सति चतुर्थ्यपि स्यात् । जाव जीवाय । जावज्जीवाय ।

जावज्जावयोरिति—प्रत्यय नाम्न द्वितीया इत्येतेऽनुवर्तन्ते । चकारोच्चारण द्वितीयासमावेशार्थम् । अत एवोक्त चतुर्थ्यपीति । द्वितीयोदाहरणमुक्तम् । जावदादियोगे चतुर्थ्यादेर्विधानादेव जावज्जीवाय उक्कर । उत्त० १९।२५। जावज्जीव । उत्त० ।१९।३५। सङ्गच्छते । तत्र मर्यादाभिविध्योरेव जावदादियोगे चतुर्थ्यादि भवति । नतु साकल्यादौ । जीवायेत्यत्राएत्प्रत्ययैकारस्य य इत्यादेश ।

## जतयोः समानाधिकरणेभ्यो द्वितीया च ।१।२।३३॥

जतशब्दसमानाधिकरणेभ्यो दिग्वाचककालवाचकेभ्यः सप्तम्यर्थे द्वितीया वा स्यात् । जामेव दिसिं पाउब्भूता । ज समयं वेदेंति णो त समयं निज्जरेन्ति । ज रयणिं चणं पउमावती दारयं पयाया त रयणिं चणं पोट्टिलावि दारियं पयाया ।

जतयोरिति—दिक्कालार्थेभ्य सप्तम्यर्थे त्वम् प्रत्यय इत्येतेषामनुवृत्ति । द्वितीया सप्तम्यर्थे जतशब्दसमानाधिकरणदिगादिवाचकादेव भवति । अत एव सूत्र पृथक्कृतम् । तत्र कालसामान्यस्य कालविशेषस्य च ग्रहणम् । दिगर्थे तु दिक्सामान्यस्यैव । तथैव मूले उदाहृता । पक्षे सप्तमी च पूर्ववद्बोध्या । जामेवेति—यस्यामेव दिशि प्रादुर्भूता । ज इति—यस्मिन् समये वेदयन्ति नो तस्मिन् समये निर्जरयन्ति । यस्या रात्रौ च पद्मावती दारकं प्रजाता तस्या रजन्या च पोट्टिलापि दारिका प्रजाता । सर्वत्रानेन द्वितीया । जतयोरिति किम् । समए वेदेन्ति । अन्नम्मि समए वेदेन्ति इत्यादौ असमानाधिकरणविभिन्नसमानाधिकरणदिक्कालवाचकान्मा भूत् ।

---

# अथ तृतीया ।

---

## क्रियाया प्रकृष्टोपकारकं करणम् ।१।१।४५॥

क्रियासिद्धौ प्रकृष्टोपकारकं कारकं करणसंज्ञं स्यात् ।

क्रियाया इति—कारके इत्यनुवर्तते । तस्य प्रथमान्तत्वेन विपरिणामः । क्रियाया इत्यनन्तरं सिद्धाविति शेषः । अत एवाह क्रियासिद्धाविति । यद्व्यापारानन्तरं फलनिष्पत्तिस्तत्प्रकृष्टम् । उक्तञ्च हरिणा "क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा तत्र करणं तत्तदा स्मृतम् । इति । विवक्ष्यते इत्यनेन स्थाल्यादीनामपि करणत्वमस्तीति दर्शितम् । अयम्भावः—कारकत्व

तद्वयाप्यकर्तृत्वादिषट्कञ्च वस्तुविशेषे विशेषणविशेष्यभावसञ्च नियतम् । किन्तु विवक्षितम् । किं कर्त्रादिकमिति प्रश्ने प्रकृतधातूपात्तव्यापाराश्रयतया विवक्षितं कर्त्ता । व्यापारव्यधिकरणफलाश्रयं कर्म । कर्तृकर्मद्वारकसम्बन्धेन व्यापारस्य फलस्य वाऽऽश्रयोऽधिकरणमिति स्थितम् । एवञ्च पचेरधिश्रयणतण्डुलावपनैधोपकर्षणादितात्पर्यकत्वे तदाश्रयो देवदत्त कर्त्ता । ज्वलनतात्पर्यकत्वे एधा कर्त्तार । तण्डुलधारणादिपरत्वे स्थाली कर्त्री । अवयवविभागपरत्वे तण्डुला कर्त्तार ।

## कर्तृकरणयोस्तृतीया ।१।२।१२॥

अनुक्ते कर्त्तरि करणे च तृतीया स्यात् । "भगवया महावीरेण अयमट्ठे पन्नत्ते" "रायहंससरिसीए गतीए उवागच्छइ" "तुमे देवाणुप्पिए सुमिणे दिट्ठे" "गिरिं नहेहिं खणह" "अय दन्तेहिं खायह" "जायतेय पाएहिं हणह" "जे भिक्खु अवमन्नइ" । "महया महया सद्देणं उग्घोसेमाणा" त भवियव्व णं एत्थ कारणेण" ।

कर्तृकरणयोरिति—नात्र प्रत्यय अनुक्ते इति पदत्रयमनुवर्तते । भगवयेत्यादेर्भगवता महावीरेणायमर्थ प्रज्ञप्त इत्यर्थ । अत्र कर्मणि प्रत्ययसत्त्वेनानुक्ते कर्त्तरि तृतीया । रायहसेत्यादे राजहससदृश्या गत्या उपागच्छतीत्यर्थ । राजहसगतिसदृशगतिकरणकमागमनमित्यर्थ । अनेन करणे तृतीया । तुमे इत्यादेस्त्वया देवानुप्रिये स्वप्नो दृष्ट इत्यर्थ । अत्र कर्मणि क्तप्रत्ययस्तेनानुक्ते कर्त्तरि तृतीया । गिरिमित्यादेर्गिरिं नखै खनथेत्यर्थ । अत्र गिरिकर्मक नखकरणक खननमिति बोध । अनेन करणे तृतीया । एवमग्रेऽपि बोध्यम् । अय इत्यादे अयोदन्तै खादथ । जायतेय इत्यादे जाततेजस पादैर्हन्थ । जे इत्यादे ये भिक्षुमवमन्यध्वम् । महया इत्यादे महता शब्देनोद्घोषयन्त । त इत्यादे तद्भवितव्यमत्र कारणेन इत्यर्थ ।

## हेत्वर्थयोगे सर्वाः प्रायेण ।१।२।५४॥

हेतुवाचकैः शब्दैर्योगे सर्वा एव विभक्तयो बाहुल्येन स्यु । केण हेउणा कस्स हेउ । गम्यमानापि क्रिया कारकविभक्तीना निमित्तम् । "धणेण किं धम्मधुराहिगारे" । "अल बालस्स सगेण" । साध्यमिति शेषः ।

हेत्वर्थयोग इति—नाम्न इत्यस्य प्रत्यय इत्यस्य चानुवृत्तिः। हेतुरर्थो येषां ते हेत्वर्थाः, तेषां योगस्तद्योगस्तस्मिन्नित्यर्थः। तत्फलितमाह हेतुवाचकैरित्यादिना। प्रतीयमानायां अपि क्रियायां कारकविभक्तिप्रयोजकत्वं न तूच्यमानाया एव। अत एवात्र कारणे तृतीया सिद्ध्यति। प्रथमस्य धर्मधुराधिकारे धनेन न किञ्चित्साध्यमित्यर्थः। द्वितीयस्य बालस्य सर्वेन साध्यं नास्तीत्यर्थः। धनादेः साधनक्रियां प्रति करणत्वेन तृतीया।

## सहार्थेन गुणीभूते तृतीया ।१।२।२८॥

सहार्थकशब्दयोगेऽप्रधाने तृतीया स्यात्। "भोयाण भोए सह इत्थियाहिं।" "धण पभूय सह इत्थियाहिं"। "जस्सत्थि मच्चुणा सक्खं"। महेति शेषः। "सेणिएण रन्ना सद्धिं"। 'रायवरकण्णाहिं सद्धिं एकदिवसेण गिण्हाविंसु।'

सहार्थेनेति—योगे नाम्न प्रत्यय इति पदत्रयमनुवर्तते। सह योगे इत्यपहाय सहार्थेन योगे इत्युक्तिः सम सद्धिमित्यादियोगेऽपि तृतीयार्थां। अन्यथा केवल सहयोग एव स्यात्। सहार्थकत्वेन सर्वेषां ग्रहणं भवति। सहार्थं साहित्यं तच्च समभिव्याहृतगुणक्रियासमानदेशकालविशिष्टतद्गुणक्रियायत्त्वम्। भोयाणेत्यादेर्भुक्त्वा भोगान् सह स्त्रीभिः इत्यर्थः। (उत्त०१४।९। स्त्रीकर्तृकभोगसमानकालिकेष्टवस्तुकर्मकभोगोत्तरकालिकं प्रव्रजनमिति बोधः। धणमित्यादेर्धनं प्रभूतं सह स्त्रीभिरित्यर्थः। अनेन साहित्ययोगे स्त्रीशब्दात्तृतीया। तथा च स्त्रीस्वामिकत्वसमानकालिकममस्वामिकत्ववद्धनं प्रभूतमिति बोधः। सहादिप्रयोगमन्तरेणापि तदर्थप्रतीतौ तृतीया, अतएव जस्सत्थि मच्चुणा सक्खं इति प्रामाणिकः प्रयोग सङ्गच्छते। सहशब्दाध्याहारकल्पनन्तु कस्यचिन्न क्लेशातिरिक्तफलकम्। मृत्युवृत्तिमित्रतासमानाधिकरणमित्रता यद्वृत्तिरित्यर्थः।

## गोत्तादिभ्योऽभेदे ।१।२।३०॥

गोत्तादिशब्देभ्योऽभेदे वाच्ये तृतीया स्यात्। "कस्सवगोत्तेण अज्ज जम्बू।" 'नामेण मेहकुमारे'।

गोत्तादिभ्य इति—नाम्न तृतीया प्रत्यय इति पदत्रयस्यानुवृत्तिः। कस्सवेत्यादेः काश्यपगोत्रेणार्यजम्बूः इत्यर्थः। अत्रानेनाभेदे तृतीया। तथा च काश्यप-

गोत्राभिन्न आर्यजम्बूरिति वाक्यार्थः । नामेणमित्यादेर्नाम्ना मेघकुमार इत्यर्थ । अनेनाभेदे तृतीया । नामतादात्म्यवान् मेघकुमार इति बोध । एवमन्यत्र बोध्यम् ।

## द्वितीयातृतीये च विनादियोगे ।१।२।४५॥

विनादिशब्दयोगे द्वितीया तृतीया पञ्चमी च भवन्ति । "नाणेण विना न हुन्ति चरणगुणा" । नाणाओ विणा । नाण विणा ।

द्वितीयेति—पञ्चमी नाम्न प्रत्यय इति पदत्रयमनुवर्तन्ते । ज्ञानेन विना न भवन्ति चरणगुणा इत्यर्थ । उत्त० २८।३०। अनेन विना योगे तृतीया । तत्र चकारग्रहणसामर्थ्यात् मण्डूकप्लुत्या पञ्चमीत्यस्यानुवृत्ति । ज्ञानाद्विना । ज्ञान विना । विना योगे पञ्चमी द्वितीया च । एवमन्यत्रापि बोध्यम् । आकृतिगणोऽयम् ।

## पडिक्कमादीनां योगे पञ्चम्यर्थे परमतादिभ्यो वा ।१।२।३१॥

परमतादिशब्देभ्य' पञ्चम्यर्थे परिक्कमादियोगे तृतीया वा स्यात् । पडिक्कमामि परमतेहिं वा पुणो । तेण पर । नवहिं वरिसेहिं उणा । पक्षे पञ्चमी ।

पडिक्कमादीनामिति—तृतीया नाम्न प्रत्यय इति पदत्रयस्यानुवृत्ति । पडिक्कमादिपदेन न केवल धातूनामेव ग्रहणम् । तथा सति हि तेन पर इत्यादौ तृतीया न स्यात् । तदेव दर्शयितु धात्वधातुपरकमुदाहरण दर्शयति—परमतेहिं इत्यादि । प्रतिक्रमामि परमन्त्रेभ्य इति तदर्थ । उत्त० १८।३१। तेणपरमित्यस्य तत परमित्यर्थ । नवहिंमित्यादेर्नवभिर्वर्षैरूना इत्यर्थ ।

## दिक्कालार्थेभ्य सप्तम्यर्थे ।१।२।३२॥

दिग्वाचककालवाचकेभ्यः सप्तम्यर्थे तृतीया वा स्यात् । जेणामेव सेणिए राया तेणामेव । जंस्सि तंस्सि इति वा । पुरत्थिमेण लवणसमुद्दे पचजोयणसय खेत्त जाणइ पासई । दक्खिणेणं । पच्चत्थिमेण । उत्तरेण । पुरत्थिमे । दक्खिणे । पच्चत्थिमे । उत्तरे इति वा । तेण कालेण । तेण समएण । तस्सि काले । तस्सि समये ।

दिक्कालार्थस्य इति—वा नाम्न प्रत्यय तृतीया इति पदचतुष्टयस्यानुवृत्ति । यत्र केवल सप्तम्यर्थ एव तृतीयया भाष्यते तत्र तद्विधानार्थमिदं सूत्रम् । तत्र दिगर्थेषु दिक्सामान्यस्य दिग्विशेषस्य च तयो समानाधिकरणासमानाधिकरणस्यान्यस्य द्रव्यस्यासमानाधिकरणस्य च ग्रहणम् । अत एव जेणामेव, पुरत्थिमेण इत्युभयत्र तृतीया सिध्यति । कालार्थेषु च कालसामान्यस्य तद्विशेषस्य तयोरेव समानाधिकरणस्यैव ग्रहणम् । अत एव ज ण ण्णेण, दिणेण वा इति न भवति । जेणामेवेति । यस्मिन्नेव श्रेणिको राजा तस्मिन्नेव । पुरत्थिमेण इति । पूर्वस्मिन् लवणसमुद्रे पञ्चयोजनशत क्षेत्र जानाति पश्यति । दक्षिणे । पश्चिमे । उत्तरे । तेण इति । तस्मिन् काले । सर्वत्र सप्तम्यर्थे तृतीया । पक्षे च सप्तमी सूत्र एव दर्शिता । अत एव सर्वत्र तेण कालेण इति वाक्ये ण इत्यस्य वाक्यालङ्कारत्व स्वीकृत तन्न सम्यक् ।

## इत्थभूतस्य व्यावर्त्तके ।१।२।२९।।

कञ्चित्प्रकार प्राप्तस्य लक्षणे तृतीया स्यात् । परिअरबंधेन भडो ।
निवसणेण महिलिओ ।।

इत्थभूतस्येति—तृतीया प्रत्यय नाम्न इति पदत्रयमनुवर्तते । लक्षणत्वञ्च ज्ञानजनकज्ञानविषयत्व यथा भटत्वज्ञानजनकपरिकरबन्धज्ञानविषयत्वस्य परिकरसत्त्वेन लक्षणत्वम् । लक्ष्यलक्षणभावश्च तृतीयार्थ । परिकरबन्धज्ञाप्यभटत्ववानिति बोध । करणत्वाविवक्षाया लक्ष्यलक्षणभावविवक्षाया सूत्रमिदम् । करणत्वविवक्षाया तु परिकरबन्धकरणकभटकर्मकज्ञानमिति बोधोदयाय जाणिज्जइ इति क्रियाया आवश्यकत्वम् । एवमेवान्यत्र बोध्यम् ।

---

# अथ चतुर्थी

---

## कर्मान्वयेनेष्ट सम्प्रदानम् ।१।१।४६।।

कर्मणा य सम्बद्धुमिच्छति कर्ता स सम्प्रदानसंज्ञ स्यात् ।

कर्मान्वयेनेति—कारके इत्यनुवर्तते । धात्वर्थफलवत्त्वं कर्मत्वं तद्विशिष्टं कर्म तेनान्वयः कर्मान्वयस्तेनेति विग्रहः । प्रकृत्यादित्वात्प्रकारत्वे तृतीया । तथा च कर्मान्वयप्रकारता इति लब्धा । इष्टम् इच्छाविषयः । तत्रेच्छायां प्रकारताया निरूपकत्वसम्बन्धेनान्वयः । तथा च कर्मान्वयप्रकारतानिरूपकेच्छाविषय इति लाभस्तत्फलितमेव मूले कर्मणेत्यादिनोक्तम् ।

## सम्प्रदाने चतुर्थी ।१।२।१३॥

**अनुक्ते सम्प्रदाने वाच्ये चतुर्थी स्यात् । एगमेगाए भारियाए एगमेगं हिरण्णकोडिं दलयइ ।**

सम्प्रदान इति—नाम प्रत्ययः अनुक्ते इति पदत्रयस्यानुवृत्तिः । दलधात्वर्थश्च स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलो व्यापारः । तादृशव्यापारजन्यैकैकहिरण्यकोटिस्वामित्ववती एकैव स्त्री भवतु इति कर्तुरिच्छामादाय लक्षणसमन्वयो बोध्यः । एवमन्यत्रापि । एगमेगाए इत्यादेः 'एकैकस्यै भार्यायै एकैका हिरण्यकोटिं ददाति । (नाया ।१।२०।) इत्यर्थः ।

## रुच्यर्थैः प्रीयमाणः ।१।१।४७॥

**रुच्यर्थकधातुयोगे सति प्रीयमाणोऽर्थः सम्प्रदानसंज्ञः स्यात् । मम रोअई पवज्जा ।**

रुच्यर्थैरिति—कारके इति सम्प्रदानमिति चानुवर्तते । प्रीयमाण इति । प्रीयत इति प्रीयमाणः कर्मणि लटि शानच् । रोयधातोर्विषयत्वसम्बन्धावच्छिन्नप्रीत्यनुकूलस्तत्समानाधिकरणो व्यापारोऽर्थः । तथा च मम रोअई पवज्जा इत्यत्र समवायसम्बन्धेनास्मन्निष्ठा या प्रव्रज्याविषया प्रीतिस्तदनुकूलव्यापारवती प्रव्रज्या इति शाब्दबोधो भवति । एवञ्चात्र सम्बन्धसामान्यविवक्षायां षष्ठ्यां कारकत्वविवक्षायां कर्मसंज्ञायाश्च प्राप्तौ सम्प्रदानवचनम् । तथा चात्र फलतावच्छेदकः सम्बन्धो विषयता तेन सम्बन्धेन तत्समानाधिकरणव्यापारः प्रव्रज्या एवेति न द्वितीया । प्रीणधातोस्तु समवायसम्बन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिव्यधिकरणो व्यापारः । अत एव मा पीणयइ पवज्जेत्यत्र द्वितीया सिध्यति । ननु लसधातोरपि विषयत्वसम्बन्धावच्छिन्नप्रीत्यनुकूलव्यापार एवार्थः । तथा चात्रापि धातौ सम्प्रदानसंज्ञायामहं पवज्जां अभिलसामीति न स्यादिति चेन्न, विषयत्वसम्बन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिव्यधिकरणो व्यापारो ह्यभिलसधातो-

र्थं । एवञ्च प्रीत्यनुकूलव्यापारोऽस्मन्निष्ठ । प्रीतिश्च विषयतया प्रव्रज्यायामिति न कर्मत्वानुपपत्ति । तथा च विषयत्वसम्बन्धावच्छिन्नप्रीत्यनुकूलतत्समानाधिकरणत्व रोयधात्वर्थव्यापारे, विषयत्वसम्बन्धावच्छिन्नप्रीत्यनुकूलतद्वयधिकरणत्वमभिलसधात्वर्थव्यापार इति स्वार्थफलव्यधिकरणव्यापारवाचकत्व लसधातोरतस्तस्य सकर्मकत्वम् । स्वार्थफलसमानाधिकरणव्यापारवाचकत्व रोय धातोरतस्तस्याकर्मकत्वम् । प्रीणधातो समवायसम्बन्धावच्छिन्नप्रीत्यनुकूलप्रीति व्यधिकरणव्यापारार्थकत्वेन प्रीयमाण इत्यनेन व्यापारजन्या या प्रीतिः सम वायेन तदाश्रय इत्यर्थलाभेन समवायेन प्रीत्याश्रय सम्प्रदानसञ्ज्ञक इति लभ्यम् । अत एवाभिलष्यमाण इति नोक्तम् । तथा सति विषयताया एवात्र फलतावच्छेदकसम्बन्धत्वेन तेन सम्बन्धेन प्रीत्याश्रय सम्प्रदानसञ्ज्ञक इत्यर्थ स्यात्, तथा च प्रव्रज्याया एव सम्प्रदानसञ्ज्ञा स्यात् । अथ चानेन रोयलसयो समानार्थताया सिद्धौ 'अहं पवज्ज अभिलसामि' इत्यपि न स्यादिति महाननर्थ स्यादत प्रीय माण इत्युक्तम् । अत एव मम रोयई पवज्जा हु दुक्ख । उत्त० १३ । १४ ।

## कुज्झादिभि सप्तमी ।१।२।२९॥

कुज्झादिधातूनां योगे सति य प्रति क्रोधादयस्तस्माच्चतुर्थीसप्तम्यौ भवतः। अधम्माय कुज्झइ । मित्तेसु कुप्पति ।

कुज्झादिभिरिति—चतुर्थी नाम प्रत्यय इति त्रयाणामनुवृत्ति । क्रुधादीना योगे चतुर्थ्यादेर्विधानेन प्रत्यासत्त्या य प्रति क्रोधादयस्तद्वाचक एव तदुद्देश्यतया ग्रहीतुमुचित इत्यत आह—य प्रति क्रोधादय इति । आदिपदस्य प्रकारवाचकत्वात् कुज्झभिन्ना कुज्झसमानार्थका अन्येपि द्रोहासूयाद्यर्थका आदिपदेन गृह्यन्ते । अधम्माय इति अधर्माय क्रुध्यति । सप्तम्या अधम्मे कुज्झइ । मित्ताय कुप्पइ । मित्राय कुप्यति । सप्तम्यान्तु मूल एवोक्तम् । उत्त० ११।८। कुज्झधातोरुत्कटद्वेषानुकूलो व्यापारोऽर्थ । तथा चाधर्मविषयको त्कटद्वेषानुकूलो व्यापारोऽर्थ । तथा चाधर्मविषयकोत्कटद्वेषानुकूलव्यापार इति बोध । एव कुप्पइ इत्यत्रापि बोध्यम् । कुज्झकुप्पधात्वो समानार्थकत्वात् ।

## अनध्वनि गत्यर्थकर्मणि द्वितीया च ।१।२।३५॥

गत्यर्थधातो' अध्वभिन्नकर्मवाचकाद्द्वितीयाचतुर्थ्यौ भवत' । एगे कूडाय गच्छति । एगे कूडं गच्छति ।

अनध्वनि इति—नाम्नः प्रत्यय चतुर्थी इति पदत्रयमनुवर्तते। न अध्वा अनध्वा तस्यानध्वन। अत एव मग्गाय गच्छइ इति न। अध्वभिन्नत्वाभावात्। सामान्यकर्मणो वारणाय गत्यर्थेति। व्वयादिधातूनामपि सङ्ग्रहायार्थ इति। गन्त्रधिष्ठिताध्ववाचकस्यैव निषेध। अत एव 'विपथेण पथाए गच्छइ' इत्यादौ चतुर्थी भवति। अत्र गमनकर्त्रधिष्ठितो नाध्वा किन्तु विरुद्धपथहेतो पन्थान गच्छति। एक कूट गच्छति। एव वयइ, एइ इत्यादि योगेऽपि बोध्यम्।

## हितादिभिर्वा ।१।२।३६॥

हितादियोगे चतुर्थी वा स्यात्। जीवाए हित। ससाराए सुख। पक्षे जीवस्स हित। ससारस्स सुख।

हितादिभिरिति—नाम्न प्रत्यय चतुर्थी इति पदत्रयस्यानुवृत्ति। जीवाए इत्यादि। जीवाय हितम्। ससाराय सुखम्। अत्र सम्बन्धसामान्ये प्राप्ताया षष्ठ्या पक्षे चतुर्थी विधीयते। भूताए बली। भूताय बलि। पक्षे षष्ठी च मूल एव प्रदर्शिता।

## द्विरुक्तमज्झशब्दैर्द्वितीयासप्तम्यौ च ।१।२।४७॥

द्विरुक्तमज्झशब्दै योगे सति द्वितीयासप्तम्यौ षष्ठी च भवन्ति। नगर मज्झमज्झेण निग्गच्छइ। नगरे मज्झमज्झेण। नगरस्स मज्झमज्झेण।

द्विरुक्तमज्झशब्दैरिति—षष्ठी नाम्न प्रत्यय इत्येतेषामनुवृत्ति। योगे इति शेष। षष्ठीति चकारादनुवर्तते। द्वितीयासप्तम्योर्विशेषविधानार्थमिद सूत्रम्। षष्ठी तु सामान्यसूत्रेणैव सिद्धा। चकारादत्रानुवर्त्तन तु समावेशज्ञापनार्थम्। नगरमित्यादेर्नगरस्स मध्ये भूत्वा निर्गच्छतीत्यर्थ। नाया०। २। ३६। अनेन सूत्रेण द्विरुक्तमज्झशब्दयोगे द्वितीया। नगरे इत्यादेरपि पूर्वोक्त एवार्थ। नाया० ।२।४०। अनेन द्विरुक्तमज्झशब्दयोगे सप्तमी। नगरस्सेत्यादेरपि निरुक्तार्थ एव। नाया० १।१७। शेषे षष्ठीति सूत्रेण सम्बन्धसामान्ये षष्ठी।

## दूरादिगन्तिकार्थैं पञ्चम्यन्यतरस्याम् ।१।२।४९॥

दूरदिगन्तिकार्थकशब्दयोगे पञ्चमी वा स्यात्पक्षे षष्ठी। भगवतो महावीरस्स अतिए। सेणियस्स रन्नो अन्तियाओ। मेहस्स कुमारस्स पुव्वदक्खिणेण। गगाए महानदीए दाहिणिल्ले कूले।

रर्थः। एवञ्च प्रीत्यनुकूलव्यापारोऽस्मभिप्र । प्रीतिश्च विषयतया प्रव्रज्यायामिति न धर्मैक्यानुपपत्ति । तथा च विषयत्वसम्बन्धावच्छिन्नप्रीत्यनुकूलसमानाधिकरणत्व नेयधात्वर्थव्यापारे, विषयत्वसम्बन्धावच्छिन्नप्रीत्यनुकूलगढ़गधिकरणत्वमभिलसधात्वर्थव्यापार इति स्वार्थफलव्यधिकरणव्यापारवाचकत्व रुस धातोरतस्तस्य सकर्मकत्वम् । स्वार्थकसमानाधिकरणव्यापारवाचकत्व रोय धातोरतस्तस्याकर्मकत्वम् । प्रीणधातो समवायसम्बन्धावच्छिन्नप्रीत्यनुकूलप्रीति व्यधिकरणव्यापारार्थकत्वेन प्रीयमाण इत्यनेन व्यापारजन्या या प्रीतिः सम वायेन तदाश्रय इत्यर्थलाभेन समवायेन प्रीत्याश्रय सम्प्रदानसंज्ञक इति लब्धम्। अत एवाभिलष्यमाण इति नोक्तम् । तथा सति विषयतायाएवात्र फलतावच्छेदकसम्बन्धत्वेन तेन सम्बन्धेन प्रीत्याश्रय सम्प्रदानसंज्ञक इत्यर्थः स्यात्, तथा च प्रव्रज्याया एव सम्प्रदानसंज्ञा स्यात् । अथ धानेन रोचलसयो समानार्थतायां सिद्धौ 'अह पवज्ज अभिलसामि' इत्यपि न स्यादिति सदानाथ स्यादत प्रीयमाण इत्युक्तम्। अत एव मम रोयई पवज्जा हु दुक्खा। उत्त० १३। १४।

## कुज्झादिभि सप्तमी ।१।२।३९॥

### कुज्झादिधातूनां योगे मति य प्रति क्रोधादयस्तस्माच्चतुर्थीसप्तम्यौ भवत । अधम्माय कुज्झइ । मित्तेसु कुप्पति ।

कुज्झादिभिरिति—चतुर्थी नाम्न प्रत्यय इति त्रयाणामनुवृत्ति । क्रुधादीना योगे चतुर्थ्यादर्विधानेन प्रत्यासत्त्या य प्रति क्रोधादयस्तद्वाचक एव तदुद्देश्यतया ग्रहीतुमुचित इत्यत आह—य प्रति क्रोधादय इति । आदिपदस्य प्रकारवाचकत्वात् कुज्झभिन्ना कुज्झसमानार्थका अन्येपि द्रोहासूयाद्यर्थका आदिपदेन गृह्यन्ते । अधम्माय इति अधर्माय क्रुध्यति । सप्तम्या अधम्मे कुज्झइ । मित्ताय कुप्पइ । मित्राय कुप्यति । सप्तम्यान्तु मूल एवोक्तम् । उत्त० ११।८। कुज्झधातोरुत्कटद्वेषानुकूलो व्यापारोऽर्थ । तथा चाधर्मविषयको त्कटद्वेषानुकूलो व्यापारोऽर्थ । तथा चाधर्मविषयकोत्कटद्वेषानुकूलव्यापार इति बोध । एव कुप्पइ इत्यत्रापि बोध्यम् । कुज्झकुप्पधात्वो समानार्थकत्वात् ।

## अनध्वनि गत्यर्थकर्मणि द्वितीया च ।१।२।३५॥

### गत्यर्थधातो अध्वभिन्नकर्मवाचकाद्द्वितीयाचतुर्थ्यौ भवत. । एगे कूडाय गच्छति । एगे कूड गच्छति ।

## क्रियार्थक्रियावाचकोपपदस्य तुमन्तस्याप्रयुक्तस्य कर्मणि ।१।२।४०॥

क्रियार्थक्रियावाचकमुपपदं यस्य तस्य तुमन्तस्याप्रयुज्यमानस्य कर्मणि चतुर्थी स्यात् । अट्ठाए य अणट्ठाए भूयगामं विहिंसइ । तुब्भं नानमन्ति ।

क्रियार्थक्रियेति—चतुर्थी नाम्न प्रत्यय इति त्रयाणामनुवृत्तिः । क्रिया-प्राप्त्यादिरूपाऽर्थः प्रयोजनं यस्याः सानुपपद-समीपोच्चारितं पदं यस्य स क्रियार्थक्रियावाचकोपपदस्तस्येत्यर्थः । अन्यपदार्थोऽत्र तुमन्तशब्दः । अप्रयुक्त-स्येति किम् ? प्रयुक्ते तुमन्ते मा भूत् । अट्ठाए येति—अर्थाय च अनर्थाय भूतग्रामं विहिंसति । अर्थं प्राप्तुं प्रयोजनं साधयितुमित्यर्थः ।

अणट्ठाए इति—अनर्थं आप्तुमित्यर्थः । तुब्भं इति—जे केइ पत्थिवा तुब्भं नानमन्ति नराहिवा । उत्त० ९।३२। इति । ये केऽपि पार्थिवास्तुभ्यं नान-मन्ति नराधिपाः । तुभ्यं नानमन्ति । त्वामनुकूलयितुं नानमन्तीत्यर्थः । इदञ्च सूत्रं द्वितीयापवादः । न चैतत्सूत्रोद्देश्यात्तादर्थ्ये चतुर्थी भविष्यतीति वाच्यम्, विहिंसनादिक्रियाया अर्थाद्यर्थत्वाभावात् । प्राप्त्याद्यर्था हि विहिंसनादिक्रिया । प्राप्त्यादिक्रिया चार्थादिकर्मिका ।

## तादर्थ्ये चतुर्थी ।१।२।३४॥

### तादर्थ्ये चतुर्थी स्यात् । अट्ठाए दण्डो ।

तादर्थ्ये इति—नाम्न इति प्रत्यय इति चानुवर्तेते । स अर्थो यस्य स तदर्थस्तस्य भावस्तादर्थ्यम्, तच्च जन्यजनकभावादिभेदादनेकविधम् । अर्थाय दण्ड इत्यर्थः । अर्थनिष्ठजन्यतानिरूपितजनकतावान् दण्ड इति बोधः । न चार्थं साधयितुं दण्ड इत्यर्थकरणेन पूर्वेणैव सिद्धौ सूत्रमिदं व्यर्थमिति वाच्यम्, 'चतुर्थी तादर्थ्ये' इति सूत्रेण समाससिद्ध्यर्थमस्यावश्यकत्वात् । अन्यथा सामर्थ्याभावाद्दण्डशब्देन समासो न स्यात् । न चानेनैव सर्वत्र चतुर्थीसम्भवेन सम्प्रदानचतुर्थीविधायकं व्यर्थमिति वाच्यम्, शाब्दबोधे सम्प्रदानत्वस्य बोधाय सम्प्रदानचतुर्थ्या आवश्यकत्वात् । एवमेव 'एस मे णित्थारिए समाणे पच्छा पुरा हियाए सुहाए खेमाए णिस्सेसाए आणुगामियत्ताए भविस्सति इत्यादावपि बोध्यम् । एषो (अर्थः) मे निस्तारितः सन् पश्चात् पुरा हिताय सुखाय क्षेमाय निःश्रेयसायानुगामिकतायै भविष्यति । नाया० १-२६ ।

दूरदिगन्तिकार्थैरिति—नाम्न प्रत्यय षष्ठी इति पदत्रयानुवृत्ति । योगे इत्यस्याध्याहार । अन्यतरस्या ग्रहण विकल्पार्थं न, किन्तु षष्ठीसमुच्चयार्थम् । 'भगवतो महावीरस्स अतिए' इत्यस्य 'भगवतो महावीरस्यान्तिके' इत्यर्थ । अत्रान्तिकशब्दयोगेऽनेन सूत्रेण पञ्चमी । पक्षे षष्ठी । सेणियस्सेत्यस्य श्रेणिकस्य राज्ञोऽन्तिकादित्यर्थ । नाया० १।१६

दिगर्थस्योदाहरण दर्शयति—मेहस्स इत्यादि । मेहस्सेत्यादे मेघस्य कुमारस्य पूर्वदक्षिणेनेत्यर्थ. । पञ्चम्यान्तु मेहाओ कुमाराओ पुव्वदक्खिणेण । गगाए इति—गगाया महानद्या दक्षिणे कूले । अत्र दिगर्थदाहिणिल्लशब्दयोगे पञ्चमी । षष्ठ्या उदाहरणन्तु स्वय ज्ञेयम् ।

## अन्नाद्यर्थै ।१।२।४२॥

अन्नाद्यर्थकशब्दयोगे पञ्चमी स्यात् । सरीराओ अन्नो इयरो भिन्नो परो अप्पाणो ।

अन्नाद्यर्थैरिति—पञ्चमीति नाम्न इति प्रत्यय इति चानुवर्तते । सरीराओ इत्यादे शरीरादन्य इतरो भिन्न पर आत्मा । अर्थैरित्युपादानादेव पर्याय योगसग्रह । अयञ्चाकृतिगण ।

## तुमर्थेऽनाद्यन्तेभ्य ।१।२।४८॥

भावार्थकानादिप्रत्ययान्तेभ्यस्तुमर्थे वाच्ये चतुर्थी स्यात् 'दुल्लहे सवणयाए' 'पासणयाए' 'अहमेयस्स अट्ठस्स अणरिहे सवणयाए' 'पाय वन्दए पहारेत्थ गमणाए' 'से के ण जाणति अम्मयाओ के पुव्व गमणाए के पच्छागमणाए । ववसियस्स एत्थ किं दुक्कर करणयाए ।

तुमर्थ इति—चतुर्थी नाम्न प्रत्यय इतिपदत्रयमनुवर्तते । दुल्लहे इत्यादे दुर्लभ श्रोतुमित्यर्थ । दुर्लभो द्रष्टुम् । अहमेतस्यार्थस्यानर्ह श्रोतुम् । पादौ वन्दितु प्रधारितवान् गन्तुम् । सेकेणमित्यादि । अथ को जानात्यम्ब तात ? क पूर्व गमनाय क पश्चाद्गमनाय ? नाया० १।२३। क पूर्व गन्तुमर्हति क पश्चाद्गन्तुमर्हतीत्यर्थ । अनेन तुमर्थे चतुर्थी । ववसियस्स इत्यादेर्व्यवसितस्यात्र किं दुष्कर करणतायै कर्तुमित्यर्थ । नाया० ।१।१३। एवमेव "वायणाए पुच्छणाए परियट्टणाए धम्माणुजोगचिताए य उच्चारस्स य पासवणस्स अइगच्छमाणाय निगच्छमाणाय" इत्यादौ बोध्यम् ।

## क्रियार्थक्रियावाचकोपपदस्य तुमन्त-स्याप्रयुक्तस्य कर्मणि ।१।२।४०॥

क्रियार्थक्रियावाचकमुपपद यस्य तस्य तुमन्तस्याप्रयुज्यमानस्य कर्मणि चतुर्थी स्यात् । अट्टाए य अणट्टाए भूयगाम विहिंसइ । तुब्भ नानमन्ति ।

क्रियार्थक्रियेति—चतुर्थी नाम्न प्रत्यय इति त्रयाणामनुवृत्ति । क्रिया-प्राप्त्यादिरूपाऽर्थ प्रयोजन यस्या सानुपपद–समीपोच्चारित पद यस्य स क्रियार्थक्रियावाचकोपपदस्तस्येत्यर्थ । अन्यपदार्थोऽत्र तुमन्तशब्द । अप्रयुक्त-स्येति किम् ? प्रयुक्ते तुमन्ते मा भूत् । अट्टाए येति—अर्थाय च अनर्थाय भूतग्राम विहिंसति । अर्थं प्राप्तु प्रयोजन साधयितुमित्यर्थ ।

अणट्टाए इति—अनर्थं आप्तुमित्यर्थ । तुब्भ इति—जे केइ पत्थिवा तुब्भ नानमन्ति नराहिवा । उत्त० ९।३२। इति । ये केऽपि पार्थिवास्तुभ्य नान-मन्ति नराधिपा । तुभ्य नानमन्ति । त्वामनुकूलयितु नानमन्तीत्यर्थ । इदञ्च सूत्र द्वितीयापवाद । न चैतत्सूत्रोद्देश्यात्तादर्थ्ये चतुर्थी भविष्यतीति वाच्यम्, विहिंसनादिक्रियाया अर्थाद्यर्थत्वाभावात् । प्राप्त्याद्यर्था हि विहिंसनादिक्रिया । प्राप्त्यादिक्रिया चार्थादिकर्मिका ।

## तादर्थ्ये चतुर्थी ।१।२।३४॥

तादर्थ्ये चतुर्थी स्यात् । अट्टाए दण्डो ।

तादर्थ्य इति—नाम्न इति प्रत्यय इति चानुवर्तते । स अर्थो यस्य स तदर्थस्तस्य भावस्तादर्थ्यम्, तच्च जन्यजनकभावादिभेदादनेकविधम् । अर्थाय दण्ड इत्यर्थ । अर्थनिष्ठजन्यतानिरूपितजनकतावान् दण्ड इति बोध । न चार्थं साधयितु दण्ड इत्यर्थकरणेन पूर्वेणैव सिद्धौ सूत्रमिद व्यर्थमिति वाच्यम्, 'चतुर्थी तादर्थ्ये' इति सूत्रेण समाससिद्ध्यर्थमस्यावश्यकत्वात् । अन्यथा सामर्थ्याभावाद्दण्डशब्देन समासो न स्यात् । न चानेनैव सर्वत्र चतुर्थीसम्भवेन सम्प्रदानचतुर्थीविधायक व्यर्थमिति वाच्यम्, शब्दबोधे सम्प्रदानत्वस्य बोधाय सम्प्रदानचतुर्थ्या आवश्यकत्वात् । एवमेव 'एस मे नित्थारिए समाणे पच्छा पुरा हियाए सुहाए खेमाए णिस्सेसाए आणुगामियत्ताए भविस्सति इत्यादावपि बोध्यम् । एषो (अर्थ) मे निस्तारित सन् पश्चात् पुरा हिताय सुखाय क्षेमाय नि श्रेयसायानुगामिकतायै भविष्यति । नाया० १–२६ ।

## णमञादियोगे ।१।२।३७।।

णमो इत्यादिशब्दयोगे चतुर्थी स्यात् । 'णमोऽत्थुण अरिहंताणं भगवताणं' 'नाल ते मम ताणाय ।' णमोयोगे क्वचित्सम्बन्धसामान्ये षष्ठ्यपि। "नमोऽत्थुण समणस्स भगवओ महावीरस्स ।"

णमनादीति—चतुर्थी नाम्न प्रत्यय इति पदत्रयस्यानुवृत्ति । नमोऽस्तु अर्हद्भ्यो भगवद्भ्य । अनेन शब्दयोगे चतुर्थी । अलमिति पर्याप्त्यर्थक ग्राह्य मत्र सूत्रे, तेन निषेधार्थकालशब्दयोगे न चतुर्थी । नाल ते मम ताणाय । मम त्राणाय ते समर्था न इति बोध । अलशब्दपर्याययोगेऽपि चतुर्थी षष्ठी च बोध्ये । अलशब्दयोगे तु चतुर्थ्येव बोध्या । णमोशब्दयोगे षष्ठी तु मूल एव दर्शिता । एतत्सूत्राभावे सर्वत्र सम्बन्धसामान्ये षष्ठी प्राप्ता, तद्बाधनार्थमिद, तथा च क्वचित् षष्ठ्यामपि न क्षति ।

## त्तार्थस्य लोपेऽधिकरणे च पञ्चमी ।१।२।४१।।

त्तार्थकशब्दलोपे सति कर्मण्यधिकरणे च पञ्चमी स्यात् । णाणाओ मुचइ । आसणाओ पस्सइ ।

त्तार्थेति—नाम्न प्रत्यय कर्मणि इति पदत्रयमनुवर्तते । त्तप्रत्ययश्च सम्बन्धार्थकोऽत्र गृह्यते। त्तार्थोऽर्थो यस्य स त्तार्थस्तस्य लोपे । कर्माधिकरणञ्च प्रत्यासत्त्या त्तार्थप्रकृत्यर्थस्यैव बोध्यम् । णाणाओ इति। णाण आरोहिय मुचइ इत्यर्थ । ज्ञानमारुह्य मुच्यते। अत्रारोहियेत्यस्य लोपसत्त्वे न तत्कर्मण पञ्चमी। आसणाओ इति। आसणे उपविस्स पस्सइ । आसनमुपविश्य पश्यति । अत्रोपविस्सेत्यस्य लोपसत्त्वेन तदधिकरणे पञ्चमी ।

## भयत्राणार्थाना भयहेतु ।१।१।४९।।

भयार्थकत्राणार्थकाना प्रयोगे सति भयहेतुरपादानसज्ञः स्यात् । बाले सतस्सई भया। अधम्माओ तायइ ।

भयत्राणार्थानामिति—अपादानमित्यनुवर्तते । बाले सतस्सई भया। बाल सन्त्रस्यति भयात्। उत्त० ५।१६। भयजनकेऽपि लक्षणया भयशब्दप्रयोगो भवति, तेन भयेत्यस्य नरकगतिगमनादिति वाक्यार्थबोध सम्पन्न । अत्र भयार्थकत्रसधातुप्रयोगेण भयहेतोर्नरकगतिगमनस्यापादानसज्ञा, तद्बोधकभयशब्दा

त्पञ्चमी । अधम्माओ इति । अधर्मात्त्रायते । त्राणार्थकयोगेऽधर्मस्यापादानसंज्ञा, तद्वाचकादधम्मशब्दात्पञ्चमी ।

## हेतौ तृतीया च ।१।२।४४॥

हेतौ पञ्चमीतृतीये भवतः । 'नो इन्दियगेज्झ अमुत्तभावा' "अमुत्तभावा वि य होइ निचो" । सिक्खाण लब्भइ । थभा कोहा पमाएण रोगेणालस्सेण य । एएणं अगुलपमाणेण छ अगुलाइ पाओ । कम्मुणा बभणो होइ । कम्मुणा होइ खत्तिओ । अत्था हणन्ति, धम्मा हणन्ति, कम्मा हणन्ति । एएण मुहुत्तपमाणेण तीसमुहुत्तस्स अहोरत्तो ।

हेताविति—पञ्चमी नाम्न प्रत्यय इति त्रयाणामनुवृत्ति । ननु हेतोरपि करणत्वादेव तृतीयासिद्धौ किमतिरिक्ततृतीयाविधानेनेति चेन्न, करणत्वहेतुत्वयो-रत्यन्तभेदादन्यतरेण निर्वाहासम्भवात् । तथाहि क्रियामात्रनिरूपित व्यापार-वद्वृत्ति च यत्तत्करणम् । द्रव्यगुणक्रियानिरूपित निर्व्यापारसव्या-पारवृत्तित्व च हेतुत्वम् । नो इन्दियेति—नो इन्द्रियमाह्योऽमूर्त्तभावात्, अमूर्त्तभावादपि च भवति नित्य । उत्त० ।१४।१९। सिक्खाणेति—शिक्षा न लभ्यते स्तम्भात् क्रोधात् प्रमादेन रोगेणालस्येन च । उत्त० ११।३। एएण इति—एतेनाङ्गुलप्रमाणेन षडङ्गुलय पाद । कम्मुणेति—कर्मणा ब्राह्मणो भवति । कर्मणा भवति क्षत्रिय । अत्था हणन्ति—अर्थाद् हति । धर्माद् हति । कामाद् हति । एएण इति—एतेन मुहूर्त्तप्रमाणेन त्रिंशन्मुहूर्तस्याहोरात्रम् । सर्वत्र क्रमेण हेतौ पञ्चमी तृतीया च भवत ।

## विभागेऽवधिरपादानम् ।१।१।४८॥

### विभागे साध्ये यदवधिभूत तदपादानसज्ञ स्यात् ।

विभाग इति—विभागो विश्लेष । तस्मिन् साध्ये इति शेष । कारके इत्यनुवर्तते । अवधित्वञ्चाम विभागजनकतत्क्रियावदन्यत्वे सति तत्क्रियाजन्य-विभागवत्त्वम् । तदेवापादानत्वम् ।

## अपादाने पञ्चमी ।१।२।१४॥

अनुक्तेऽपादाने पञ्चमी स्यात् । "सयणिजाओ उट्ठेति पायपीढाओ पच्चोरुहति" "गिहेहिंतो पडिनिक्खमति ।"

अपादान इति—अनुक्ते नाम्न प्रत्यय इत्येतेषामनुवृत्तिः । अनुक्त इत्यनुवर्तनेन निग्गतजलो मेहो इत्यादौ न पञ्चमी । समासेनैवापादानत्वोक्ते । सयणिज्जाओ इति शयनीयादुत्तिष्ठति । पायपीढाओ इति पादपीठात्प्रत्यवरोहति । गिहेहिंतो इति गृहेभ्य प्रतिनिष्क्रामन्ति । सर्वत्रापादाने पञ्चमी ।

## पभित्यादिभि ।१।२।४३॥

पभित्यादिशब्दानां योगे पञ्चमी स्यात् । ताओ पभिइ । ताओ आरब्भ । द्वाणाओ बहि । वाराणसीइ बहिया । अपवीराए । परिवीराए । आमुत्तिओ ससारो । आबालेहिंतो वीरभत्ती ।

पभित्यादिभिरिति—नाम्न प्रत्यय पञ्चमी इतिपदत्रयमनुवर्तते । पभिति आदिर्येषा ते पभित्यादयस्तै पभित्यादिभि । अयञ्चाकृतिगण । उपपदपञ्चमीना निमित्ताना सर्वेषामत्र पाठो बोध्य । ताओ पभिइ—तत प्रभृति । प्रभृत्यर्थकपभितिशब्दयोगे पञ्चमी । ताओ आरब्भ—तत आरभ्य इत्यर्थ । आरभ्यार्थआरब्भशब्दयोगे पञ्चमी । आपूर्वकरभधातो सकर्मकत्वेन तद्योगे क्वचिद् द्वितीयाऽपि । अत एव त आरब्भ इति सिध्यति । न चैव तंसि आरब्भ इति न स्यादिति वाच्यम्, तंसि आरब्भ विषेत्यर्थवरणेनादोषात् । बहियोगे पञ्चमी सार्वत्रिकी न । अत एव गामस्स बहि बहिया इत्यादि सिध्यति । वर्जनार्थकयोरेवापपरिशब्दयोर्योगे पञ्चमी । तेन वीरं परित्यज्य ससार इति बोधोदयो भवति । आ तु मर्यादाभिविध्यर्थक एव गृह्यते । ईषदाद्यर्थकयोगे न पञ्चमी । मर्यादा च तेन विना । तेन सहाभिविधि । तथा च आमुत्तिओ ससारो । आमुक्ते ससार इति मुक्ति मर्यादीकृत्य ससार इत्यर्थ । आबालेहिंतो भत्ती । आबालेभ्यो भक्ति । बालमभिव्याप्य भक्तिरित्यर्थ । एवम् आसत्तमाओ कुलवसाओ इत्यत्र मर्यादार्थक आयोगे पञ्चमी । एवमन्येऽपि उपपदपञ्चमीप्रयोगा ऊह्या ।

---

# अथ षष्ठी ।

## शेषे षष्ठी ।१।२।४६॥

कारकनामार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषस्तत्र षष्ठी

स्यात्। तस्सणं सेणियस्स रण्णो धारणी नाम देवी होत्था। कर्मादीनामपि सम्बन्धमात्रविवक्षाया षष्ठ्येव। भीए जम्मजरमरणाण। अम्हेण देवाणुप्पियाण मिस्सभिक्ख दलयामो। अवसेसे काए समणाण णिग्गथाण निसट्टे। तयाण मम एयमट्ठ निवेदिज्जासि।

शेष इति—नाम्न इत्यस्य प्रत्यय इत्यस्य चानुवृत्ति। अनुक्ते कर्मादौ द्वितीयादेर्निधानान्नामार्थे च प्रथमाविधानादुक्तादन्यश्च शेष इत्याह कारकनामार्थव्यतिरिक्त इति। तस्स णमित्यादेस्तस्य श्रेणिकस्य राज्ञी धारिणी नाम देवी अभूदित्यर्थ। नाया० ।१।९। अत्र दम्पतीभावरूपसम्बन्धे षष्ठी। तथा च तच्छ्रेणिकनामराजनिरूपितदम्पतीभाववद्धारणी नाम राज्ञी तत्कर्तृक भूतकालिक भवनमिति बोध। न च श्रेणिकनिरूपितदम्पतीभावबोधिका षष्ठी राज्ञीशब्दादेव कुतो न जायत इति वाच्यम्, भेदे सति विशेषणत्वस्य राजनि विद्यमानस्य सम्बन्ध विनाऽनुपपत्ते। सम्बन्धस्य तत्रैवोद्भूतत्वात्। तदाह हरिरपि "द्विष्ठोप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते। तत्राभिधीयमानश्च प्रधानेऽप्युपयुज्यते"॥ अतिरिच्यते=उद्भूततया प्रकाशते। नाप्युभयत्र षष्ठी। विशेषणाभिधीयमानस्यैव विशेष्येप्युपयोगात्। अतएव "द्विष्ठो यद्यपि सम्बन्ध षष्ठ्युत्पत्तिस्तु भेदकादिति हरिवचन सगच्छते। तथा च विशेषणवाचकाच्छ्रेणिकशब्दादेव षष्ठी नतु विशेष्यवाचकाद्राज्ञीशब्दात्। अतएव प्रकृत्यर्थप्रत्ययार्थयो प्रत्ययार्थस्यैव प्राधान्यमिति न्यायोऽपि सगच्छते। एवमन्यत्रापि बोध्यम्। कर्मादीनामिति—यथा विशेषाविवक्षाया रूपवान् इति प्रयुज्यते, विशेषविवक्षायाञ्च नील पीत इत्यादि। तथेदमपि न्यायसिद्ध वचनम्। सम्बन्धसामान्यविवक्षाया षष्ठी, क्रियाकारकभावसम्बन्धविवक्षाया द्वितीयादि। भीए इत्यादेर्जन्मजरामरणाना भीत इत्यर्थ। नाया १—२५। अत्र सम्बन्धसामान्यविवक्षायामनेन षष्ठी। तथा च जन्मजरामरणसम्बन्धनिष्ठज्ञानाश्रय इति बोध। इयञ्च विवक्षा न स्वतन्त्रा किन्तु प्रयोगवशात्, तेन न सर्वत्र विवक्षया षष्ठ्येव प्रयोक्तव्या। अम्हेणमित्यादि—वय देवानुप्रियाणा शिष्यभिक्षा दद्महे। नाया। १—२५। अत्र सम्बन्धसामान्ये षष्ठी, तेन देवानुप्रियसम्बन्धिशिष्यभिक्षाकर्मकमस्मत्कर्तृक दानमिति। सम्प्रदानत्वविवक्षायान्तु चतुर्थ्येव। अवसेसे इत्यादि—अवशेष काय श्रमणाना निर्ग्रन्थाना निसृष्ट। नाया ।१।२८। मए इतिशेष। अत्र सम्बन्धसामान्ये षष्ठी, तेन श्रमणाभिन्ननिर्ग्रन्थसम्बन्ध्यवशेषाभिन्नकायकर्मक समर्पणमिति बोध। सम-

## तारे वा ।१।२।१६॥

तारप्रत्ययोगेऽनुक्तकर्तृकर्मणोर्वा षष्ठी स्यात् । अप्पा कत्ता विकत्ता य । दुहाण य सुहाण य । पुव्वरयं पुव्वकिलियं अणुस्सरित्ता । पणीयं आहारं आहारित्ता ।

तार इति—षष्ठी कर्तृकर्मणो अनुक्ते नाम प्रत्यय इति पञ्चानामनुवृत्तिः । अप्पा कत्तेति—आत्मा कर्त्ता विकर्त्ता च दुःखानाञ्च सुखानाञ्च । उत्त० २०।३७। अत्र कर्तृविहिततारप्रत्यययोगे कर्मणि षष्ठी । पुव्वरयं इति—पूर्वरतं पूर्वक्रीडितं अनुस्मर्ता । उत्त० १६। अत्र तत्प्रत्यययोगे षष्ठी न । प्राप्तविभाषेयम् । कृदन्तेन कर्तृकर्मणोरितिसूत्रेण प्राप्तैव षष्ठी विकल्प्यतेऽनेन । पणीयमिति—प्रणीतमाहारमाहर्ता । अत्रापि च कर्तृविहिततारयोगे न सा ।

## अतुलोवमाभ्यां सादृश्यार्थैस्तृतीया च ।१।२।४८॥

तुलोपमाभिन्नसादृश्यार्थकशब्दयोगे तृतीया स्याच्चात्, षष्ठ्यपि । अम्मापिईहिं समाणो । अम्मापिऊण समाणो । तुल्लो । समो ।

अतुलोवमाभ्यामिति—नाम्न षष्ठी प्रत्यय इतिपदत्रयस्यानुवृत्तिः । सादृश्यम् अर्थो येषां ते सादृश्यार्थास्तैः सादृश्यार्थैरित्यर्थः । पक्षे सम्बन्धसामान्ये षष्ठी भवति । तुलोवमाशब्दयोर्योगे तु षष्ठ्येव यथा जिणस्स तुला उवमा वा नत्थि । न च सादृश्यविशिष्टार्थयोग एव भवति तृतीया इत्येव कल्प्यतां तेनाप्यत्र वारणसम्भव इति वाच्यम्, तथा सति अम्मापिईहिं सारिस्सं पुत्ते इति न स्यादतस्तथा कल्पनासम्भवात् । वस्तुतः सादृश्यविशिष्टार्थयोग एव तृतीया । केवलसादृश्यार्थकयोगे तु षष्ठ्येव भवति । अम्मापिऊण सारिस्सं पुत्ते इत्येवानुभवात् । तथा च तथाप्रयोगानभिधानमप्यकल्प्यं भवतीत्यपरमनुकूलम् । षष्ठ्या सह तृतीयालाभार्थमेवास्य सूत्रस्य कृतत्वेन षष्ठी प्रकरणे पठितम् ।

---

## अथ सप्तमी

## आधारोऽधिकरणम् ।१।१।५०॥

कर्तृकर्मद्वारा क्रियाया आधारोऽधिकरणसंज्ञः स्यात् ।

आधार इति—कारके इत्यनुवर्तते। कस्याधार इत्याकाङ्क्षायां कारकाधिकारात् क्रियाया इति लभ्यते। तत्राधिकरणसंज्ञा हि न साक्षात् क्रियाया आधारस्य सम्भवति। फलस्य व्यापारस्य च क्रियात्वेन साक्षात् फलाश्रयस्य कर्मसंज्ञाया व्यापाराश्रयस्य च कर्तृसंज्ञाया एवावश्यभावेनाधिकरणसंज्ञाया असम्भवात्। पर्यायतायाश्चानुभवविरोधकवलिततया स्वीकर्तुमशक्यत्वादत आह—कर्तृकर्मद्वारेति। तथा च फलतावच्छेदकसम्बन्धेन फलाश्रय कर्मसंज्ञक। समवायेन व्यापाराश्रय कर्तृसंज्ञक इत्येव साक्षात् क्रियाश्रयस्य कर्तृकर्मसंज्ञे इत्यस्यार्थ। कर्तृकर्मद्वारा क्रियाश्रय इति। स्वाश्रयत्वसम्बन्धेन क्रियाश्रय इति तदर्थ। यथा गेहे देवदत्तो थाल्यां तण्डुलं पचतीत्यादौ। अत्र हि विक्लित्त्यनुकूलव्यापार पचेरर्थ। तत्र विक्लित्ति फलम्। अधिश्रयणादिको व्यापार। फलतावच्छेदकसमवायसम्बन्धेन विक्लित्त्याश्रयस्तण्डुल। स्वाश्रयाश्रयत्वसम्बन्धेन तदाश्रय स्थाली, यत स्व विक्लित्तिस्तदाश्रयस्तण्डुलस्तदाश्रयत्वं स्थाल्यां वर्तते। तथा च स्वाश्रयाश्रयत्वरूपसम्बन्धसत्त्वे तेन सम्बन्धेन स्वपदार्थविक्लित्तिसत्त्वे बाधकाभावः। एवञ्च तादृशसम्बन्धेन विक्लित्तिरूपक्रियाया आधारभूताया स्थाल्या अधिकरणसंज्ञा। एवं समवायसम्बन्धेनाधिश्रयणाद्याश्रयो देवदत्त स्वाश्रयाश्रयत्वसम्बन्धेन तदाश्रयो गृहम्। यत स्वमधिश्रयणादि तदाश्रयो देवदत्तस्तदाश्रयत्वं गृहे वर्तते। तथा च स्वाश्रयाश्रयत्वरूपसम्बन्धसत्त्वे तेन सम्बन्धेन स्वपदार्थाधिश्रयणादिसत्त्वे बाधकाभाव। एवञ्च तादृशसम्बन्धेनाधिश्रयणादिरूपव्यापाराधारस्य गृहस्याधिकरणसंज्ञा। तथा च कर्तृद्वारा कर्त्राधारस्य कर्मद्वारा कर्माधारस्याधिकरणसंज्ञेति सिद्धम्। अतएवोक्तं"कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम्। उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥" इति। उपकुर्वत्=क्रियासहकारि। निरधिकरणयो कर्तृकर्मणो क्रियासिद्ध्यनुपार्जकत्वादधिकरणस्य क्रियासिद्धिसहकारित्वम्। न च गगनमस्ति, गगनं जानातीत्यादौ निरधिकरणस्य कर्तु कर्मणश्च क्रियासिध्युपयोगित्वाभेद युक्तमिति वाच्यम्, कालाधिकरणस्य गगनादे सत्तादिक्रियाकर्तृत्वकर्मत्वयोगित्वात्। इदानीं गगनमस्ति, इदानीं गगनं जानातीतिप्रत्ययात्। नचैवं भूतले घट इत्यादावधिकरणसंज्ञा न स्यात्। अत्र क्रियाया एवाभावेन घटरूपकर्तृद्वारा क्रियाश्रयत्वस्य भूतलेऽसम्भवादितिवाच्यम्, क्रियाश्रयस्यैव कर्तृत्वेन तत्सिद्ध्यर्थं कस्यचित् क्रियापदस्याध्याहारावश्यकत्वेन तत्सम्भवात्। अतएवोक्तमाकरे। यत्र काचित्क्रिया नास्ति तत्रापि अस्ति भवति विद्यतीना सत्तेति। एवञ्चात्र अस्तीति क्रियाया अध्याहारावश्यकत्वेनाधिकरणसंज्ञाया न काप्यनुपपत्ति।

एवमेव सर्वप्राप्त्याहारेण विभक्ति साध्या। तत्र नार्थाध्याहारः किन्तु शब्दाध्याहार एव। शाब्दबुद्धावाकाङ्क्षादिमत्पदज्ञानस्योपस्थितस्य कारणत्वेन केवलमर्थज्ञानेन शाब्दा सम्भवात्। अत एव घटो कर्मत्वं आनयनं कृती। इत्यादौ न शाब्दबोधो न वा एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वेन घटादिपदज्ञानार्थीनो-पस्थितताकारस्य घटपदाच्छाब्दबोध। आधारस्त्रिविधः। औपश्लेषिको वैषयिको-ऽभिव्यापकश्चेति। तत्राद्य एकदेशावच्छेदेनाधेयसम्बन्धाश्रयः। यथा—भद्दासणंमि निसीयइ। थालीए पयइत्यादौ। अत्राधिकरणे एकदेशावच्छेदेनैवाधेयसम्बन्धा-सत्त्वयौपश्लेषिकत्वम्। वैषयिकश्चानुयोगितास्यविषयताश्रयः। विषयतासम्बन्धे-नाधेयाश्रय इत्यर्थः। यथा—मोक्खे इच्छा अत्थीत्यादौ। अत्र विषयतासम्बन्धे-नेच्छाश्रयो मोक्षः। सर्वावयवावच्छेदेनाधेयसम्बन्धाश्रयोऽभिव्यापकः। यथा—लोगागासंमि धम्मत्थिकायो अत्थि इत्यादौ। अत्र लोकाकाशस्य सर्वा-वयवावच्छेदेन धर्मास्तिकायसम्बन्धसत्त्वेनाभिव्यापकत्वम्। ननु लोकाकाशस्य नित्यत्वेन सावयवत्वासम्भवेन सर्वावयवावच्छेदेनाधेयसम्बन्धाश्रयत्वासम्भवादभिव्यापकत्वं न स्यादिति चेन्न, तत्रापि घटाकाशादिरूपतत्तदवयवावच्छेदेना-धेयसम्बन्धाश्रयसत्त्वात्।

## अधिकरणे सप्तमी ।१।२।२०॥

अनुक्तेऽधिकरणे सप्तमी स्यात्। भद्दासणंमि निसीयइ। थालीए पयइ। मोक्खे इच्छा अत्थि। लोगागासंमि धम्मत्थिकाए।

अधिकरण इति—अनुक्ते इत्यस्य प्रत्यय इत्यस्य नाम्न इत्यस्य चानुवृत्तिः। अनुक्ते इत्यनुवर्तनाद् वीरो पुरुसो जंसिं गामे वीरपुरुसो गामो इत्यत्र न सप्तमी अधिकरणस्यानुक्तत्वाभावात्, समासेनोक्तत्वात्। कर्तृद्वारा क्रियाया अधिकरणस्योदाहरणमाह। भद्दासणमीति—अत्राध्याहृत इत्यौद्वारोपवेशन-रूपक्रियाया अधिकरणे भद्दासणे सप्तमी। औपश्लेषिकाधिकरणमुदाहृत्य वैषयिकाधिकरणमुदाहरति मोक्खे इति। मोक्षविषयकेच्छाकर्तृका सत्तेतिबोधः। अभिव्यापकाधिकरणमुदाहरति लोगागासंमि इति। लोकाकाशव्यापकाधि-करणकधर्मास्तिकायसत्तेत्यर्थः। तिलेषु तैलमित्याद्यप्युदाहरणमभिव्यापकस्य बोध्यम्। 'असिजमे नियत्ति च' इत्युक्त०।३।१।२। वैषयिकाधारस्योदाहरणम्।

## नामार्थाधिकरणयोर्दूरान्तिकार्थेभ्यो द्वितीया-तृतीयापञ्चम्य ।१।२।५३॥

दूरान्तिकार्थकेभ्योऽधिकरणे नामार्थे च द्वितीया तृतीया पञ्चमी सप्तम्यः स्युः। गामस्स दूर दूरेण दूराओ दूरे। अतिअ अतिएण अतिआओ अतिए।

नामार्थेति—सप्तमी नाम्न प्रत्यय इति पदत्रयमनुवर्तते। असत्त्ववचनेभ्य एवैभ्यो भवति द्वितीयादि, न तु सत्त्ववचनेभ्य । अत एव दूरोगामो इत्यादौ न। एवञ्च सत्त्वविशेषणकभिन्नेभ्य एव भवतीति सिद्धम्।

## इत्प्रकृतेस्तान्तस्य कर्मणि ।१।२।२१॥

इत्प्रत्ययप्रकृतिभूतभूतार्थकतान्तस्य कर्मणि सप्तमी स्यात्। अधीई अज्झयणे। तान्तस्येति किम्?। कितपुव्वी दाण।

इदिति—सप्तमी अनुक्ते नाम्न प्रत्यय इति पदचतुष्टयमनुवर्तते। अधिपूर्वकेधातो कर्मणोऽविवक्षया भावे तप्रत्यये पश्चात् कर्मणो विवक्षाया द्वितीयाया प्राप्तौ सप्तमी । इत्प्रकृतेस्तान्तस्येत्युपादानफलमाह कितपुव्वीति। अत्र तान्तस्येत प्रकृतित्वाभावान्न सप्तमी। कितपुव्वादित्वादित्प्रत्यय ।

## सप्तमी क्रियालक्षणक्रियाश्रयात् ।१।२।५०॥

क्रियाया लक्षणीभूता या क्रिया तदाश्रयवाचकात् सप्तमी स्यात्। उट्ठियम्मि सूरे सयणिज्जाओ उट्ठेति। पत्ते णाणे मुत्तो।

सप्तमीति—नाम्न इत्यस्य प्रत्यय इत्यस्य चानुवृत्ति। क्रियाया लक्षण क्रियालक्षण तच क्रिया क्रियालक्षणक्रिया तस्या आश्रय क्रियालक्षणक्रियाश्रयस्तस्मात् क्रियालक्षणक्रियाश्रयात्। अत एवाह-क्रियाया लक्षणीभूतेत्यादि। ज्ञानजनकज्ञानविषयत्व लक्षणत्वम्। यथा मूलोक्तोदाहरणे उत्थानज्ञानजनक यद्ज्ञान तदुत्थानज्ञान तद्विषय उत्थान तदाश्रय सूर्यस्तद्वाचकात्सूरशब्दात् सप्तमी, तत्सामानाधिकरण्यादुट्ठियशब्दादपि। न चैकक्रियाया लक्ष्यत्वलक्षणत्वासम्भवेनेदमुदाहरण न युक्तमिति वाच्यम्, सूर्यनिष्ठोत्थानक्रियाया साजात्यस्य बालनिष्ठोत्थानक्रियाया सत्त्वेऽपि ऐक्याभावात्। यस्मिन् काले यद्धि लक्षण तस्मिन् काले तन्न लक्ष्यमित्येवानुभूत सर्वत्र, नतु तत्सजातीयमपि न लक्ष्यमिति कस्यचिदनुभवसिद्धम्। कर्त्रादिभेदेन क्रियाया न भेद इति तु वचनमात्रम्। न च ज कम्म देवदत्तो करेइ त कम्म भयदत्तो करेईति प्रतीतिर्न स्यादिति वाच्यम्, साजात्यावलम्बनेनैव तत्प्रतीते । एकावलम्बनेन

एवमेव सर्वत्राध्याहारेण विभक्ति साध्या। तत्र नार्थाध्याहार किन्तु शब्दाध्याहार एव। शाब्दबुद्धावाकाङ्क्षादिमत्पदजन्योपस्थितस्य कारणत्वेन केवलमर्थज्ञानेन शाब्दा सम्भवात्। अत एव घटो कर्मत्त आनयन किती। इत्यादौ न शाब्द बोधो न वा एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वेन घटादिपदज्ञानाधीनो परिथिताकाङ्क्षस्य घटपदाच्छाब्दबोध। आधारस्त्रिविध। औपश्लेषिको वैषयिकोऽभिव्यापकश्चेति। तत्राद्य एकदेशावच्छेदेनाधेयसम्बन्धाश्रय। यथा—भद्दासणमि निसीयइ। थालीए पयइत्यादौ। अत्राधिकरणे एकदेशावच्छेदेनैवाधेयसम्बन्धसत्त्वयौपश्लेषिकत्वम्। वैषयिकत्वानुयोगितारूयविषयताश्रय। विषयतासम्बन्धेनाधेयाश्रय इत्यर्थ। यथा—मोक्खे इच्छा अत्थीत्यादौ। अत्र विषयतासम्बन्धेनेच्छाश्रयो मोक्ष। सर्वावयवावच्छेदेनाधेयसम्बन्धाश्रयोऽभिव्यापक। यथा—लोगागासमि धम्मत्थिकायो अत्थि इत्यादौ। अत्र लोकाकाशस्य सर्वावयवावच्छेदेन धर्मास्तिकायसम्बन्धसत्त्वेनाभिव्यापकत्वम्। ननु लोकाकाशस्य नित्यत्वेन सावयवत्वासम्भवेन सर्वावयवावच्छेदेनाधेयसम्बन्धाश्रयत्वासम्भवादभिव्यापकत्व न स्यादिति चेन्न, तत्रापि घटाकाशादिरूपतत्तदवयवावच्छेदेनाधेयसम्बन्धाश्रयसत्त्वात्।

## अधिकरणे सप्तमी ।१।२।२०॥

अनुक्तेऽधिकरणे सप्तमी स्यात्। भद्दासणमि निसीयइ। थालीए पयइ। मोक्खे इच्छा अत्थि। लोगागासमि धम्मत्थिकाए।

अधिकरण इति—अनुक्ते इत्यस्य प्रत्यय इत्यस्य नाम्न इत्यस्य चानुवृत्ति। अनुक्ते इत्यनुवर्तनाद् वीरो पुरुसो जंसि गामे वीरपुरुसो गामो इत्यत्र न सप्तमी अधिकरणस्यानुक्तत्वाभावात् समासेनोक्तत्वात्। कर्तृद्वारा क्रियाया अधिकरणस्योदाहरणमाह। भद्दासणमीति—अत्राध्याहृत इत्यीद्वारोपवेशन रूपक्रियाया अधिकरणे भद्दासणे सप्तमी। औपश्लेषिकाधिकरणमुदाहृत्य वैषयिकाधिकरणमुदाहरति मोक्खे इति। मोक्षविषयकेच्छाकर्तृका सत्तेतिबोध। अभिव्यापकाधिकरणमुदाहरति लोगागासमि इति। लोकाकाशव्यापकाधिकरणकधर्मास्तिकायसत्तेत्यर्थ। तिलेषु तैलमित्याद्यप्युदाहरणमभिव्यापकस्य बोध्यम्। 'असिजमे नियत्तिं च' इत्युत्त० ।३।१।२। वैषयिकाधारस्योदाहरणम्।

## नामार्थाधिकरणयोर्दूरान्तिकार्थेभ्यो द्वितीया-तृतीयापञ्चम्य ।१।२।५३॥

दूरान्तिकार्थकेभ्योऽधिकरणे नामार्थे च द्वितीया तृतीया पञ्चमी सप्तम्यः सुः । गामस्स दूर दूरेण दूराओ दूरे । अतिअं अतिएण अतिआओ अतिए ।

नामार्थेति—सप्तमी नाम्न प्रत्यय इति पदत्रयमनुवर्तते । असत्त्ववचनेभ्य एवैभ्यो भवति द्वितीयादि, न तु सत्त्ववचनेभ्य । अत एव दूरो गामो इत्यादौ न । एवञ्च सत्त्वविशेषणकभिन्नेभ्य एव भवतीति सिद्धम् ।

## इत्प्रकृतेस्तान्तस्य कर्मणि ।१।२।२१॥

इत्प्रत्ययप्रकृतिभूतभूतार्थकतान्तस्य कर्मणि सप्तमी स्यात् । अधीई अज्झयणे । तान्तस्येति किम् ? । कितपुव्वी दाण ।

इदिति—सप्तमी अनुक्ते नाम्न प्रत्यय इति पदचतुष्टयमनुवर्तते । अधिपूर्वेङ्धातो कर्मणोऽविवक्षया भावे तप्रत्यये पश्चात् कर्मणो विवक्षाया द्वितीयाया प्राप्तौ सप्तमी । इत्प्रकृतेस्तान्तस्येत्युपादानफलमाह कितपुव्वीति । अत्र तान्तस्येत प्रकृतित्वाभावान्न सप्तमी । कितपुव्वादित्वादित्प्रत्यय ।

## सप्तमी क्रियालक्षणक्रियाश्रयात् ।१।२।५०॥

क्रियाया लक्षणीभूता या क्रिया तदाश्रयवाचकात् सप्तमी स्यात् । उद्वियम्मि सूरे सयणिज्जाओ उट्ठेति । पचे णाणे भुचो ।

सप्तमीति—नाम्न इत्यस्य प्रत्यय इत्यस्य चानुवृत्ति । क्रियाया लक्षण क्रियालक्षण तच्च क्रिया क्रियालक्षणक्रिया तस्या आश्रय क्रियालक्षणक्रियाश्रयस्तस्मात् क्रियालक्षणक्रियाश्रयात् । अत एवाह–क्रियाया लक्षणीभूतेत्यादि । ज्ञानजनकज्ञानविषयत्व लक्षणत्वम् । यथा मूलोक्तोदाहरणे उत्थानज्ञानजनक यद्ज्ञान तदुत्थानज्ञान तद्विषय उत्थान तदाश्रय सूर्यस्तद्वाचकात्सूरशब्दात् सप्तमी, तत्सामानाधिकरण्यादुद्वियशब्दादपि । न चैकक्रियाया लक्ष्यत्वलक्षणत्वासम्भवेनेदमुदाहरण न युक्तमिति वाच्यम्, सूर्यनिष्ठोत्थानक्रियाया साजात्यस्य बालनिष्ठोत्थानक्रियाया सत्त्वेऽपि ऐक्याभावात् । यस्मिन् काले यद्धि लक्षण तस्मिन् काले तत्र लक्ष्यमित्येवानुभूत सर्वत्र, नतु तत्सजातीयमपि न लक्ष्यमिति कस्यचिदनुभवसिद्धम् । कर्त्रादिभेदेन क्रियाया न भेद इति तु वचनमात्रम् । न च ज कम्म देवदत्तो करेइ त कम्म भवदत्तो करेईति प्रतीतिर्न स्यादिति वाच्यम्, साजात्यावलम्बनेनैव तत्प्रतीते । एकावलम्बनेन

स्वप्रमाणमेव । निर्ज्ञानकाला हि नियाऽनिर्ज्ञातकालायाः क्रियायाः कालपरिच्छेद-
कत्वाल्लक्षणम् । लक्षणत्व क्रियायाः साक्षात् । तदाश्रयस्य च तद्द्वारा । उदिते
सूर्ये–शयनीयाद्‌उत्तिष्ठति । उदयनसूर्यज्ञाप्यशयनाधिकोत्था कालकर्तृकमिति
वाक्यार्थबोध । सूर्योत्थाज्ञाप्यतान्नोत्थामिति तु भावार्थ । लक्ष्यलक्षण-
भाव सप्तम्यर्थ । स एव ज्ञाप्यज्ञापकभाव इत्यभिधीयते । तथा च लक्ष्य
लक्षणभावरूपसम्बन्धे पञ्चमा प्राप्तायामिदं सूत्रम् । ज्ञाप्यज्ञापकभावसम्बन्धेन
तादृशसूर्यस्य कालोत्थानेऽन्वय । लक्ष्यञ्च ज्ञानजन्यज्ञानविषयत्वम् । यथा
तत्रैव सूर्योत्थानज्ञानजन्यकालोत्थानज्ञानविषयत्व कालोत्थाने । इयमेव सप्तमी
सतिसप्तमीति भण्यते ।

## षष्ठी चानादरो ।१।२।५१॥

क्रियाया लक्षणीभूता या क्रिया तदाश्रयादनादरे षष्ठी चात्सप्तमी ।
रुदन्ते पुत्ते रुदन्तस्स वा पुत्तस्स पव्वजिओ । पस्सओ हरो ।

षष्ठी चेति—सप्तमी नाम्न प्रत्यय क्रियालक्षणक्रियाश्रयात् इति पद-
चतुष्टयमनुवर्तते । केवलक्रियाया लक्षणक्रियाश्रयात्सप्तमी । अनादरविशिष्ट
क्रियाया लक्षणक्रियाश्रयात्तु षष्ठ्यपि । रुदति पुत्रे रुदतो वा पुत्रस्य प्रव्रजित ।
इति छा० । रोदनकर्तृपुत्रज्ञाप्यानादरविशिष्टप्रव्रजनाश्रय इति शाब्दबोध ।
रोदन लक्षणमनादरविशिष्टप्रव्रजन लक्ष्यम् । रोदनाश्रयत्वेन पुत्रोऽपि लक्षणम् ।
एवमेव पश्यतो हर इत्यत्रापि । पश्यन्तमनादृत्य हरतीत्यर्थ ।

## साम्यादियोगे ।१।२।५२॥

साम्यादिशब्दयोगे सप्तमी पक्षे षष्ठी भवति । धणम्मि धणस्स वा
सामी । गामम्मि गामस्स वा अहिवई । धम्मम्मि धम्मस्स वा सक्खी ।
सजमम्मि सजमस्स वा आजुत्तो कुसलो वा मुणी ।

साम्यादीति—षष्ठी सप्तमी नाम्न प्रत्यय इति पदचतुष्टयमनुवर्तते ।
सामान्यसूत्रेण षष्ठीसिद्धौ पक्षे सप्तम्यर्थमिद सूत्रम् । धने धनस्य वा स्वामी ।
ग्रामे ग्रामस्य वाऽधिपति । धर्मे धर्मस्य वा साक्षी । सयमे सयमस्य वा
आयुक्त कुशलो वा मुनि इति क्रमेण छा० । अयञ्चाकृतिगण ।

इति सप्तमी ।

---

# अथ समासप्रकरणम् ।

---

## पदविधि॰ सामर्थ्ये ।१।१।५१।।

पदसम्बन्धि कार्यं सामर्थ्यनिमित्तक बोध्यम् ।

पदविधिरिति—विधीयत इति विधि । कर्मणि कि । अत एव कर्मण उक्तत्वेन कारकषष्ठ्या अभावेन सम्बन्धसामान्ये षष्ठीत्याह–पदविधिरिति । पदसम्बन्धी विधिस्तु कृत्तद्धितसमासप्रेरणानामधातुरूप । सामर्थ्य इति । सामर्थ्यं द्विविधम् । व्यपेक्षा एकार्थीभावश्च । तत्र स्वार्थपर्यवसायिना–स्वार्थमात्र-पर्याप्ताना पदानामाकाङ्क्षावशाद्य परस्परसम्बन्ध सा व्यपेक्षा । सा च रन्नो पुरिसो इत्यादिवाक्ये । अत्र राजादिपदाद्राजादेरुपस्थितौ परस्पर समन्वये सति राजसम्बन्धवानिति बोधो जायते । एकार्थीभावश्च विशिष्टैकार्थोपस्थिति-जनकत्वरूप । स च रायपुरिसो इत्यादिसमासादावेव । अत्र रायपुरिस-समुदायस्य राजसम्बन्धवत्पुरुषरूपविशिष्टैकार्थोपस्थितिजनकत्वेनैकार्थीभाव । ननु राय-स्स पुरिस-उ इत्याद्यलौकिकवाक्ये समासादयो भवन्ति। तत्र चैकार्थी-भावरूपसामर्थ्याभावेन सामर्थ्यनिमित्तक समासादिरित्यसङ्गतमिति चेन्न, तत्तद्वाक्यैर्निष्पन्नसमासादिगतसामर्थ्यस्य तत्तद्वाक्येष्वारोपेण सामर्थ्यसम्भवात्। आरोपश्च बाधकालिकेच्छाजन्यज्ञानम् । यथाऽत्रैवालौकिकवाक्य एकार्थी-भावस्य बाधेऽपि अलौकिकवाक्य एकार्थीभावज्ञान जायतामितीच्छयैकार्थी-भावज्ञानम् । कुम्भस्स समीव पडस्सेति विग्रहे नोपकुम्भमिति प्रयोगो भवति । सुप् सुपेति ज्ञापकात् क्वचिदसामर्थ्येऽपि समास । गगापुलिणवालु-आसालिसए । गगापुलिनवालुकासदृशके । कप्प० २।३।।

## समास ।१।१।५२।।

अधिकारोऽयम् ।

समास इति—अनेन न समासो विधीयते तत्तत्सूत्रवैयर्थ्यापत्ते । नापि नियम्यते समास एवेति इतरकार्यवैयर्थ्यापत्ते ।अत एवाह–अधिकारोऽयमिति ।

# अथ अव्ययीभावसमासः।

## अव्ययीभावः ।१।१।५४॥

अधिकारोऽयम्।

अव्ययीभाव इति—अत्रत्यविचार पूर्ववद्बोध्य ।

## विभक्त्यर्थादिष्वव्ययम् ।१।१।५५॥

विभक्त्यर्थादिषु वर्त्तमानमव्यय सुबन्तेन समस्यते स च समासोऽव्ययीभावसंज्ञ स्यात्।

विभक्त्यर्थादिष्विति—सुपा समास अव्ययीभाव इति पदत्रयमनुवर्तते। आदिना समीप पश्चात् योग्यता वीप्सा यथार्थ युगपत् साकल्य अत्यय इत्यादे सग्रह । उदाहरण तु बहुशो मूल एवोक्तम्। सादृश्यादेस्तु सवीर। सचक्र। सतिण। अतिहिम। अभ्यन्तर।

## धातुनाम्नो ।२।४।४७॥

एनयोरवयवस्य सुपो लोप स्यात्।

धातुनाम्नोरिति—लोप इत्यस्य सुप इत्यस्य चानुवृत्ति ।

## अतोऽव्ययीभावात्सुप ।४।१।२८॥

अदन्तादव्ययीभावात्परस्य सुपो लोपो न स्यात्।

अत इति—लोप न इति पदद्वयमनुवर्तते। विशेषणेन तदन्तविधावदन्तादिति लभ्यते। अव्ययत्वात्प्राप्तस्य लोपस्य निषेधकोऽयम्। अत किम्। अहिनेमि। अहिगुरु। अत्रातो ग्रहणाभावेऽमे टमो विधायकेऽपि तदभावे हमादेश स्यात्। वा नेमीत्याद्यापत्तिर्दोष।

## प्रथमानिर्दिष्ट समासे पूर्वम् ।४।४।५८॥

समासशास्त्रे प्रथमानिर्दिष्ट पूर्व्वं प्रयोज्यम्। अहिनेमि लग्न चित्त।

प्रथमानिर्दिष्टमिति—प्रथमया निर्दिष्टमिति विग्रह । अहिनेमीति।

नेमिमीति विग्रहे विभक्त्यर्थाधिकरणार्थकोऽहिशब्दो नेमिशब्देन सह समस्यते । नेमि इ अहि इति विग्रहे समासो भवति। समासावयवसुपो लोपे प्रथमाविभक्त्या निर्दिष्टाहिशब्दस्य पूर्वप्रयोगे अहिनेमि इति स्थिते पुन समुदायान्नामसञ्ज्ञायाम-व्ययीभावस्याव्ययत्वेन विधीयमानस्य सुपो लोपे अहिनेमि । एव सर्वत्र ।

## डमव्ययीभावादतः सुप. ।४।३।७३॥

अदन्तादव्ययीभावात्परस्य सुपो डमादेशः स्यात् । अज्झप्प ।

डमिति—अप्प + इ अहि इति विग्रहे समासे सुपो लुग्निषेधेऽनेन डमा-देशे डिति टिलोपे । अज्झप्प । तरहेभ्यश्चजझा इत्यनेनेकारस्य झकारे हका-रस्य जकार ।

## तृतीयासप्तम्योर्वा ।४।३।७४॥

अदन्तादव्ययीभावात्परयोस्तृतीयासप्तम्योर्डमादेशो वा स्यात्। अज्झप्प, अज्झप्पेण । अज्झप्प, अज्झप्पेहि । अज्झप्पमि । अज्झप्प, अज्झप्पेसु ।

तृतीयासप्तम्योरिति—अत अव्ययीभावात् डम् इति पदत्रयमनुवर्तते । पक्षे तृतीयादे श्रवणम् ।

## पञ्चम्या न ।४।३।७५॥

अदन्तादव्ययीभावात्परस्याः पचम्या डमादेशो न स्यात्। अज्झप्पाओ । अज्झप्पेहिंतो । उवगाम । अणुगामं । अणुरूव । पच्चत्थ । अणुगाम इति तु अनुगतो गामो इति विग्रहे बोध्यम् । अणु गङ्गं । नद्याः समीपमित्यर्थः । अणोः समीपार्थकस्याव्यये स्पष्टत्वात् ।

पञ्चम्येति—अत अव्ययीभावात् डम् इति पदत्रयमनुवर्तते । अज्झप्पाओ इति । अतएव सुपो लोपनिषेधमविधायादन्तात्परस्य सुपो डमादेश एव विधी-यताम् । आदेशविधानसामर्थ्यादेवाव्ययत्वेऽपि लोपवारणसम्भवादित्युक्तमसङ्ग-तम् । अत्र तृतीयादौ चादेशाभावे लोपापत्ते । न च विशेषत एव निषिध्यता-मिति वाच्यम् । तथा सति क्वचिदमादेश क्वचिल्लोप इति पर्यायतापत्ते । अत एव सर्वत्र निषेधति । उवगाम । ग्रामस्य समीपमित्यर्थ । अणुगाम । ग्रामस्य पश्चादित्यर्थ । अणुरूव । रूपस्य योग्यमित्यर्थ । पच्चत्थ । अर्थमर्थं प्रतीत्यर्थ ।

## सुप् सुपा ।१।१।५३॥

सुबन्त सुबन्तेन समस्यते । भूतपुव्वो । जायपुव्वो ।

सुबिति—समास इत्यनुवर्तते । ननु तत्तद्विशेषसूत्रेण तत्तत्समासस्य विधानसत्त्वेन किमर्थमिदं सूत्रमिति चेन्न, यत्र कस्यापि सूत्रस्य न प्राप्तिस्तत्र समासायास्यावश्यकत्वात् । यथा भूतपुव्वो इति । पुव्व भूतो इति विग्रह । इदञ्चोपलक्षण यत्र क्वचिदपि समासो न विहितस्तत्राप्यनेनैव बोध्य । अत एवास्यागतिकगतित्वम् । "प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्" इति परिभाषया सुबन्तेति लभ्यते । समासत्वावान्तरधर्मावच्छिन्नोऽनेन न विधीयते । अत एवाव्ययीभाव इत्याद्यधिकारात् पूर्वमेवैतदुक्तम् । नन्वेवमव्ययीभावतत्पुरुषकर्मधारयबहुव्रीहिद्वन्द्वभेदात् समास पञ्चविध इत्यसङ्गतमिति चेन्न । अव्ययीभावादिभेदात्पञ्चविधत्वेऽपि सुप् सुपेत्यनेन विहितसमासघटिततया षड्विधत्वे क्षत्यभावात् । अतएव च "दिट्ठपुव्व मए पुरा" । उत्त० १९।६।

## पडेरत एक्के समासे ।३।२।४७॥

पडिसम्बन्धिनोऽकारस्य दीर्घो वा स्यादेके परे समासे ।

पडेरिति—वा दीर्घ इति पदद्वयमनुवर्तते । समासे किम् । पडि एक्क एक्क इत्यत्र दीर्घो मा भूत् । अत इत्यभावे तु षष्ठ्या अन्त्यस्येति परिभाषयाऽन्त्यत्वादिकारस्यैव स्यात् ।

## एर्य पडेरेक्के ।४।२।४७॥

पडे परस्यैकशब्दस्यैकारस्य यकारो वा स्यात् ।

एरिति—उत्तरपदे वेत्यनुवर्तते । पडेरिति पञ्चम्यन्तम् ।

## यक्कस्य यक्कयोर्विपर्ययो वा ।४।४।६५॥

पडेः परस्य कृतयकारादेशैक्कशब्दस्य यकारककारयोर्विपर्ययो वा स्यात् । पाडिक्कय । पाडियक्क, पाडिएक्क, पडिएक्क । एक्क एक्क पडीति निग्रह ।

यक्कस्येति—सूत्रे कृतयकारस्यैवैक्कशब्दस्य ग्रहणेनाह कृतयकारेत्यादि । पडि एक्क इत्यत्रोपसर्गोऽकारस्य दीर्घे एकारस्य यकारे विनिमये पाडिक्कय, विनिमयाभावे पाडियक्क, यकाराभावे पाडिएक्क तदभावे पडिएक्क ।

---

## अव्ययीभावो नपुंसकम् ।१।१।२७॥

अव्ययीभावो नपुंसकसंज्ञः स्यात् ।

अव्ययीभाव इति—अव्ययीभावस्य नपुंसकसंज्ञाया प्रयोजनन्तु अहिच्छ इत्यादौ ह्रस्वविधानम् । सर्वत्र विभक्तौ डमादेशविधानेन प्रथमैकवचनेऽपि ह्रस्वेतरनपुंसककार्यसिद्धिः । अदन्तात्सुपो डमादेशविधानेन नपुंसकह्रस्वे सत्यदन्तत्वम् ।

## असादृश्ये जहार्थाः ।१।१।५६॥

सादृश्यभिन्नेऽर्थे एव जहार्थकाः शब्दाः सुबन्तेन समस्यन्ते । अहप्पहाणं । अहाकप्पं । अहासथणं । अहत्थं ।

असादृश्ये इति—सुपा समासः अव्ययीभाव इति पदत्रयमनुवर्त्तते । एतत्सूत्राभावे अहावीरं इति सादृश्येऽपि प्रयोगः स्यात् । तन्मा भूदिति सूत्रमिदम् । तथा च सादृश्यभिन्नेऽर्थे एवाहाजहाशब्दयोः समासो यथा स्यादित्येतन्नियमार्थमिदम् । समासस्य सामान्यसूत्रेणैव सिद्धेः । अतएवाह एवेति पहाणं अणइक्कम्म अहप्पहाणं । प्रधानमनतिक्रम्येत्यर्थः । एवमग्रेऽपि ।

## नाम्नो नपुंसके ह्रस्वः ।३।२।१॥

नपुंसके वर्तमानस्य नाम्नो ह्रस्वो भवति । अहिच्छं । अहिच्छा इति तु न समासः । किन्तु विग्रहवाक्यम् ।

नाम्न इति—अहिच्छाशब्दस्य नपुंसकसंज्ञाया ह्रस्वे डमादेशे टिलोपेऽहिच्छं । न समास इति । अतएव जहिच्छता इत्यादिदर्शनेनाव्ययीभावे स्त्रीत्वमपि भवतीति परास्तम् । अत्र समासस्यैवाभावात् । नियमार्थत्वादेव न सामान्यसूत्रेण सादृश्येऽर्थे जहाशब्दस्य समासः । अर्थग्रहणसत्त्वेऽपि नेवादिशब्देन समासः । लक्ष्यानुरोधाज्जहाऽहाशब्दयोरेव ग्रहणात् । एवं तहादिशब्देनापि न समासः ।

## मर्यादाभिविध्योरात् ।१।१।५७॥

एतयोरर्थयोरात् सुबन्तेन समस्यते वा । आमुत्ति संसारो । आबालं वीरभत्ती । आयाहिणपयाहिणं ।

मर्यादेति—अनुवृत्ति पूर्ववत् । आमुत्ति ससारो आमुक्ते ससार । मुक्तिपर्यन्त ससार इत्यर्थ । मर्यादोदाहरणमिदम् । आबाल वीरभत्ती इति त्वभिविधेरुदाहरणम् । बालमभिव्याप्य वीरभक्तिरित्यर्थ । वाग्रहणाद्वाक्यमपि । तेन विना मर्यादा । तेन सहाभिविधि ।

## जावावजावतोऽवधारणे च ।१।१।५८॥

जाव आव जावत् इत्येते शब्दा मर्यादाभिविध्योरवधारणे च सुबन्तेन समस्यन्ते वा । जावमुत्ति ससारो । आवकहिय जीवन । आवबाल ईसरभत्ती । एव जावयोगेऽपि । अवधारणे जावजीव । जावज्जीव सरीरं ।

जावावेति—मर्यादाभिविध्यो सुपा समास अव्ययीभाव इति पदचतुष्टयमनुवर्तते । मर्यादाभिविध्योरर्थयोर्जावावयोगे द्वितीयाविधानेन द्वितीयान्तेन समासो भवति । मर्यादार्थकजावशब्दस्य द्वितीयान्तमुत्तिशब्देन समासे समुदायादुत्पन्नविभक्तेर्लोपे जावमुत्ति, समासाभावे तु जाव मुत्ति । कहा एव कहिया । स्वार्थे कप्रत्यय । कहिय आवेति विग्रहेऽनेन समासे नपुसकत्वेन ह्रस्वे आवकहिय । समासाभावे तु द्वितीयैकवचने ह्रस्वे आव कहिय । आव कहा इत्यादि तु वाक्यमेव । चत्वारोऽर्था सन्ति जावजावच्छब्दयो साकल्यावधिमानावधारणानीति । साकल्ये जाव कज्ज ताव कड । अवधौ जाव गतव्व ताव चिट्ठ । माने जाव दत्त ताव भुत्त । अवधारणे जाव जीवो ताव देहो । मर्यादाभिविधिद्योतकजावजावच्छब्दयोगे तु द्वितीया भवति । अत्त समानार्थकत्वेऽपि तद्योगे निर्देशविधानेन द्वितीयैव भवति । तेउप्रभृते कायादीनामिति द्वित्वे जावज्जीवमिति ।

इत्यव्ययीभावसमास ।

---

# अथ तत्पुरुषसमासः ।

## तत्पुरुष ।१।१।५९॥

अधिकारोऽयं बहुव्रीहेः प्राक् ।

## द्वितीया गतादिभि ।१।१।६०॥

द्वितीयान्त गतादिभिः शब्दैः समस्यते, स तत्पुरुषः । गामगतो । गामगमी । अन्नबुभुक्खू । मुहुत्तसुख । अघकारो । मणियारो । सुवण्णयारो ।

द्वितीयेति—समास तत्पुरुष इति पदद्वयस्यानुवृत्ति । "प्रत्ययग्रहणे तदन्तस्य ग्रहणमि"ति परिभाषया द्वितीयान्तमिति लभ्यते । समर्थैरेव समासो भवति न तु गतादिप्रकृतिकसुबन्तैरत एवाह गतादिभिः शब्दैरिति । तेन कुम्भकारो इत्यादौ कुभ-म् कार इति विग्रहे समासो भवति । अत एव कृदन्ते पूर्वं समासान्न विभक्तेरुत्पत्ति कृदन्तात् । तथा च नामसज्ञात पूर्वमेव समासो भवति । यदि सर्वत्र समासात्पूर्वं विभक्तेरपेक्षा स्यात्तदा चम्पीति न स्यात् । यतो विभक्त्युत्पत्तये पूर्वं नामसज्ञाया लिङ्गसख्याद्यन्वयविवक्षाया तावन्मात्रे जातिवाचकत्वाभावेन नामत्वात्पूर्वमपि प्रवृत्तौ पश्चात्समासेऽपीकारो न स्यात् । गाम गतो, गाम गमी, अन्न बुभुक्खू, मुहुत्त सुख, अघ करेइ, मणि करेइ, सुवण्ण करेइ, इति विग्रह । इत्थ च यत्र कर्माद्युपपदे सति यस्मात्प्रत्ययो भवति तत्र तादृशकर्मादिभि सह तत्प्रकृतिप्रत्ययसमुदायस्यैव समासो भवति। निरुपपदात्प्रत्यये तु तादृशप्रकृतिप्रत्ययसमुदायाद्विभक्त्युत्पत्तरेव समासो भवति, इति फलितम् ।

## दयादीनां पत्तादावुत्तरपदे ।२।३।१३॥

दयादिशब्दाना ह्रस्वो वा पत्तादावुत्तरपदे । दयपत्तो । दयापत्तो । कलपत्तो, कलापत्तो ।

दयादीनामिति—वेत्यस्य ह्रस्व इत्यस्य चानुवृत्ति । दयपत्तो दय पत्तो इति विग्रह दया प्राप्त इत्यर्थ । कलपत्तो । कल पत्तो इति विग्रह । कला प्राप्त इत्यर्थ । आकृतिगणोऽयम् ।

## तृतीया पुव्वादिभिः ।१।१।६१।।

तृतीयान्तं पुव्वादिप्रकृतिकसुबन्तेन समस्यते। मासपुव्वो। णखभिन्नो। आयारनिपुणो। उदउल्ल। "सत्थवाहदूयसंधिवालसद्धिं सपरिवुडे"

तृतीयेति—सुपा समास तत्पुरुष इति पदत्रयमनुवर्तते। तृतीयान्त इति लाभस्तु पूर्ववत्। एवमग्रेऽपि बोध्यम्। मासपुव्वो। 'मासेण पुव्वो' इति विग्रह। मासेन पूर्व इत्यर्थ। णखभिन्नो। 'णखेहिं भिन्नो' इति विग्रह। नखैर्भिन्न इत्यर्थ। आयारनिपुणो। 'आयारेण निपुणो' इति विग्रहे समास। उदउल्ल। 'उदेण उल्ल' इति विग्रहे समास। उदकार्द्रमित्यर्थः। उद दक उग्ग इत्येते त्रयो जलवाचका। उल्लशब्द आर्द्रवाचक। सहार्थयोगे तृतीयाविधानेन संधिवालेन सद्धिं इति विग्रहे समासे सधिवालसद्धिं। णाया० १। प० १९॥ अत्र न समास किन्तु प्राकृतत्वाद्विभक्तिलोप इति कल्पना न सम्यक्।

## चतुर्थी हितादिभि ।१।१।६२।।

चतुर्थ्यन्त हितादिप्रकृतिकसुबन्तै समस्यते जीवहिय। ससारसुख। मोक्खत्थो। अट्ठादण्डो।

चतुर्थीति—सुपा समास तत्पुरुष इति पदत्रयमनुवर्त्तते। जीवहिय इत्यत्र जीवाए हिय इति विग्रहे समास। हितादियोगे चतुर्थी। सम्बन्ध-सामान्ये षष्ठ्या प्राप्ते सत्त्वेन हितादियोगे चतुर्थी विहिता। तथा च तस्या बाधिका सा। एवमग्रेऽपि। मोक्खत्थो। अत्थशब्देन सह नित्यसमासो भवति। मोक्खाए अथ इति विग्रहे समास। नित्यसमासस्य लक्षणन्तु अवि-ग्रहत्वम् अस्वपदविग्रहत्वम् वा स्व समास तत्सम्बन्धिपद स्वपद न स्वपदेन विग्रहो यस्य सोऽस्वपदविग्रहस्तत्त्वम्। अट्ठाए दण्डो इति विग्रहे समासे अट्ठादडो। खडादित्वाद्दीर्घ।

## पञ्चमी भयादिभि ।१।१।६३।।

पञ्चम्यन्त भयादिप्रकृतिकसुबन्तै समस्यते। पावभय। सप्पभीतो। रणत्ताण। सग्गपतितो। बधमुत्तो।

पञ्चमीति—सुपा समास तत्पुरुष इति पदत्रयमनुवर्त्तते। भयार्थक

प्राणार्थकयोगे पञ्चमीविधानेन पावाओ भय इति विग्रहे समास । एवमग्रेऽपि । सग्गपतितो इत्यादौ तु सामान्यसूत्रेणैव पञ्चमी । विभागस्य इष्टत्वात् ।

## जादिः प्पभितिना ।१।१।७३॥

जादिः पभितिशब्देन समस्यते । जप्पभिइ । तप्पभिइ ।

जादिरिति—समास तत्पुरुष इति पदद्वयमनुवर्त्तते । पभितियोगे पञ्चम्या विधानेन पञ्चम्यन्तेन जादिशब्देन समासो भवति । यत प्रभृति । तत प्रभृति इति क्रमेणार्थ ।

## पष्ठी ।१।१।६४॥

षष्ठ्यन्त सुबन्तेन समस्यते । धम्मपुत्तो । वीरआया । धम्ममूल । देवपूजगो ।

षष्ठीति—धम्मस्स पुत्तो इति विग्रहे समासे धम्मपुत्तो । देवस्स पूजगो इति विग्रहे समास । पूजक, जाजक, परिचारक, अज्झावक, उप्पादक इत्यादि-पूजकादिगण ।

## तादेर्दुगुत्तरपदे ।४।२।६२॥

तादीना दुगागमः स्यादुत्तरपदे । तदाहारो । तदुप्पाओ । जद्धण ।

तादेरिति—तस्स आहारो इति विग्रहे समासोत्तर दुगागमे तदाहारो । तदुप्पाओ । जद्धण । तादिपूर्वपदक एव प्राय समासो दृश्यते न तादुत्तरपदक ।

## अणतरे जतयोः ।४।१।६६॥

अणतरशब्दे परे जतशब्दयोर्यगागमः स्यात् । जयाणतर । तयाणतर ।

अणतर इति—यक् इत्यस्यानुवृत्ति । दुगागमस्यापवाद । आगमेऽकारा-रो नोच्चारणार्थ । अतएव दीर्घेण जयाणतर इत्यादि सिद्धयति ।

## पुव्वादयोऽवयविनैकवचनान्तेन ।१।१।६५॥

पुव्वादय शब्दा एकत्वविशिष्टावयविवाचकेन शब्देन समस्यन्ते । पुव्वकायो ।

पुव्वादय इति—सुपा समास तत्पुरुष इति त्रयाणा पदानामनुवृत्ति । पुव्वकायो । कायस्स पुव्वो इति विग्रहे समास । सामान्यसूत्रेण समासे प्रथमा-निर्दिष्टत्वात्कायशब्दस्यैव पूर्वनिपात स्यात्तथाच कायपुव्वो इति स्यादत इद

सूत्रम् । एवञ्च पुव्वादेरेव प्रथमानिर्दिष्टत्वेन पूर्वप्रयोगो भवति । एवमेव मज्झ-रत्त पुव्वरत्त इत्यादि ।

## सव्वादिभ्योऽहस्याण्ह ।४।४।२१॥

सव्वादिभ्य' परस्याहशब्दस्याण्हादेश स्यात् । मव्वण्हो । पुव्वण्हो । मज्झण्हो । सव्वादिभ्य इति किम् । उत्तमाह ।

मव्वादिभ्य इति—अनेकवर्णत्वात्सर्वादेश । सव्व च अह च सव्वण्हो । समासे अण्हादेशे दीर्घे सयुक्ते ह्रस्वे अहादिभ्य इति पुस्त्वे सव्वण्हो । अहस पुव्वो भागो पुव्वण्हो । अहस्स मज्झो भागो मज्झण्हो । सव्वादिभ्य इति ग्रहणाभावे को दोष इति चेत् उत्तमाह इति ।

## अधीणादिभि सत्तमी ।१।१।६६॥

सप्तम्यन्तमधीणादिशब्दै समस्यते । इदाधीणो । उदएचरो । खेचरो । इस्सरभत्ती ।

अधीणादिभिरिति—समास सुपा तत्पुरुष इति पदत्रयमनुवर्त्तते । इदाधीणो । इदे अधीणो इति विग्रहे समास । उदएचरो इत्यादौ सप्तम्या लोपस्तु न । अमेलोपनिषेधात् । उदए चरेईत्यादि विग्रह ।

## खडादीनामुत्तरपदे ।३।२।४५॥

खडादिशब्दाना स्वरस्य दीर्घो वा उत्तरपदे परे । खडामेदो, खड-मेदो । अट्ठादडो, अट्ठदडो । अप्पाबहुग, अप्पबहुग । अप्पाबहुत्त, अप्प-बहुत्त । आणापाण, आणपाण । पासामिओ, पासमिओ । अधारूव, अध रूव । आवीकम्म, आविकम्म ।

खडादीनामिति—दीर्घ वा इति पदद्वयमनुवर्त्तते । स्वरस्येत्युपतिष्ठते । खडामेदो । खडाए भेदो इति विग्रह । खडार्थं भेद इत्यर्थ । तथा भेदो येन खडो भवेदिति भाव । अट्ठाए दडो इति विग्रहे अट्ठादडो । अप्पो च बहवो च अप्पबहवो । तेसिं भावो अप्पाबहुग, अप्पबहुग, अप्पाबहुत्त, अप्पबहुत्त, अप्पाबहु । भावे क्तौ भवतो वा । अनेन दीर्घ । आणो च पाणो चेति समाहार आणापाण अरणुधातोर्भावेऽणि कृते आणो । श्वासोच्छ्वासौ इत्यर्थ ।

पाससस मिओ इति विग्रहे पासामिओ—पाशमृग पार्श्वमृग पार्श्वमितो वार्थ । आवि कम्म इति विग्रहे दीर्घे आवीकम्म । पादय इत्यनेन समास । उत्पन्त्यनु कूलव्यापारोऽर्थ ।

## दकस्य दः ।४।४।५२॥

दकशब्दस्य दादेश. स्यादुत्तरपदे परे । दाकलसो । दाकुभो ।

दकस्येति—उत्तरपदे इत्यनुवर्त्तते । अनेकवर्णत्वात् सर्वादेश । दकस्स कलसो इति विग्रहे समासेऽनेन दादेशे ग्वडादित्वाद्दीर्घे दाकलसो, दकलसो । दककलश इत्यर्थ । एवमन्येऽपि । दाकुभो इत्यस्य दककुम्भ इत्यर्थ ।

## मणादावस्य म ।२।३।६७॥

मणशब्दात्परस्यावशब्दस्योपधाया मकारो वा स्यात् । मणामो, मणावो ।

मणादिति—उपधाया वा इति पदद्वयमनुवर्त्तते । तेन नान्त्यस्य वकार । एवञ्चावघटकवकारस्य मकारे मणामो । आविज्जईति आवो कर्मण्यत्प्रत्यय । मणसा आवो इति विग्रहे तृतीयासमास । मन आप इत्यर्थ ।

## पित्रादीनामि. ।४।४।२३॥

पितुप्रभृतिशब्दानामुत्तरपदे परे इकारोऽन्तादेशो वा स्यात् । अम्मापिइ-समाणे । माउपिउसमाणे । भाइसमाणे, भाउसमाणे । भाइसय, भाउसय ।

पित्रादीनामिति—उत्तरपदे इत्यस्य वेत्यस्य चानुवृत्ति । अम्मा च पिता च अम्मापितरो अम्मापितूहिं समाण इति विग्रहे तृतीयासमासे विभक्तेर्लोपे अम्मापितु समाण इति स्थितेऽनेनोत्तरपदे परे उकारस्येकारे तकारस्य यकारे लोपे प्रकृतिभावे च अम्मापिइसमाणे । अम्बापितृसमान इत्यर्थ । भाउणा समानो इति विग्रहे भाइसमाणे । भ्रातृसमान इत्यर्थ । माउपिउसमाणे इत्यस्य मातापितृसमान इत्यर्थ । भाऊण सय इति विग्रहे समासेऽनेनेकार । अतएव केवलसङ्ख्यावाचकोऽपि सतादिशब्द इति लभ्यते । अन्यथा भाइसय इति न स्यात् सतभातरो इत्येव स्यादिति । भाइसय इत्यस्य भ्रातृशतमित्यर्थ ।

## पादस्य दस्य मूले ।३।४।७७॥

पादसम्बन्धिनो दकारस्य लोपो वा स्यात् मूलशब्दे उत्तरपदे । पामूल, पाअमूल, पायमूल, पादमूल ।

पादस्येति—लोप इति वेति चानुवर्तते। यदि षष्ठीनिर्दिष्टत्वादकारोत्तराकारस्यैव लोप स्यात्तदा पृथक् दग्रहणमनर्थक स्यात्। यदि पूर्ववदकाररहितस्यैव दकारस्य लोप प्रतीयेत तदा दकारस्य यकारकरणेऽपि तत्सिद्धौ तदर्थमत्र यत्नो निष्फल स्यादतो दकारतदुत्तराकारयोरुभयोर्लोपोऽनेन विज्ञायते। पादस्य मूल इति विग्रहे समासेऽनेन दकारस्य लोपे पामूल। तदभावे दकारस्य यकारे लोपे पाअमूल। लोपाभावे पायमूल। यकाराभावे पादमूल।

## गरुडासणादीनि निपात्यन्ते ।४।४।५७॥

गरुडासणादिगणपठितानि निपात्यन्ते। गरुडासण। उदओदर। पुव्वपच्छिमो।

गरुडेति—गरुडसरिस आसण इति विग्रहे कर्मधारयसमासे गरुडसरिस आसण इति स्थितेऽनेन मध्यपदस्य सरिसरूपस्य लोपो निपात्यते। उदअपुण्ण उदर इति विग्रहे पूर्वोक्तसमासे सत्यनेन मध्यपदस्य पुण्णरूपस्य लोपे सिद्धि। एव पुव्वसहितो पच्छिमो पुव्वपच्छिमो।

## चरेऽहेरा ।४।४।२७॥

अहेशब्दस्य चरशब्दे उत्तरपदे परे आकारोन्तादेशो वा स्यात्।
अहाचरो, अहेचरो।

चर इति—वेत्यस्यानुवृत्ति। अहेशब्दोऽध शब्दार्थक। सप्तम्यन्ते तस्मिन्नुपपदे चर्धातो कृत्प्रत्यये सप्तमीसमासेऽनेनैकारस्याकारादेशे अहाचरो तदभावे अहेचरो।

## उस्तेजस्य ।४।४।२५॥

तेजशब्दस्योकारान्तादेशो वा स्यादुत्तरपदे परे। तेउकाए, तेयकाए, तेजकाए।

उरिति—उत्तरपदे वा इति पदद्वयमनुवर्तते। तेजो कायो जस्सेति विग्रहे बहुव्रीहिसमासे तेजस कायो इति विग्रहे तत्पुरुषे वा कृतेऽनेन जकारोत्तराकारस्योकारे जकारस्य यकारे लोपे प्रकृतिभावे तेउकाए। उकाराभावे यकारे तेयकाए। यकारस्याप्यभावे तेजकाए।

## ओज्जसादीनामुत्तरपदे वा ।४।४।२३॥

जसादिशब्दानामुत्तरपदे परे ओकारान्तादेशो वा स्यात्। जसोकित्ती,

जसकित्ती । जसोकामी, जसकामी । जसोजीविय, जसजीवियं । जसोवंतो, जसवंतो । जसोमन्तो, जसमंतो । जसोचंदे, जसचंदे । जसोकरो, जसकरो । अहोनिसि । अयोकवल । अयोकुंभी । अयोगोलो । अयोघणो । अयोमय । अन्नोन्न । मणोन्न । मणोरमो । मणोसिला । मणोहरो । मणोकरण, मणकरण । मणोजोगो, मणजोगो । मणोदडो, मणदडो । मणोपओगो, मणपओगो । तमोकसिए । दोग्गती । तवोकम्म । तवोमय । मणोरहो । सोग्गई ।

ओदिति—जसोकित्ती । जससा कित्ती इति विग्रहे समासेऽनेनाकारस्यौकारे जसोकित्ती । यश कीर्ति । यशसा सुप्रसिद्धिरित्यर्थ । जस कामे- ईति विग्रहे कृत्प्रत्यये द्वितीयासमासे ओकारादेशे जसोकामी पक्षे जसकामी । यश कामीत्यर्थ । जससा जीविय इति विग्रहे तृतीयासमासे जसोजीविय । यशोजीवितमित्यर्थ । अत्र सूत्रे उत्तरपदशब्देन सुब्भिन्नोत्तरमात्र गृह्यते । अन्यथा जसोवन्तो इत्यादौ न स्यात्। अत्रोत्तरपदस्याभावात् । सुपि परे नैवौकारो भवति । अतस्तद्भिन्नत्व दत्तम् । जसोवतो इत्यस्य यशस्वीत्यर्थ । जसोचंदे इत्यादौ कर्मधारय । जसोचंदे इत्यस्य यशश्चन्द्र इत्यर्थ । जसोकरो इत्यादौ षष्ठीसमास । जसोकरो इत्यस्य यशस्कर इत्यर्थ । अहोनिसीत्यत्र तु द्वन्द्वसमास । अहर्निशमित्यर्थे । अयोकवल इत्यादौ षष्ठीसमास । अय कवलमित्यर्थ । अयोकुम्मी । अय कुम्मीत्यर्थ । अयोगोलो । अयोगोल । अयोघणो अयोघन । अयोमय इत्यत्र तु विकारार्थे मयप्रत्यय । अयोमयमित्यर्थः। अन्नोन्नम् । अन्योन्यमित्यर्थ । मणोन्न । मनोज्ञम् । मणोरमो । मनोरम । मणोसिला। मन शिला । मणोहरो । मनोहर । मणकरण । मन करणम् । मणोजोगो । मनोयोग । मणोदडो । मनोदण्ड । मणोपओगो । मन प्रयोग । तमोकसिए। तम कायिक । प्रच्छन्नक्रियाकारक इत्यर्थ । दोग्गती । दुर्गति । तवोकम्म । तप कर्म । तवोमय । तपोमयम् । मणोरहो । मनोरथ । सोगाई । सद्गति । कायादित्वाद् द्वित्वम् । एवमन्यत्रापि तादृशकार्यदर्शनेन तद्गणीय ऊह्य ।

## विहवणाभ्या पत्यु फसौ ।३।३।६८॥

आभ्या परस्य पतिशब्दस्यादे फ स इत्येतावादेशौ पर्यायेण वा स्तः । विहप्फती, विहस्सती, विहप्पती । वणप्फती, वणस्सती, वणप्पती ।

विहप्पणाभ्यामिति—वा आदेरित्यनुवर्त्तते। परत्वादनेन फादेशे सादेशे च कृते तैउप्रभृते कायादीनामित्यनेन द्वित्वं भवति। अन्यथा पूर्वं द्वित्वे आदे पकारस्यादेशेऽपि द्वितीयपकारश्रुतिः स्यादेव। विहस्स पती इति विग्रहे समासे परत्वादनेन फकारे कायादित्वाद् द्वित्वे विहप्फती, सकारादेशद्वित्वे तु विहस्सती, उभयोरभावे द्वित्वे विहप्पती। बृहस्पतिरित्यर्थः। एवं वणस्स पतीति विग्रहेऽपि बोध्यम्। वणस्सतीत्यस्य वनस्पतिरित्यर्थः।

## इञ्जैसयोरन्त्याद्ययोः ।३।४।९।।

इञ्जाशब्दस्यान्त्यस्य एससम्बन्धिन एकारस्य चोभयोः स्थाने इकारो वा स्यात्। इञ्जिसो, इञ्जेसो।

इञ्जैसयोरिति—दैवेत्यनुवर्त्तते। अत्र क्रमेणान्त्याद्ययोरन्वयेनेञ्जाशब्दस्यान्त्येनान्वयः। एसशब्दस्याद्येन सहान्वयः। अत एवाह इञ्जाशब्दस्यान्त्यस्येत्यादि। अन्त्याद्ययोरुभयोरेकस्थानिता विवक्षिता। तेन न पर्यायेण भवति। इञ्ज एसइ इति विग्रहेऽणि प्रत्यये द्वितीयासमासेऽनेनेञ्जासम्बन्धिन आकारस्य एससम्बन्धिन एकारस्य च स्थाने इकारे इञ्जिसो। पक्षे वृद्धौ इञ्जेसो। इज्येष इत्यर्थः।

## आगन्तारस्यारस्यागार उत्तरपदे ।३।४।७६।।

आगन्तारशब्दसम्बन्धिन आरशब्दस्य लोपो वा स्यादगारशब्दे उत्तरपदे। आगन्तगार।

आगन्तारस्येति—लोपः वा इति पदद्वयमनुवर्त्तते। यदि षष्ठीनिर्दिष्टत्वादारसम्बन्धिनोऽकारस्यैव लोपः स्यात्तदा पृथक्कृत्यारग्रहणं व्यर्थं स्यात् तद्विना प्यन्त्यस्यैव लोपसंभवात्। अत सामर्थ्यादारसमुदायस्य लोपो भवति। आगन्त्रगारमित्यर्थः। धर्मशालेति यावत्।

## आगन्तारागारस्यागन्तारो वा ।३।३।४४।।

आगन्तारागारशब्दस्य स्थाने आगन्तार इत्यादेशो वा स्यात्।

आगन्तार।

आगन्तारागारस्येति—अनेकवर्णत्वात्सर्वादेशः। आगन्तारस्स अगारो इति विग्रहे षष्ठीसमासेऽनेन तस्य स्थाने आगन्तारादेशे आगन्तार। द्वन्द्वतत्पुरुषयोः परवल्लिङ्गं भवति। तेन नपुंसकत्वम्।

## इ· क्रियाविशेषणत्वे पुव्वस्य वा ।३।४।८॥

पुव्वशब्दस्य क्रियाविशेषणत्वे सति इकारोन्तादेशो वा । पुव्वि, पुव्व वा करेइ । पुव्वाणुपुव्वि चरइ । क्रियाविशेषणत्वे किम् । पुव्वो घडो ।

इरिति—क्रियाया विशेषणत्व क्रियाविशेषणत्व तस्मिन् । क्रियानिरूपित-विशेषणत्वे इति यावत । पूर्वकालस्य कालिकसम्बन्धेनोत्पत्तावन्वय ।

## उवगमणे पायवस्य पापावौ वा ।४।४।२६॥

पायवशब्दस्य पर्यायेण पापावादेशौ वा स्यातामुवगमणशब्दे उत्तरपदे । पाउवगमण । पाओवगमण । पायवोवगमण ।

उवगमणे इति—उत्तरपदे इत्यनुवृत्ति । उपगमनरूपेऽर्थे इति नार्थ किन्तूवगमणशब्दे इति । उत्तरपदे उवगमणशब्दस्य शब्दपरत्वादतएवाह शब्दे इति । अनेकवर्णत्वात्सर्वादेश । पायवस्स उवगमण इति विग्रहे समासेऽनेन पादेशे प्रकृतिभावे पाउवगमण, पावादेशे वलोपे पाओवगमण । वृद्धि । अतएव पावादेशोऽपि स्वरान्त ।

## खधादावारस्यारवारो ।४।४।९॥

खधशब्दात्परस्यावारशब्दस्य पर्यायेणारवारावादेशौ वा स्त । खधारो । खधवारो, खधावारो ।

खधादिति—वेत्यनुवर्त्तते । खधस्स आवारो इति विग्रहे समासेऽनेनारा-देशे दीर्घे खधारो । वारादेशे खधवारो । स्कन्धावार इत्यर्थ ।

## जहन्नादीनामणुक्कोसादिपु ।४।२।२०॥

एषा शब्दानामणुक्कोसादिशब्देषु परेषु ममागम' स्यात् । अजहण्णमणुक्कोसो । अदुक्खमसुहो । अगमगाइ । सामाइयमादियाइ । गब्भमुद्देसो । अणतभागमब्भहिय ।

जहन्नादीनामिति—मभित्यनुवर्त्तते । आगमे मकारो मित्कार्यार्थ । मित्त्वा-दन्त्यावयव आगम । अजहण्णो चाणुक्कोसो चाजहण्णमणुक्कोसो । कर्मधारय-समासेऽनेन ममागम । अजघन्यानुत्कर्ष इत्यर्थ । न हीनो नोत्कृष्टो रस इति यावत् । अदुक्खो चासुहो चादुक्खमसुहो । अदु खासुख इत्यर्थ । सुख इति

यावत् । अगस्मागाइ अगमगाइ । उपाङ्गानीत्यर्थे । सामाइयमादि जेसिं इति विग्रहे समासे गमागमे सामाइयमादियाइ सामायिकादीनीत्यर्थः । गब्भस्स उद्देसो इति विग्रहे समासे गब्भमुद्देसो । अणतभागेण अब्भहिय अणतभागमब्भहिय अनन्तभागाभ्यधिकमित्यर्थः ।

## तिपदस्य त ।२।३।६९॥

तिपदशब्दे दस्य तो वा स्यात् । तिवई, तिवती, तिपदी ।

तिपदस्येति—उपधाया इति वेति चानुवर्त्तते । तिण्ह पदाण समाहार इति विग्रहे समास । अनेनोपधाभूतस्य दकारस्य तकारे तस्य यकारे लोपे पस्य वकारे तिवई । यकाराभावे तिवती । विकल्पत्वादस्य तकाराभावे तिपदी । त्रिपदी गतिविशेष इत्यर्थः ।

## अहादिभ्यो रत्ते ।४।४।२॥

अहादिशब्देभ्य परस्माद् रत्तिशब्दादप्रत्यय स्यात् । अहरत्तो, अहोरत्तो । पुव्वरत्तो । वरिसारत्तो । सव्वरत्तो ।

अहादिभ्य इति—अह च रत्ती चेति विग्रहे अहरत्तो, अहोरत्तो । अहोरात्रमित्यर्थ । ओजसादीनामित्यनेन विकल्पेनौकारान्तादेश । रत्तिशब्दस्य क्लीवेऽपि 'अहरत्तौ पुसि' इत्यनेन पुस्त्वम् । रत्तीए पुव्वभागो पुव्वरत्तो । पूर्वरात्र इत्यर्थ । पुव्वादयोऽवयविनेत्यनेन समासे पुव्वशब्दस्य पूर्वनिपात । वरिसाए रत्ती वरिसारत्तो । वर्षारात्र इत्यर्थ । सव्वा रत्ती सव्वरत्तो । सर्वरात्र इत्यर्थ ।

## राएश्च ।४।४।३॥

अहादिशब्देभ्य. परस्य राइशब्दस्याकारोऽन्तादेश स्यात् । अहोराअ । चउराअ ।

राएरिति—'अहादिभ्य इत्यनुवर्त्तते' अइतिच । अहोराइशब्देऽनेनेकारस्याकारेऽहोराय । अहोरात्रमित्यर्थ । चउराअ इत्यत्र समाहारे वाच्ये वक्ष्यमाण सूत्रेण समासेऽनेनाकारान्तादेशे चउराअ । चतसृणा रात्रीणा समाहार इत्यर्थ ।

## असुपि स्वरादो पादस्य पद ।३।४।७॥

पादशब्दस्य पदादेश. सात्सुब्भिन्नस्वरादौ । तिवदी ।

असुपीति---अनेकवर्णत्वात्सर्वादेश तिपादशब्दाङ्गीपि प्रत्ययेऽनेन पदादेशे पस्य चकारे तिवदी ।

## तद्धितार्थे समाहारे उत्तरपदे च दिक्सख्ये ।१।१।६७॥

तद्धितार्थे विपये समाहारे च वाच्ये उत्तरपदे च परे दिग्वाचकसख्यावाचकौ सुबन्तेन समस्येते । दुरत्तिय । चउराअ । पुव्वमालप्पियो ।

तद्धितार्थे इति---सुपा तत्पुरुप समाम इत्यनुवर्त्तते । दुशब्दरत्तिशब्दयोर्भवरूपतद्धितार्थे विपये समासे इयप्रत्यये तस्मिश्च टिलोपे दुरत्तिय । समाहारे चउराअ । उत्तरपदे परे च पुव्वसालप्पियो । मालाशब्दस्य पुवद्भाव ।

## परलिङ्गौ द्वन्द्वतत्पुरुषौ ।१।१।८०॥

एतौ समासौ परपदलिङ्गभाजौ भवत' । अम्मापियरो । अद्धपिप्पली ।

परलिङ्गाविति---परशब्देन परपद गृह्यते । परस्य लिङ्ग ययोस्तौ परलिङ्गौ । द्वन्द्वशब्देनेतरेतरयोगद्वन्द्वो ग्राह्यो नतु समाहारद्वन्द्व । तत्र नपुसकत्वस्य विशिष्य विधानात् । न च परपदस्य प्राधान्यादेव परपदलिङ्ग भवतीति व्यर्थमिदमिति वाच्यम् । द्वन्द्व उभयपदयो समानत्वात्परपदप्राधान्याभावात् । अम्मा च पिया चेति विग्रहे 'अम्मापियरो' इति द्वन्द्वसमास । अद्ध पिप्पलीए इति विग्रहे अद्धपिप्पलीति तत्पुरुषसमास । अत्र परपदस्य स्त्रीलिङ्गत्वात्समस्तपदस्यापि स्त्रीत्व बोध्यमिति ।

## अह्नरत्तौ पुंसि ।१।१।७९॥

अह्नरत्तशब्दान्तौ पुँल्लिङ्गे वर्तेते ।

अह्नेति---सख्यादिभ्यो ह्स्येत्यनेनाहशब्दस्याह्नादेशे परलिङ्गावित्यनेन परलिङ्गरूपनपुसकत्वप्राप्तावनेन पुस्त्व विधीयते । ण्व 'अहादिभ्य' इत्यनेन रत्तिशब्दस्याकारान्तादेशे रत्तेति जाते परलिङ्गावित्यनेन स्त्रीत्वे प्राप्तेऽनेन पुस्त्वविधानम् । अहम्याह्नेति रूप रत्तिशब्दस्य रत्तेति रूप समास एव भवति नान्यत्रेत्यत उक्त वृत्तौ शब्दान्ताविति ।

## न. ।१।१।६८॥

नशब्दः सुबन्तेन समस्यते ।

न इति—सुपा समास तत्पुरुष इति पदत्रयमनुवर्त्तते । निषेधार्थक एव नशब्दो गृह्यते नान्यार्थक । तादृशनशब्दस्य समासान्दर्शनात् ।

## स्वरादौ नस्यान् ।४।४।२९॥

स्वरादावुत्तरपदे परे नशब्दस्यानादेश स्यात् । अणस्सो । अणट्ठो ।

स्वरादानिति—उत्तरपद इत्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । न अस्सो अणस्सो । अनश्व इत्यर्थ । न अट्ठो अणट्ठो । अनर्थ इत्यर्थ ।

## व्यञ्जनादौ नस्यादे ।३।४।२९॥

व्यञ्जनादावुत्तरपदे परे नशब्दस्यादेर्लोप स्यात् । अप्पिय । अणाण ।

व्यञ्जनादाविति—उत्तरपद लोप इति पदद्वयमनुवर्त्तते । न पियमिति विग्रहे अप्पिय । अप्रियमित्यर्थ । न नाणमिति विग्रहे अणाण । अज्ञानमित्यथ । आदिग्रहणान्नशब्दस्यादेर्लोपो भवति । अन्यथा षष्ठीनिर्दिष्टत्वादन्त्यस्याकारस्यैव स्यात् । तच्चानिष्टम् ।

## खादौ नस्य प्रकृतिभावो बहुलम् ।३।४।२०॥

खादिशब्दे परे नशब्दस्य प्रकृतिभावो बहुल स्यात् । णख । णगो । अगो ।

खादाविति—नखादिशब्दे नशब्दघटकनकारस्यानेन प्रकृतिभावो भवति । स च प्रकृतिभावो बहुलप्रकारेण भवति । यथा णख इत्यत्र नित्य प्रकृतिभाव । न ख यत्र तन्नख । अत्र नकारलोपे अख इति स्यात । अवयवार्थो न विवक्षित । अतएव रूढत्वमिति बोध्यम् । अन्यथा आकाशस्य व्यापकत्वेन नखे तदसत्त्वासम्भवेनासङ्गति स्यात् ।

## नाजिण्णस्स जीरजीरगजीरणा ।४।४।११॥

नशब्दादुत्तरपदस्य जिण्णशब्दस्य जीरजीरगजीरण इत्येते आदेशा वा स्यु । अजीरो, अजीरगो, अजीरणो । अजिण्णो । उत्तरपदस्य किम् । न जिण्णो ।

नादिति—उत्तरपदस्य चेत्यस्यानुवृत्ति । उत्तरपदस्य समासचरमावयवे रूढत्वात्समास एवैत आदेशा न वाक्ये । न जिण्णो इति विग्रहे समासेऽनेन जिण्णशब्दस्य जीरादेशे नकारलोपे अजीरो । जीरगादेशे अजीरगो । जीरणा-

देशे अजीरणो। आदेशाभावे अजिण्णो। पदव्यावृत्तिस्तु मूले एव स्पष्टम्।

## विशेषणं विशेष्येण कर्मधारयो बहुलम् ।३।१।६९॥

**विशेषणं विशेष्येण समस्यते स कर्मधारयसंज्ञः स्याद्बहुलम्। महावीरो।**

विशेषणमिति—समास तत्पुरुष इति पदद्वयस्यानुवृत्ति। कर्मधारयत्वञ्च तादात्म्यसम्बन्धेनैकपदार्थधर्मिकापरपदार्थप्रकारकशाब्दबोधजनकत्वम्। न च नील उप्पल इत्यादावपि तादात्म्यसम्बन्धेन नीलप्रकारकोत्पलविशेष्यकशाब्दबोधोदयेन तादृशबोधजनकत्वस्य तत्र वाक्ये सत्त्वेन कर्मधारयलक्षणातिव्याप्तिरिति वाच्यम्। तादात्म्यसम्बन्धेन नीलादिनामार्थप्रकारकशाब्दबुद्धौ नीलादिनामोत्तरनामोपस्थितेः कारणत्वेन तत्र वाक्ये तादात्म्यसम्बन्धे नीलादिनामार्थप्रकारकशाब्दबोधासम्भवात्। नीलादिनामाव्यवहितोत्तरोत्पलादिनामजन्योपस्थितेरभावात्। विभक्तेर्व्यवधानात्। किन्तु तत्र विशेषणपदोत्तरविभक्त्युपस्थाप्यतादात्म्ये नीलादेराधेयतासम्बन्धेनान्वय। तादात्म्यस्य तु स्वरूपसम्बन्धेनोत्पलेऽन्वय। तथा च नीलतादात्म्यवदुत्पलमिति बोधो जायते। तत्राधेयतासम्बन्धेन नीलस्य तादात्म्ये प्रकारता तादात्म्यस्य च स्वरूपसम्बन्धेनोप्पले प्रकारता। न तु तादात्म्यसम्बन्धेन नीलस्योप्पलप्रकारता। लक्षणे तु तादात्म्यसम्बन्धेन नीलप्रकारकत्वनिवेशेन नातिव्याप्तिः। नीलोप्पल इत्यादि समासे तु तादात्म्यसम्बन्धेन नीलादिप्रकारकबोधोदयेन लक्षणसमन्वय। ननु विशेषणविभक्ति साधुत्वार्थिकैवेति मतेऽतिव्याप्तिस्तदवस्थैव तन्मते वाक्येऽपि तादात्म्यसम्बन्धेन नीलादिप्रकारकशाब्दबोधस्यैवोदयादिति चेत्सत्यम्। तादात्म्यसम्बन्धेन नीलादिप्रकारकोप्पलादिधर्मिकशाब्दबोधजनकत्वे सति अव्यवहितोत्तरत्वसम्बन्धेन नीलादिपदविशिष्टोप्पलादिपदत्वस्यैव कर्मधारयलक्षणत्वेन नील उप्पल इत्यादिवाक्ये विभक्त्या व्यवधानेनाव्यवहितोत्तरत्वसम्बन्धेन नीलपदविशिष्टत्वस्योप्पलपदेऽभावेनातिव्याप्तेरभावात्। अतएवोक्त जगदीशेन "क्रमिक यन्नामयुगमेकार्थेऽन्यार्थबोधकम्। तादात्म्येन भवेदेष समास कर्मधारय"॥ इति। क्रमिकमव्यवहितम्। अत्र प्रसङ्गात् कुत्र कर्मधारय कुत्र नेति सक्षेपत कथ्यते। अत्र प्राचीना विशेष्यविशेषणयोरुभयोर्यत्र तादात्म्येन व्यभिचारो वर्त्तते तत्रैव कर्मधारय साधु। अत एव माणुस 'बभणो। बभणमाणुसो इति प्रयोगो न भवति'। अत्र तादात्म्यसम्बन्धेन मनुष्यब्राह्मणयोर्व्यभिचाराभावात्। तादात्म्यसम्बन्धेन ब्राह्मणाभाववति शूद्रे

न इति—सुपा समास तत्पुरुषः इति पदत्रयमनुवर्तते । निषेधार्थक एव नशब्दो गृह्यते नान्यार्थकः । तादृशनशब्दस्य समासाभावात् ।

## स्वरादौ नस्यान् ।३।४।१८॥

स्वरादावुत्तरपदे परे नशब्दस्यानादेशः स्यात् । अणस्सो । अणट्ठो ।

स्वरादाविति—उत्तरपदे इत्यनुवर्तते । अनेनास्यानादेशः । न अस्सो अणस्सो । अनश्व इत्यर्थः । न अट्ठो अणट्ठो । अनर्थ इत्यर्थः ।

## व्यञ्जनादौ नस्यादेः ।३।४।१९॥

व्यञ्जनादावुत्तरपदे परे नशब्दस्यादेर्लोपः स्यात् । अप्पिय । अणाण ।

व्यञ्जनादाविति—उत्तरपदे लोप इति पदद्वयमनुवर्तते । न पियमिति विग्रहे अप्पियं । अप्रियमित्यर्थः । न णाणमिति विग्रहे अणाणं । अज्ञानमित्यर्थः । आदिग्रहणान्नशब्दस्यादेर्लोपो भवति । अन्यथा षष्ठीनिर्दिष्टत्वादन्त्यस्याकारस्यैव स्यात् । तच्चानिष्टम् ।

## खादौ नस्य प्रकृतिभावो बहुलम् ।३।४।२०॥

खादिशब्दे परे नशब्दस्य प्रकृतिभावो बहुलं स्यात् । णख । णगो । अगो ।

खादाविति—नखादिशब्दे नशब्दघटकनकारस्यानेन प्रकृतिभावो भवति । स च प्रकृतिभावो बहुलप्रकारेण भवति । यथा णग इत्यत्र नित्यः प्रकृतिभावः । न खं यत्र तन्नखं । अत्र नकारलोपे अख इति स्यात् । अवयवार्थो न विवक्षितः । अतएव रूढत्वमिति बोध्यम् । अन्यथा आकाशस्य व्यापकत्वेन नखे तदसत्त्वासम्भवेनासङ्गतिः स्यात् ।

## नाज्जिण्णस्स जीरजीरगजीरणाः ।३।४।२१॥

नशब्दादुत्तरपदस्य जिण्णशब्दस्य जीरजीरगजीरणा इत्येते आदेशा वा स्युः । अजीरो, अजीरगो, अजीरणो । अजिण्णो । उत्तरपदस्य किम् । न जिण्णो ।

नादिति—उत्तरपदस्य वेत्यस्यानुवृत्तिः । उत्तरपदस्य समासचरमावयवे रूढत्वात्समास एवैत आदेशा न वाक्ये । न जिण्णो इति विग्रहे समासेऽनेन जिण्णशब्दस्य जीरादेशे नकारलोपे अजीरो । जीरगादेशे अजीरगो । जीरणा-

निग्रहे कुटीजायो इत्यादावपि पुवद्भावेन कुटजायो इति स्यात् । अतो भापितपुस्कस्येत्युक्तम् । न च तथापि तत्रैव दोष कुटशब्दस्य घटे पुँल्लिङ्गत्वेन गृहे स्त्रीलिङ्गत्वेन भापितपुस्को य स्त्रीवाचक स कुटशब्दस्तस्य पुवद्भावप्राप्ते मत्त्वादिति वाच्यम । भापित पुमान् येन शब्देन स भापितपुस्क इति विग्रहे दोपसत्त्वेऽपि भापित पुमान् यस्मिन् प्रवृत्तिनिमित्तरूपेऽर्थे तद्भापितपुस्क तदस्त्यस्य स भापितपुस्क । अर्शआदित्वादच् । तथा च यस्मिन् प्रवृत्तिनिमित्ते पुंबोधकत्व तस्मिन् प्रवृत्तिनिमित्ते स्त्रीवाचकस्य पुवद्भावविधानलाभेन कुटी जायो इत्यादौ तदप्राप्ते । कुटशब्दो हि घटत्व प्रवृत्तिनिमित्तीकृत्य पुंबोधक । गृहत्व प्रवृत्तिनिमित्तीकृत्य स्त्रीबोधक इति प्रवृत्तिनिमित्तभेदेन पुंस्त्रीवाचकत्वेन प्रवृत्तिनिमित्तैक्ये तद्बोधकत्वाभावात् । प्रकृते वड्ढकुमारीत्यादौ वड्ढशब्दो वृद्धत्व प्रवृत्तिनिमित्तीकृत्य पुवाचकस्तदेव प्रवृत्तिनिमित्तमाश्रित्य स्त्रीवाचक इति प्रवृत्तिनिमित्तैक्ये भापितपुस्कत्वे सति स्त्रीवाचकत्वस्य तत्र सत्त्वेन न पुवद्भावेऽनुपपत्ति । प्रवृत्तिनिमित्तत्व च वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितौ प्रकारतया भासमानत्वम् । व्यक्तिवारणाय द्वितीय सत्यन्तम । सम्बन्धवारणाय विशेष्यदलम् । जातौ तु समन्वय । तथा च घटादिशब्दाना प्रवृत्तिनिमित्त घटत्वादिजातिरेव ।

## पत्तामोडादिषु परम् ।४।४।५९॥

### एषु पूर्वप्रयोगार्ह पर स्यात् । पत्तामोडाणि । अनासाच्छिन्न ।

पत्तेति—प्रथमानिर्दिष्टमित्यनुवर्त्तते । प्रथमानिर्दिष्ट पर प्रयोज्यमिति लाभे पूर्वप्रयोगार्हस्यैव परप्रयोगविधानलाभात्फलितमाह 'एषु पूर्वप्रयोगार्ह परमिति'। वान्यार्थस्तु प्रथमानिर्दिष्टमित्यस्यानुवृत्त्या एषु प्रथमानिर्दिष्ट पर प्रयोज्यमित्येव । आमोडाणि पत्ताणि पत्तामोडाणि अत्र विशेष्यस्यैव पूर्वप्रयोग । आमोदितपत्राणीत्यर्थ । अनासाच्छिन्नमित्यस्य अच्छिन्ननासिकमित्यर्थ । अजलिवुडे (कृताञ्जलि ) आइण्णजणमणुस्सा (जनमनुष्याकीर्णा) इत्यादयोप्यत्रैव बोध्या । आकृतिगणोऽयम् ।

## उपमानानि समानधर्मवचनै ।१।१।७०॥

### उपमानवाचकानि उपमानोपमेयसाधारणधर्मवाचकै समस्यन्ते । घणस्सामो।

उपमानानीति—समास कर्मधारय तत्पुरुष इति पदत्रयस्यानुवृत्ति ।

मनुष्यत्वस्य सत्त्वेन मनुष्यस्य ब्राह्मणव्यभिचारसत्त्वेपि तादात्म्येन मनुष्याभाववति ब्राह्मणाभावेन मनुष्यव्यभिचारस्य ब्राह्मणेऽभावात्। मनुष्यभिन्नब्राह्मणाभावात्। तद्व्यभिचारश्च तदभाववद्वृत्तित्वम्। न चैवं पमेयधूम इति न स्यात् मसारस्यैव प्रमेयत्वेन तादात्म्यसम्बन्धेन प्रमेयाभाववति धूमस्यासत्त्वेन प्रमेयरूपविशेषणव्यभिचाराभावादिति वाच्यम्। राहुस्स सिरो इतिवत् तादात्म्यसम्बन्धार्थकषष्ठ्या तत्पुरुषसमासस्यैव तत्र सत्त्वादित्याहुः। नव्यास्तु विशेष्यस्यैव विशेषणव्यभिचारः कर्मधारये इष्टः। यदि विशेषणस्यापि विशेष्यव्यभिचारो नियामकः स्यात्कर्मधारये तदा चंदणतरू, विंझगिरीत्यादिप्रयोगा न स्युः। तादात्म्येन तर्वभाववति चन्दनस्य, गिर्यभाववति विन्ध्यस्याभावेन विशेषणस्य व्यभिचाराभावात्। मन्मते तु तादात्म्येन चन्दनाभाववति तरौ विन्ध्याभाववति पर्वतस्य सत्त्वेन विशेष्यस्य विशेषणव्यभिचारसत्त्वेन न कापि क्षतिः। एवञ्च मानुषाभाववति ब्राह्मणस्याभावेन मानुषरूपविशेषणव्यभिचारस्य विशेष्ये ब्राह्मणेऽभावेन माणुसबंभणो इत्यस्याभावेऽपि विशेष्यस्य मानुषस्य ब्राह्मणरूपविशेषणव्यभिचारसत्त्वेन बंभणमाणुसो इति भवत्येव। न चैवं नित्यज्ञानवद्रूपोत्तमाभाववति जीवे पुरुषस्य तादात्म्येन सत्त्वेन विशेष्ये विशेषणव्यभिचारसत्त्वेन उत्तमपुरुसो इत्यस्य सत्त्वेऽपि पुरुसोत्तमो इति न स्यात् तादात्म्येन पुरुषाभाववति पूर्वोक्तोत्तमत्वस्याभावेन विशेषणव्यभिचारस्य विशेष्येऽभावादिति वाच्यम्। भ्रमविधुरस्यैवोत्तमपदार्थत्वेन पुरुषाभाववति लोष्ठादौ भ्रमाभाववतस्तादात्म्येन सत्त्वेन विशेष्यस्योत्तमस्य विशेषणपुरुषव्यभिचारसत्त्वेन पुरुसोत्तमो इत्यस्य सम्भवादित्याहुरित्यलम्।

## भाषितपुंस्कस्य स्त्रीवाचकस्य पुंवत् समानाधिकरणादौ ।४।४।५६॥

प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कस्य स्त्रीवाचकस्य पुंवाचकस्येव रूपं स्यात्। वड्ढकुमारी।

भाषितेति—समानाधिकरणत्वञ्च शब्दनिष्ठमेकार्थबोधकत्वम्। अत एव वड्ढापुत्तो इत्यादौ न पुंवद्भाव, एकार्थबोधकत्वाभावेन पुत्तशब्दस्य समानाधिकरणत्वाभावात्। भाषित पुमान् यस्मिन् प्रवृत्तिनिमित्तरूपेऽर्थे तद्भाषितपुंस्कं तदस्त्यस्येति विग्रहेऽशआदित्वादच्प्रत्यये भाषितपुंस्कस्तस्य भाषितपुंस्कस्येति। अतएवाह प्रवृत्तिनिमित्तैक्ये। भाषितपुंस्कस्येत्यस्याभावे कुटी जाया जसेवि

## तियस्य लोपे ।४।४।८३॥

**एतशब्दस्यैकार· स्यात्तियस्य लोपे सति । एमहालियो ।**

तियस्येति—एतस्य एस् इति पदद्वयस्यानुवृत्ति । एत्तियमहालिय-शब्दयो कर्मधारये तियस्य लोपेऽनेनैतस्यैकारादेशे एमहालियो । 'निमित्तापाये नैमित्तिकस्याप्यपाय ' इति परिभाषया तियस्य लोपेऽकारस्यागमनेन एतशब्द सम्पन्नो भवति । अनेन षष्ठीनिर्दिष्टत्वान्नान्त्यस्य भवति किन्तु सित्त्वात् समुदायस्यैव ।

## कात्तियस्यैवातिये चिरे ।३।४।२६॥

**कशब्दात्परस्यैव तियघटकतियस्य लोप' स्याच्चिरशब्दे परे । केच्चिर,केचिर ।**

कादिति—लोप इत्यनुवर्त्तते । कशब्दात्परस्यैवतियस्य तियस्य लोपे उत्तरपदादेर्द्वित्वे केच्चिर, द्वित्वाभावे केवचिर । सुप्सुपेत्यनेन समास । समासाभावे तूत्तरपदपरत्वाभावेन द्वित्व न स्यात् ।

## पादयो गताद्यर्थे ।१।१।७२॥

**गताद्यर्थे वर्त्तमाना' पादय सुबन्तेन समस्यन्ते । पणामो । पदेसो । पवासो । दुद्दसण । दुद्दिण । दुग्गती । अभिमुखो । अइकालो । उक्कुलो । णीसको । कुपुरिसो ।**

पादय इति—समास कर्मधारय तत्पुरुष सुपा इति पदचतुष्टयमनुवर्त्तते । निपाता द्योतका सन्तु वाचका वा सर्वथा गताद्यर्थे वर्त्तमानत्वमस्त्येव वाचकत्वे वाच्यार्थं द्योतकत्वे द्योत्यार्थमादाय तत्त्व बोध्यम् । पक्किट्ठो णामो इति विग्रहे प्रकृष्टार्थकपशब्दो णामशब्देन समस्यते । एव पदेसो । पवासो । दुट्ठ दसण इति विग्रहे दुष्टार्थकदुशब्देन दुरशब्देन वा समासे उत्तरपदादेर्द्वित्वे परसवर्णे वा दुद्दसण । एव दुद्दिण । दुग्गती । मुख अभिगतो इति विग्रहेऽभिगमनार्थकाभिशब्देन समासो भवति । काल अतिक्कन्तो इति विग्रहेऽतिक्रान्तार्थकातिशब्देन समासो भवति । कुलाओ उग्गतो इति विग्रहे उद्गतार्थकेन उ उद्शब्देन समासे पूर्ववत् कार्ये उक्कुलो । सकाओ निग्गतो इति विग्रहे समासे उपसर्गस्य दीर्घे सयुक्तादेर्लोपे णीसको, पक्षे णिस्सको । कुस्सिओ पुरिसो इति विग्रहे कुत्सितार्थककुशब्देन समासो भवति ।

उपमीयतेऽनेनेत्युपमानम्। सादृश्यप्रतियोगीत्यर्थः। उपमीयत इत्युपमेयं सादृश्यानुयोगीत्यर्थः। समानधर्मणोपमानोपमेयगतधर्मस्यैव ग्रहणेनाह 'उपमानोपमेयेत्यादि' घण इव सामो इति विग्रहे समासे घणसामो। अत्र लौकिकविग्रहे इवशब्दनिर्देशस्तु पूर्वपदं तत्सदृशे लाक्षणिकमिति सूचयितुम्। अत एव मिगी इव चवलो मिगचवलो इत्यत्र सामानाधिकरण्यात्पुंवद्भावो भवति। अन्यथैकार्थबोधकत्वरूपसामानाधिकरण्याभावे स न स्यात्। कथं तर्ह्युपमानपरत्वमिति चेत् साम्प्रतिकाभावे भूतपूर्वगतिरिति न्यायेन भूतपूर्वगत्या शक्यार्थमादायोपमानपरत्वसम्भवात्। उपमानस्यैव पूर्वप्रयोगनियमार्थमिदं सूत्रम्। अन्यथा विशेषणविशेष्यभावस्येच्छानुसारित्वात् सामान्येन समाससम्भवे इदं सूत्रं व्यर्थं स्यात्।

## उपमेयानि सामान्याप्रयोगे ।१।१।७१॥

उपमेयवाचकान्युपमानवाचकैः सह समस्यन्ते उपमानोपमेयसाधारणधर्मवाचकाप्रयोगे सति। पुरिसग्गी। सामान्याप्रयोगे किम्। पुरिसो अग्गी व जाजल्लमाणो।

उपमेयानीति—कर्मधारय तत्पुरुष समास इति पदत्रयमनुवर्त्तते। सम्बन्धिशब्दत्वादुपमानैरिति लभ्यते। उपमेयादिविवरणन्तु पूर्वतो बोध्यम्। विशेष्यस्य पूर्वनिपातनियमार्थं सूत्रम्। अन्यथा तु सामान्यसूत्रेणैव समाससम्भव इदं सूत्रं व्यर्थं स्यात्। उपमानोपमेयगतधर्मवाचकशब्दाप्रयोगे सत्येव भवति। अतएव पुरिसो वग्घ इव सूरो इत्यत्र न समासः। साधारणधर्मसूरत्ववाचकस्य सूरशब्दस्याप्रयोगाभावात्। अतएव मूल आह 'सामान्याप्रयोग' इति। सामान्यवाचकस्याप्रयोग इत्यर्थः। पुरिसो अग्गीव पुरिसग्गी। येन धर्मेण सादृश्यं विवक्षितं तद्धर्मवाचकस्यैवाप्रयोगस्यावश्यकत्वमिति।

## एतकाभ्यां तियस्य वतियस्य चोत्तरपदे ।३।४।२७॥

एतशब्दात्परस्य तियप्रत्ययस्य कशब्दात्परस्यैवतियघटकवतियस्य च लोपः स्यादुत्तरपदे परे। केमहालियो।

एतकाभ्यामिति—एवतिये लोप इति द्वयमनुवर्त्तते। क्रमेणैतशब्दस्य तियेऽन्वयः। कशब्दस्य वतियेऽन्वयः। एवतियं इत्यस्य तु वतियेऽन्वयः। यथासंख्यान्वयात्। केवतियमहालियशब्दयोः कर्मधारये वतियस्य लोपे केमहालियो।

## निरोऽभ्यवानूदराणाम् ।३।२।२०॥

निर. परेषामभि अव अनु उदराणामादेर्दीर्घो वा स्यादुत्तरपदे परे । निराभिरामो, निरभिरामो । निरावकंखी, निरवकंखी । निराणुकंपो, निरणु-कंपो । निरोदरो, निरुदरो ।

निर इति—आदे वृद्धि वा इति पदत्रयमनुवर्तते । समासस्तु पादयो गतार्थ इत्यनेनैव । केवल वृद्धिरेव विशेष ।

## तेउप्रभृतेः कायादीनाम् ।३।३।२७॥

तेउप्रभृतेः परेषा कायादीनामादेर्द्वित्व वा स्यात् । तेउक्कायो, तेउकायो । वाउक्कायो, वाउकायो । आउक्कालो, आउकालो । आउक्करण, आउकरण । चउक्कसाया, चउकसाया । छज्जीवणिया, छजीवणिया । छद्दन्तो, छदतो । पुढविक्काइया, पुढविकाइया । पुढवीक्काइया, पुढवीकाइया । वाउक्काइया, वाउ-काइया । दोग्गती । तक्करो । पारक्करो । पायच्छित्त । पायच्छित्ती ।

तेउप्रभृतेरिति—द्वि आदे वा इति पदत्रयमनुवर्तते । तेऊ कायो जस्स इति विग्रहे बहुव्रीहौ तेउस्स कायो इति विग्रहे तत्पुरुषे वा ककारस्य द्वित्वे तेउक्कायो । द्वित्वाभावे तेउकायो । एव वाउक्कायो । आउस्स कालो आउक्कालो । आउस्स करण आउक्करण । चउरो कसाया इति विग्रहे कर्मधारय । एव छज्जीवणिया । छदता जस्स स छद्दतो । पुढविपुढवीशब्दौ पृथ्वीवाचकौ । तत्र पुढवी कायो जेसिं इति विग्रहे समासे स्वार्थे इक प्रत्यये पुढविक्काइया, पुढविकाइया । दीर्घेकारान्तपुढवीशब्देन समासे तु पुढवीक्काइया, पुढवीकाइया । एवमग्रेऽपि दुशब्देन दुर् शब्देन वा समासे उत्तरपदादेर्द्वित्वे परसवर्णे वा पूर्वपदान्तस्यौकारे दोग्गती, ओकाराभावे दुग्गती । व्यवस्थितविभाषात्वात् कचिन्नित्यमेव द्वित्व-मतो दुगती, दोगतीति न । तस्स करो तक्करो तस्कर इत्यर्थ । पार करेईति पारक्करो । पायस्स चित्त इति विग्रहे पायच्छित्त । प्रायश्चित्तमित्यर्थ । प्राय पाप विजानीयात् चित्त तस्य विशोधनमिति स्मृत्या पायशब्दस्य पापार्थकत्वेन चित्त-शब्दस्य विशोधनार्थकत्वेन च पापविशोधनमित्यर्थ । एवमेव पायच्छित्तीति ।

## उदएचरादौ सप्तम्या. ।४।१।३६॥

उदएचरादौ शब्दे सप्तम्या विभक्तेर्लोपो न स्यात् । उदएचरो । कंठेगुणो । कंठेमालको । खेचरो ।

## को कोको व्यञ्जनादौ ।४।४।२४॥

कुशब्दस्य को का इत्येतावादेशौ पर्यायेण वा स्तो व्यञ्जनादावुत्तरपदे परे ।
कोपुरिसो, कापुरिसो, कुपुरिसो । कोदडिमो, कादडिमो, कुदडिमो ।

कोरिति—उत्तरपदे वा इति पदद्वयमनुवर्तते । कौश्च काश्च कोकौ । व्यञ्जन मादिर्यस्य स व्यञ्जनादिस्तस्मिन्नित्यर्थः । अनुवर्तमानोत्तरपदमन्यपदार्थः । कुत्सितो पुरिसो इति विग्रहे प्राग्वत्समासे । कुशब्दस्य को इत्यादेशे कोपुरिसो, का इत्यादेशे कापुरिसो, उभयोरभावे कुपुरिसो । एवमग्रेऽपि ।

## स्वरादौ कत् ।४।४।२५॥

स्वरादावुत्तरपदे परे कुशब्दस्य कदित्यादेशः स्यात्तत्पुरुषे । कदन्न । कयन्न ।

स्वरादाविति—उत्तरपदे कोरिति पदद्वयमनुवर्तते । स्वर आदिर्यस्य स स्वरादिस्तस्मिन् । अनुवर्तमानोत्तरपदमन्यपदार्थः । कुत्सित अन्न इति विग्रहे समासे कुशब्दस्य कदादेशे कदन्न । दकारस्य यकारे च कयन्न ।

## छुहाया ।३।४।२८॥

छुहाशब्दस्यान्त्यस्य लोपः स्यादुत्तरपदे परे । छुप्पिवासा ।

छुहाया इति—लोपः उत्तरपदे इति पदद्वयस्याप्यनुवृत्तिः । अनेन सामान्यतयोत्तरपदे परे विधानेऽपि व्यञ्जनादावेवोत्तरपदे प्रायो बोध्यम् । अतएव छुहोप्पत्ती इत्यादि सिद्धयति । छुहा सहिता पिवासा छुप्पिवासा इत्यत्र कर्मधारयो मध्यमपदस्य सहितशब्दस्य लोपः । क्षुत्पिपासेत्यर्थः । द्वन्द्वे त्वनेकवचनश्रुतिरेव स्यात् ।

## तमस्यो काये ।४।४।३६॥

तमशब्दस्यान्त्यस्योकारो वा स्यात् काये परे । तमुक्काए, तमुकाए ।

तमस्येति—उत्तरपदे वा इति पदद्वयस्याप्यनुवृत्तिः । तमस्स काए इति विग्रहे तमो कायो तस्सेति विग्रहे समासे विकल्पेन उत्तरपदस्यादेर्द्वित्वे चानेनोकारे तमुक्काए । द्वित्वाभावे उकारे च तमुकाए । अतएवोकारविधानं सफलम् । अन्यथा द्वित्वस्य नित्यत्वे संयुक्ते ह्रस्वेनाप्युकारघटितरूपसम्भवेनेदं व्यर्थं स्यात् । द्वित्वे सत्युकाराभावे तु तमक्काए, उभयाप्रवृत्तौ तमकाए । जसादित्वादोकारे तु तमोकाए ।

एकार्थकस्येति—वेत्यनुवर्त्तते। सकार आदेशावयव इति भ्रममपाकर्त्तुमाह सित्त्वादिति। तथा च सकार इत्संज्ञक इति सिद्धम्। यालशब्दो न स्वतन्त्र किन्तु चत्तालीसस्थानिक स चाग्रे स्फुटो भविष्यति।

## चत्तालीसस्य तालतालीतालीसा। ।४।४।४॥

उत्तरपदस्य चत्तालीसशब्दस्य तालतालीतालीसा भवन्ति। इयाल, इगयाल, एकयाली, एक्ताली, एकतालीस।

चत्तालीसस्येति—उत्तरपदस्येत्यनुवर्त्तते। एको य चत्तालीस चेति विग्रहे द्वन्द्वे एकाधिक चत्तालीस इति विग्रहे मध्यमपदलोपिसमासे वा एकचत्तालीस इति स्थितेऽनेन चत्तालीसस्य तालादेशे तकारस्य यकारे 'एकार्थकस्य सिर्याले' इत्यनेनैकस्य सि इत्यादेशे इयाल, स्यादेशाभावे एकयाल, ताली इत्यादेशे एग्याली, तालीसादेशे एकतालीस। इयाल, एक्कयाल, एक्कयाली, एक्तालीस। एकचत्वारिंशदित्यर्थ। एवमन्यत्राप्यूह्यम्।

## वाः सख्यायाम् ।४।४।४०॥

दुशब्दस्य वा इत्यादेश' स्यात् सख्यावाचकशब्दे परे। वावन्न। वाणउई। वायाल।

वा इति—उत्तरपदे दो इति पदद्वयमनुवर्त्तते। दु अधिक पण्ण इति विग्रहे। दू च पन्न चेति विग्रहे वा समासे दुशब्दस्य वा इत्यादेशे दीर्घे वावन्न। द्विपञ्चाशदित्यर्थ। एव वाणउई। द्विनवतिरित्यर्थ। बायाल, वायालीस, वेयालीस इत्यत्र तु दोर्वेवीत्यनेन वे इत्यादेश। द्विचत्वारिंशदित्यर्थ।

## दसे वा ।४।४।४१॥

दुशब्दस्य वादेशो वा स्याद्दसशब्दे परे। वारस। पक्षे

दस इति—वा दो इत्युभयोरनुवृत्ति। दुशब्दस्य वादेशे दीर्घे वारस।

## दोर्वग्दसे ।४।२।७॥

दुशब्दस्य वगागमः स्याद्दसे परे। दुवालस।

दोरिति—दुशब्दस्य वादेशाभावपक्षेऽनेन वगागमे दीर्घे दुवालस इति सिद्ध्यति। द्वादश इत्यर्थ।

उदएचगडाविति—न इत्यस्य लोप इत्यस्य चानुवृत्तिः । उदएचगो आदिर्यस्य स उदएचगादिस्तस्मिन । अयमाद्यागिग । सप्तमीसमासे सति विभक्तेर्लोपे प्राप्तेऽनेन निषिध्यते । कंठे गुणो जस्येति विग्रहे व्यधिकरणबहुव्रीहिसमासे । वक्ष्यते । प्रमादादैवालोपसम्भवोऽत्रोदाहरणं दत्तम् । गिघरो इत्यत्र तु सप्तमीसमासः ।

## पस्सओहरेत्यादौ षष्ठ्या ।४।१।३७॥

पस्सओहर इत्यादिशब्दे षष्ठ्या लोपो न । पस्सओहरो । पिउस्स पुत्तो । चोरस्स कुलं ।

पस्सयोहरेति—नेति लोप इति चानुवर्तते । उदाहरति पस्सओहर इत्यादि । पश्यतमनाहृत्य हरतीत्यर्थः । षष्ठी चात्रादरानादरेण षष्ठी । पिउस्स पुत्तो इत्यस्य पितुः पुत्र इत्यर्थः । चोरस्स कुलमित्यत्राक्रोशार्थः प्रतीयते ।

## एकादिभ्यो र आदेः ।४।४।१४॥

एकादिभ्यः परस्योत्तरपदभूतस्य दसशब्दस्यादे रेफः स्यात् ।

एकारस । बारस । तेरस । पण्णरस । सत्तरस । अट्ठारस ।

एकादिभ्य इति—उत्तरपदस्य दसस्येति पदद्वयमनुवर्तते । उत्तरपदस्येत्यस्यानुवर्तनादसमस्तस्य एक्को दस इत्यादिवाक्यस्थदसशब्दस्य रेफो न भवतीति । आदिपदेन एक, एग, बा (दुशब्दादेशः) ते (तिशब्दादेशः) पण, पण्ण, सत्त, अट्ठ इत्येते शब्दा गृह्यन्ते । एकशब्दस्याद्वशब्दस्य च रहादित्वाद्दीर्घः ।

## दुवासोभ्या दसस्य ।४।४।९३॥

आभ्या परस्य दसशब्दस्य दस्य ल इत्यादेशः स्यात्समासे । दुवालस । सोलस ।

दुवेति—रस्य ल इत्यनुवर्तते । दसशब्दे परे दुशब्दस्य वगागमे रहादित्वाद्दीर्घे दुवेति निष्पन्नम् । छस्य सोरिति छशब्दस्य दसशब्दे परे सो इत्यादेशः । दुवाश्च सोश्चेति द्वन्द्वः । ताभ्यां परस्य दसशब्दस्य दस्य ल इत्यादेशः । दुवालसेत्यस्य द्वादशेत्यर्थः । सोलसेत्यस्य षोडशेत्यर्थः । दुवादश सो इत्यादेशश्च समास एव भवत्यतः समास इत्यर्थापत्त्या लब्धम् ।

## एकार्थकस्येस् याले ।४।४।३८॥

एकार्थकस्य इस् इत्यादेशो वा स्यात् याले परे । मित्त्वात्सर्वादेशः ।

पणस्येति—उपधाया द्वि वा इति पदत्रयस्यानुवृत्ति । पण्णरस इत्यस्य पञ्चदश इत्यर्थ । पण्णहत्तर इत्यस्य पञ्चसप्ततिरित्यर्थ । पण्णवीम इत्यस्य पञ्चविंशतिरित्यर्थ । विग्रहस्तु प्राग्वत् ।

## असीतौ तेयो वा ।४।४।४५॥

तिशब्दस्य तेयादेशो वा स्यादसीतिशब्दे परे । तेयासीइ । तेअसी, तेसीइ, तेसी ।

असीतानिति—तेरित्यस्यानुवृत्ति । तिशब्दस्य तेयादेशे दीर्घे तेयासीइ । ते इत्यादेशे प्रकृतिभावेऽसीतिशब्दसम्बन्धिनस्तकारस्य लोपे दीर्घे तेअसी । अकारस्य लोपे इकारस्य प्रकृतिभावे तेसीइ । अकारस्येकारस्य च लोपे तेसी । त्र्यशीतिरित्यर्थ ।

## तेरे ।४।४।४३॥

संख्यावाचकतिशब्दस्यैकारोऽन्तादेश स्यादुत्तरपदे परे । तेरस । तेवीस । तेतीसा । तेयाल । तेयाली । तेवण्ण । तेवग्ग । तेइदिया । तेवत्तरिं ।

तेरेरिति—उत्तरपदे इत्यनुवर्त्तते । सख्यायामित्यस्यानुवृत्तिरत एवाह सख्यावाचकेति । तेरसेत्यत्र पूर्वोक्तसमासे तिशब्दस्य ते इत्यादेशे दकारस्य रेफादेशे तेरस त्रयोदश इत्यर्थ । एवमन्येऽपि । तेवीस । त्रयोविंशति । तेतीसा । त्रयस्त्रिंशत् । तेयाल, तेयाली । त्रिचत्वारिंशत् । तेवण्ण । त्रिपञ्चाशत् । तेवग्ग । त्रिवर्ग । तेइदिया । त्रीन्द्रिया ।

## चो संख्यायां वा ।४।४।४९॥

चउशब्दस्य चो इत्यादेशो वा स्यात् सख्यावाचक उत्तरपदे परे । चोद्दस, चोदस । चउद्दस, चउदस । चोत्तीस, चोतीस । चउत्तीस, चउतीस । चोयाल, चोयाली, चोयालीस, चउआलीस । चोसट्ठि, चउसट्ठि ।

चोरिति—उत्तरपदे चतो इति पदद्वयमनुवर्त्तते । सख्यार्थके इति किम् । चउकोण इत्यादौ माभूत् । उत्तरपदे इति किम् । चउरो । चउ अधिका दसेत्यादि-विग्रहे समासे चउशब्दस्य चो इत्यादेशे उत्तरपदादेर्द्वित्वे चोद्दस, द्वित्वाभावे चोदस, आदेशाभावे द्वित्वे चउद्दस, द्वित्वाभावे चउदस । चतुर्दश इत्यर्थ । एव चोवीस, चउवीस इत्यादि । चतुर्विंशतिरित्यर्थ । चोत्तीस चतुस्त्रिंशत् । चोयाल । चतुश्चत्वारिंशत् । चोसट्ठि । चतु षष्टि ।

## सत्तरेश्चोवातेछाभ्य सत्ताट्ठाभ्यां च वहौ ।४।४।१५॥

चोवातेछाभ्य परस्य सत्तरिशब्दस्यादेर्वकार सत्ताट्ठाभ्या परस्य च इकारादेश स्यात्समासे। चोवत्तरिं । बावत्तरिं । तेवत्तरिं। छावत्तरिं। सत्तहत्तरिं। अट्ठहत्तरिं ।

सत्तेरिति—उत्तरपदस्यादेरिति पदद्वयमनुवर्त्तते । उत्तरपदस्यत्वस्यानुवर्तनात्समास इति लब्धम्। चोवातेछाभ्य इत्यस्य वकारेण सत्ताट्ठाभ्यामित्यस्य च हकारेण यथासख्यमन्वय । चोवातेछा इति क्रमेण चउद्दुतिछशब्दानामा देशा । चउरो य सत्तरिं य इति विग्रहे चउअधिकाणि सत्तरिमिति विग्रहे वा समासेऽनेन सत्तरिशब्दस्यादेर्वकारादेशे चउशब्दस्य चो इत्यादेशे चोवत्तरिं। चतु सप्ततिरित्यर्थ । बावत्तरिमित्यस्य द्वासप्ततिरित्यर्थ । तेवत्तरिमित्यस्य त्रिसप्ततिरित्यर्थ । छावत्तरिमित्यस्य षट्सप्ततिरित्यर्थ । इकारादेशे सत्तहत्तरिमित्यस्य सप्तसप्ततिरित्यर्थ । अट्ठहत्तरिमित्यस्य अष्टसप्ततिरित्यर्थः ।

## सत्ताउणाभ्यां सत्तरे सस्य ।३।४।८०॥

आभ्या परस्य सत्तरिशब्दस्याकारसहितसकारस्य वा लोप स्यात्। सत्तत्तरिं। अउणत्तरिं।

सत्तेति—वा लोप इत्यनुवर्त्तते। सत्त य सत्तरिं य इति विग्रहे समासेऽनेन सलोपे सत्तत्तरिं। सप्तसप्ततिरित्यर्थ । एकोणशब्दस्याउणादेशे सलोपे च अउणत्तरिं एकोनसप्ततिरित्यर्थ ।

## चुलचतुरावसीतौ चतो ।४।४।४८॥

चतुशब्दस्य चुलचतुर इत्येतावादेशौ स्तोऽसीतिशब्दे परे। चुलसीइ, चतुरासीइ।

चुलचतुराविति—अनेकवर्णत्वात्सर्वादेश । लकाररेफोत्तराकार उच्चारणार्थ । चउरो य असीइ य इति विग्रहे द्वन्द्वे चउ अधिका असीइ इति विग्रहे मध्यमपदलोपिसमासे वा अनेन चउशब्दस्य चुलादेशे चुलसीइ। चतुरादेशे चतुरासीइ। चतुरशीतिरित्यर्थ ।

## पणस्योत्तरपदे ।२।३।७२॥

पणशब्दोपधाया द्वित्व वा स्यादुत्तरपदे परे। पण्णरस, पणरस, पनरस। पण्णहत्तर, पणहत्तर। पण्णवीस, पणवीस।

## अट्ठवाभ्यां रो दसस्य ।४।४।१३॥

आभ्यां परस्य दसशब्दस्य र इत्यादेशो वा स्यात्। अट्ठार, अट्ठारस। बार, बारस।

अट्ठेति—वेत्यनुवर्त्तते। अट्ठबाभ्यां र दसस्य इति च्छेदः। अनेकवर्णत्वात् सर्वादेशः। अतएव रेफोत्तरोऽकारो नोच्चारणार्थ इति सिद्धम्। अट्ठदसशब्दयोः समासे उत्तरपदे दीर्घे दसशब्दस्य रादेशे अट्ठार, तदभावे अट्ठारस। अष्टादश इत्यर्थः। दुशब्दस्य बादेशेऽनेन दसशब्दस्य रादेशे बार, तदभावे बारस। द्वादश इत्यर्थः।

## अट्ठस्याडस्तालतालीसयोः ।४।४।५१॥

अट्ठशब्दस्याडादेशः स्यात्तालतालीसशब्दयोः परयोः। अडयाल, अडयालीस।

अट्ठस्येति—तालतालीसौ च चत्तालीसस्थानिकौ। अट्ठस्य स्थाने अडादेशे अडयाल, अडयालीस। अष्टचत्वारिंशदित्यर्थः।

## एकस्योने ।३।४।७३॥

एकशब्दस्यान्त्यस्य लोपो वा स्यादूनशब्दे परे। एकूण। एगूण, एकोण।

एकस्येति—लोप इत्यस्य वेत्यस्य चानुवृत्तिः। एकेन ऊण एकूण। एकशब्दोत्तराकारस्य लोपः। ककारस्य गकारे एगूण। लोपाभावे वृद्धौ एकोण।

## एकोनस्याउण ।४।४।४६॥

एकोनशब्दस्याउणादेशो वा स्यात्सङ्ख्यावाचकोत्तरपदे परे। अउणवीस, एकूणवीस, एगूणवीस, एकोणवीस, एगोणवीस।

एकोनस्येति—सङ्ख्यार्थके, उत्तरपदे, वा इति पदत्रयमनुवर्त्तते। अउणवीस, एकूणवीस, एगूणवीस। इत्यादि। एकोनविंशतिरित्यर्थः। एकोनशब्दस्यान नाउणादेशो भवति विकल्पेन। अयञ्चादेश ऊनशब्दे परे एकशब्दोत्तराकारस्य लोपेऽसति सति वा भवति। कस्मिन्नपि पक्षे नो दोषः।

## आभीक्ष्ण्यवीप्सयोः पदस्य ।३।३।१८॥

आभीक्ष्ण्ये वीप्सायाञ्च द्योत्ये पदस्य द्वित्वं स्यात्। गच्छइ गच्छइ। किवा किवा। गामो गामो रमणीयो। साहु साहु नमइ। थव थक।

## ट्ठि पणात् ।४।४।१७॥

पणशब्दात्परस्य सट्ठिशब्दस्य ट्ठि इत्यादेशो वा स्यात् । पण्णट्ठि । पण्णसट्ठि ।

ट्ठिरिति—वेत्यस्य सट्ठेरित्यस्य चानुवृत्तिः । पणशब्दस्य षष्टिपदेन समासे पणशब्दस्योपधाया द्वित्वे सट्ठिशब्दस्य ट्ठि इत्यादेशे पण्णट्ठि, आदेशाभावे पण्णसट्ठि । पञ्चषष्टिरित्यर्थः ।

## सट्ठेर्वा ।४।४।१६॥

उत्तरपदस्य सट्ठिशब्दस्यादेर्वकारो वा स्यात् । छावट्ठि, छासट्ठि । छायालीस । अट्ठावण्ण । अट्ठावय ।

सट्ठेरिति—उत्तरपदस्य आदेः व इति पदत्रयमनुवर्त्तते । छसट्ठिशब्दयोः पूर्ववत्समासे छशब्दस्य दीर्घेऽनेन सट्ठिशब्दस्यादेर्वकारे छावट्ठि । वकाराभावे तु छासट्ठि । छायालीस इत्युपलक्षणं छायाल, छायाली इत्यपि बोध्यम् । अट्ठ पदाणि जत्थ त अट्ठावय । अत्र दीर्घे विशेष पकारस्य वकारो दकारस्य यकारस्तु सिद्ध एव । छावट्ठि, छासट्ठि । षट्षष्टिः । छायालीस । षट्चत्वारिंशत् । अट्ठावण्ण । अष्टपञ्चाशत् । अट्ठावय अष्टापद ।

## छस्य सो ।४।४।४२॥

छशब्दस्य सो इत्यादेशः स्याद्दसशब्दे परे । सोलस । छलसीइ ।

छस्येति—दसे इत्यनुवर्त्तते । अनेकवर्णत्वात् सर्वादेशः । छशब्ददसशब्दयोः समासे छशब्दस्य सो इत्यादेशे दसशब्दस्य दकारस्य लकारादेशे सोलस । षोडश इत्यर्थः । छलशब्दोऽपि षड्वाचकोऽस्ति । तेन सह असीइशब्दस्य समासे स्वरयोरव्यवधानेऽन्यतरस्य लोपे छलसीइ । षडशीतिरित्यर्थः । परञ्च छलशब्देन सह समासः क्वाचित्कः ।

## सीस्तालादौ सत्तस्य ।४।४।५०॥

सत्तशब्दस्य सी इत्यादेशः स्यात्तालादिशब्दे परे । सीयाल, सीयालीस ।

सीरिति—आदिपदेन तालीतालीसशब्दग्रहणम् । उदाहरणमाह सीयालीस । चत्तालीसस्य तालतालीतालीसादेशा भवन्तीति न विस्मर्त्तव्यम् । तालीपरे तु सीयाली । तकारस्य यकारः ।

गच्छागच्छादेरिति—प्रत्यय इत्यनुवर्त्तते । अनिर्दिष्टार्था प्रत्यया स्वार्थे भवन्तीति न्यायात्स्वार्थ एव डिप्रत्यय । समासवद्भावविधानेनोत्तरपदपरकदीर्घे गच्छागच्छि इत्यादि । समासवद्विधानेनैव पूर्वपदस्यान्त्यस्यौकारे दिसोदिसिं । परोप्पर इत्यत्रोत्तरपदादेर्द्वित्वञ्च । गच्छागच्छि । गुल्मागुल्मि । खण्डाखण्डि । दिग्दिग् । परस्पर । इति क्रमशोऽर्थ ।

## अन्नादेर्वा ।४।४।६३॥

अन्नप्रकृतिकसुबन्तस्य द्वित्वे समासवद्भावो वा स्यात् । अन्नोन्न, अन्नमन्न ।

अन्नादेरिति—समासवत् द्वित्वे इत्युभयोरनुवृत्ति । समासवद्भावेनौकारे चाकारलोपे अन्नोन्न । तदभावे अन्नमन्न । अन्योऽन्यमित्यर्थ ।

## कोडेरेरात् ।४।४।६४॥

कोडिप्रकृतिकसुबन्तस्य द्वित्वे पूर्वपदस्येकारस्याकार' स्यात् । कोडाकोडी ।

कोडेरिति—द्वित्व इत्यनुवर्त्तते । समासवद्भावे इकारस्याकारे च कोडाकोडी । कोटिकोटिरित्यर्थ ।

इति तत्पुरुष समास ।

---

# अथ बहुव्रीहिसमासप्रकरणम् ।



## अनेक प्रथमान्तमन्यपदार्थे बहुव्रीहि ।१।१।७४॥

अनेक प्रथमान्तमन्यपदस्यार्थे वर्त्तमान समस्यते स समासो बहुव्रीहिसञ्ज्ञक' स्यात् ।

अनेकमिति—समास इत्यनुवर्त्तते । अनेकमित्युपादानादेव बहुपदेऽपि समासो भवति । तत्र सुब्नित्यस्यानुवृत्तावपि सुपेत्यस्य नानुवृत्ति । तथा सत्यनेक प्रथमान्त सुबन्तेन समस्यत इत्यर्थे पदद्वयकसमासो न स्यात् । पीत अम्बर जस्सेति विग्रहेऽनेकपदेन पदद्वयग्रहणे तृतीयान्तेन सुपा इत्यनेन ग्रहणीयपदाभावात् । पदार्थोपादानान्न वीरो पुरिसो जो इति विग्रहे समास । प्रथमाया

आभीक्ष्ण्येति—द्विरित्यनुवर्त्तते। आभीक्ष्ण्य क्रियाधर्मस्तेन क्रियाप्रधानमेवोदाहरण युक्तम्। क्रियाप्राधान्यञ्चाख्यातेऽव्ययसञ्ज्ञककृन्ते च। अतएव तथैव मूले उदाहरण ददाति गच्छईत्यादि। वीप्सा तु तदन्यत्रात एव तथैवोदाहरति गामो इत्यादि। गच्छति गच्छति। ग्रामो ग्रामो रमणीय। साधु साधु नमति। स्थित स्थितम्। इत्यर्थ।

## द्वित्वे दडादीना पूर्वपदस्थायास्तृतीयाया मः ।४।४।६१॥

दडादिप्रकृतिकसुबन्ताना द्वित्वे पूर्वपदस्थतृतीयाया मादेशः स्यात्। दड दडेण। वामवामेण। जीवजीवेण। उरउरेण। सुहसुहेण। मज्झमज्झेण। मासमासेण।

द्वित्व इति—पदस्य द्वित्वविधानेन दडादीना द्वित्वे इत्युपादानमसङ्गत स्यादत आह दडादिप्रकृतिकेति। तथा च दडादिपदस्य दडादिप्रकृतिके लक्षणा अन्यपदार्थबोधकस्य पदस्येत्यस्यानुवृत्त्या वचनविपरिणामेनान्वयो भवति। पदञ्चात्र सुबन्तमेवेत्यत आह सुबन्तानामिति। दडप्रकृतिकतृतीयान्तस्य द्वित्वे दडेण दडेणेति स्थिते पूर्वपदस्य तृतीयाया मादेशे दडदडेण। दण्डदण्डेनेत्यर्थ। तृतीयार्थस्तु तत्तत्प्रकरणवशान्निर्णेय। वामवामेणमित्यादीना वामवामेन। जीवजीवेन। उरउरसा। सुखसुखेन। मध्यमध्येन। मासमासेन। इत्यादयोऽर्था क्रमेण ज्ञेया।

## गच्छादीनां समासवत् ।४।४।६२॥

गच्छादिप्रकृतिकसुबन्ताना द्वित्वे समासवद्भाव स्यात्। दवदव। दवदवस्स।

गच्छादीनामिति—पूर्ववद्गच्छादिप्रकृतिकसुबन्तानामित्यर्थो बोध्य। द्वित्वे इत्यनुवर्त्तते। दवप्रकृतिकसुबन्तस्य द्वित्वे दव दव इति स्थितेऽनेन समासवद्भावे पूर्वविभक्तेर्लोपे द्वितीयैकवचने दवदव (क्रियाविशेषणात् क्वचित् षष्ठ्यपि) इति वार्त्तिकेन षष्ठ्या मत्वा दवदवस। पूर्वं गच्छस्योपादानेऽपि तत्र सूत्रान्तरस्याप्यावश्यकत्वेनानावश्यकसूत्रान्तरप्रयोगमेव तद्गणान्तर्गतमुदाहृतम्। द्रुत द्रुतमित्यर्थ।

## गच्छागच्छादेर्डि. ।१।४।४९॥

गच्छागच्छादेर्डि' प्रत्यय स्यात्। गच्छागच्छि। गुम्मागुम्मि। खडाखडि। दिसोदिसिं। परोप्पर।

विधाने उत्तरपुरस्थिमिका । सपुत्तको इत्याद्यापद्येत । अतोऽनेकमितीत्युक्तम् । तथा चानेक प्रथमान्तमित्यनेन विहितसमासादेव क प्रत्ययो भवति नान्यस्मात्।

## इत्केऽप्यतः ।४।४।६६॥

अत इकारो वा स्यादप्परके कपरे । सत्तसत्तमिया भिक्खुपडिमा ।

इत्क इति—वेत्यनुवर्त्तते । अत किम् । पुज्जगुरुका इत्यादावुकारस्येकारो माभूत् । इकारस्येकारभवनेऽभवने वा हानेरभावादुकारघटित प्रत्युदाहरण प्रदत्तम् । सत्त सत्तमा जाओ सा सत्तसत्तमिया । बहुव्रीहिसमासे कप्रत्यय इकार । सप्तसप्तमिका भिक्षुप्रतिमेत्यर्थ ।

## दिग्वाचका मध्ये ।१।१।७५॥

दिग्वाचकाः शब्दा मध्ये वाच्ये समस्यन्ते । उत्तरपुरत्थिमा ।

दिग्वाचका इति—बहुव्रीहि समास इति पदद्वयमनुवर्त्तते । दिशयोरेवान्तरालो मध्यशब्देन गृह्यते प्रत्यासत्त्या । उत्तराए पुरत्थिमाए चान्तराल जा दिसा सा उत्तरपुरत्थिमा । उत्तरपूर्वेत्यर्थ. ।

## सहस्तृतीयया ।१।१।७६॥

सहशब्दस्तृतीयान्तेन समस्यते ।

सह इति—बहुव्रीहि समास इति पदद्वयस्यानुवृत्ति ।

## सहसमानयोः स ।४।४।३७॥

अनयो' सादेशो वा स्यात् समासे । सअर्ड । सअतो । सअट्ठो । सपुत्तो ।

सहसमानयोरिति—उत्तरपदे वा इति पदद्वयमनुवर्त्तते । समासे इति किम् ? पुत्तेण सहेति वाक्ये मा भूत् । अडेण सहेति विग्रहे समासेऽनेन सहशब्दस्य सादेशे प्रकृतिभावे सअड । अतेण सह सअतो । अट्ठेण सह सअट्ठो । सार्थ इत्यर्थ । पुत्तेण सह सपुत्तो । समानशब्दस्य तु साहिकरणमुदाहर्त्तव्यम् । सामानाधिकरण्य तदर्थ । समान अहिकरण जस्सत्ति विग्रहे समास । समान अहिकरण इति कर्मधारयो वा । अत्र सूत्रे बहुव्रीहिपदाननुवृत्तेरन्यत्रापि सादेश ।

## इ सात्पक्खस्य वा ।४।४।६॥

सात्परस्य पक्खशब्दस्येकारोऽन्तादेशो वा स्यात् । सपक्खि सपक्खो ।

प्रातिपदिकार्थमात्रे विधानात्पञ्चम्यर्थस्याभावात् । बहुव्रीहिसमासो द्विविध । तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्चेति । तस्यान्यपदार्थस्य गुणा विशेषणानि समस्यमानपदार्थास्तेषां कार्यान्वयितया संविज्ञानं यत्र स तद्गुणसंविज्ञान इत्यक्षरार्थः । तद्भिन्नोऽतद्गुणसंविज्ञानः । तथा चान्यपदार्थान्वयिनि अन्य पदार्थविशेषणस्यान्वयबोधनात् समासस्तद्गुणसंविज्ञान इति सिद्धम् । यथा हारम्गीव पासेत्यत्र तादृशपुरुषस्य दर्शनकर्मत्वेऽन्वये हारस्याप्यन्वयो भवति । न भवति च जानपुत्त आणेहि इत्यत्र पितुरानयनकर्मत्वेऽन्वये पुत्रस्यान्वय इति अतद्गुणसंविज्ञानोऽयम् ।

## बहुव्रीहौ सख्यातेतससम्यन्तविशेषणानि ।४।४।६०॥

बहुव्रीहिसमासे सख्यावाचकस्तान्त इतान्त सप्तम्यन्ते विशेषणानि च पूर्वं प्रयोज्यानि । उदिण्णबलवाहणे । पपण्णो । अपुत्तो । सुवण्णालङ्कारो । कंठेगुणो ।

बहुव्रीहाविति—पूर्वमित्यनुवर्त्तते । सप्तम्यन्तेति—प्रामाणिकप्रयोगानुरोधाद् व्यधिकरणबहुव्रीहेरप्यगत्या स्वीकरणीयतया सप्तम्यन्त समस्यमानपद सम्भवति । ननु व्यधिकरणबहुव्रीहेः स्वीकारेऽपि येन सूत्रेण तादृश समास स्यात् सामान्यसूत्रेण तु न प्राप्तिरस्ति कंठे गुणो इत्यादावनेकप्रथमान्तस्याभावादिति चेन्न, प्रतिलक्ष्य लक्षणोपप्लवेन व्यधिकरणस्थल आवर्त्तमानस्य समासविधायकस्य सूत्रस्य प्रथमान्तमिति पदस्य सुबन्तमात्रपरत्वेन समास सम्भवात् । प्रामाणिकप्रयोगानुसारेण तथा कल्पनेऽपि न स्वकपोलकल्पित प्रयोगाय तथा कल्पनम् । उदिण्णाणि बलवाहणाणि जस्सेति विग्रहे समासे उदिण्णबलवाहणे । उदीर्णबलवाहन इत्यर्थ । पपतितो पण्णो जस्सेति विग्रहे बहुव्रीहिसमासे मध्यमपदलोपे पपण्णो । अविज्जमाणो पुत्तो जस्सेति विग्रहे समासे विज्जमाणशब्दस्य लोपे अपुत्तो । सुवण्णविकारो अलंकारो जस्स स सुवण्णालंकारो । अत्र विकारपदस्य लोप । अथवा सुवण्णपदस्य सुवण्ण विकारे लक्षणा । कंठे गुणो जस्सेति विग्रहे व्यधिकरणपदबहुव्रीहिः ।

## अनेकमिति विहितात् को वा ।१।४।४८॥

अनेकं प्रथमान्तमित्यादिसूत्रेण विहितो यः समासस्तस्माद् क प्रत्ययो वा स्यात् ।

अनेकमितीति—प्रत्यय इत्यनुवर्त्तते । सामान्यतो बहुव्रीहेः कप्रत्यय

ईरिति—ई' उद्धस्येति पदद्वयम् । वा इत्यस्यानुवृत्ति । उद्ध मुह जस्सेति विग्रहे समासेऽनेनेकारे उद्धीमुहो। पक्षे उद्धमुहो ।

## तुमुमो' काममणयोः ।३।४।७५॥

अनयोरन्त्यस्य लोपो वा स्यात् काममणशब्दयोः परयोः । काउकामो, काउंकामो । गतुकामो, गंतुकामो । सपाविउकामो, सपाविउंकामो । एवं मणशब्देऽपि ।

तुमुमोरिति—लोप इति वेति चानुवर्तते । काउ कामो जस्सेति विग्रहे समासे काउम्+काम इति स्थितेऽनेन मकारलोपे काउकामो । गतु कामो जस्सेति विग्रहे गतुकामो । एवमग्रेऽपि । एव मणशब्देऽपि इति काउमणो, काउमणो । गतुमणो, गतुमणो । इत्यादि । काउकामो इत्यस्य कर्तुकाम इत्यर्थ । गतुकामो इत्यस्य गन्तुकाम इत्यर्थ । काउमणो इत्यस्य कर्तुमना इत्यर्थ । सपाविउकामो इत्यस्य सम्प्राप्तुकाम ।

## नखपदस्य नप्फय. सात् ।४।४।१२॥

सात्परस्य नखपदशब्दस्य नप्फयादेशो वा स्यात् । सणप्फए । सणखपदो ।

नखपदस्येति—वेत्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । णखपदेन सह इति विग्रहे समासे सहस्य सादेशेऽनेन नप्फयादेशे सणप्फए । तदभावे सणखपदो ।

## ओदणादारपारादेर्वा ।३।३।७०॥

अणशब्दात्परस्यारपारादेरादेरोकारो वा स्यात् । अणोरपारे । अणारपारे । अणोवदग्गे, अणवदग्गे ।

ओदिति—आदेरित्यस्य चानुवृत्ति । ओद् अणात् आरपारादेरिति पदत्रयम् । तकारोच्चारणमसन्देहार्थम् । ण आर पार जस्स स अणोरपारे । अणात् परस्यारपारशब्दस्यादेरोकार । ण अवदग्गमन्त जस्स सो अणोवदग्गो । अत्राणात् परस्यावदग्गशब्दस्यादेरोकार ।

## सरिसस्य तयावययो ।३।४।७४॥

सरिसस्यान्त्यस्य लोपो वा स्यात्तयावयशब्दयो परयो. । सरित्तया, सरिसतया । सरिव्वया, सरिसवया ।

इरिति—पञ्चमेण सहेति विग्रहे समासे मादेशेऽनेन पक्खश-दरयान्तत्वे-कारे "इकारान्ता दिरयान्य" इत्यनेनान्ययने सपक्खिय । तदभावे सपक्खो ।

## इमात्सन्धौ प्रथमाया ।४।१।३४॥

इमशब्दात् सन्धिशब्दे परे प्रथमाया लोपो न स्यात् । अयमधी ।

इमादिति—न लोप इति पदद्वयस्यानुवृत्ति । प्रथमाया लोपे सति इम मधीति स्यात् । लोपाभावे तु तत्कार्यस्याप्यनिवृत्त्या अयमधीति सिध्यति । अयं सधी जस्सेति विग्रह । यथासमय पापकारी अयमधीति शब्दनोच्यते ।

## एयारूवे वा ।४।१।३५॥

इमशब्दादेयारूवशब्दे परे प्रथमाया अलोपो वा स्यात् । अयमेयारूवे, इमेयारूवे ।

एयारूव इति—इमात् प्रथमाया न लोप इत्येतेषामनुवृत्ति । प्रथमाया अलोपे अयमेयारूवे । लोपे तु इमेयारूव ।

## अधोरवधेर्धि ।४।४।१०॥

अधोशब्दात्परस्यानधिशब्दस्य धिरादेशो वा स्यात् । अधोही, अधोधी, अधोवधी ।

अधोरिति—वेत्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । अधोही । अधो अवधी जस्सेति विग्रहे बहुव्रीहिसमासे ध्यादेशे धकारस्य हकारे अधोही, धकाराभावे अधोधी, तदभावे अधोवधी । अवधिज्ञानविशेष इत्यर्थ ।

## आमोसादोसहेर्हि ।४।४।८॥

आमोसशब्दात्परस्यौसहिशब्दस्य हि इत्यादेशो वा स्यात् । आमोसही, आमोसोसही ।

आमोसेति—वेत्यनुवर्त्तते । आमोसात् ओसहे हि इति पदत्रयम । अनेकवर्णत्वात्सर्वादेश । आमोसो ओसही जस्सेति विग्रहे समासेऽनेनौसहिशब्दस्य हि इत्यादेशे आमोसही । आदेशाभावे आमोसोसही आमर्षौषधिरित्यर्थ । आमर्ष हस्तादिस्पर्श ।

## ईरुद्धस्य मुहे ।४।४।२४॥

उद्धशब्दस्य ईकारोन्तादेशो वा स्यान्मुहशब्दे परे । उद्धीमुहो, उद्धमुहो ।

विइदिया । तदभावे दुइदिया । द्वीन्द्रिया इत्यर्थः । दोण्णि दलाणि जस्स इति विग्रहे समासेऽनेन बे इत्यादेशे बेदल, वि इत्यादेशे विदल, तदभावे दुदल, द्विदलमित्यर्थः । दुवे सरीराणि जस्सेति विग्रहे समासे बे इत्यादेशे बेसरीर । वि इत्यादेशे विसरीर, तदभावे दुसरीर । द्विशरीरमित्यर्थः ।

## चतोरतः ।३।२।४६॥

चतुशब्दाकारस्य दीर्घो वा स्यादुत्तरपदे । चाउक्कोण्ण, चाउकोण । चउक्कोण, चउकोण ।

चतोरिति—वा उत्तरपदे दीर्घ इति च पदत्रयमनुवर्त्तते । चत्तारि कोणाणि जस्सेति विग्रहे समासे चउसम्बन्धिनोऽकारस्य दीर्घे चाउक्कोण उत्तरपदादेर्द्वित्वम् । द्वित्वाभावे चाउकोण । दीर्घाभावेऽपि वैकल्पिकद्वित्वेन रूपद्वयमाह चउक्कोण इत्यादि । चतुष्कोणमित्यर्थः ।

## संख्यादयः संख्यया ।१।१।७७॥

सङ्ख्यादयः शब्दाः सङ्ख्यावाचकेन समस्यन्ते । उवदसा आसन्नवीसा । दुदसा ।

सङ्ख्यादय इति—समासः बहुव्रीहिः इति पदद्वयस्यानुवृत्तिः । सङ्ख्यादयः सङ्ख्यावाचकादय इत्यर्थः । एवमग्रेऽपि सङ्ख्यया इत्यस्य सङ्ख्यावाचकेनेत्यर्थः । सामानाधिकरण्यस्यान्यपदार्थस्य चाभावात् पूर्वसूत्रेण समासाप्राप्तौ वचनम् । दसएह समीपे जे सन्ति ते उवदसा । उपदशाः नव एकादश वेत्यर्थः । अत्र समीपार्थकोवशब्देन दसशब्दस्य समासः । वीसाए आसन्ना आसन्नवीसा आसन्न विंशतिरित्यर्थः । दु आवित्ता दस दुदसा । अनेन च सङ्ख्येयार्थसङ्ख्यावाचकशब्देनैव समासः । अतएव तिथकराण विंसई इति विग्रहे न समासः ।

## तेश्चओश्चउरोर्बहुव्रीहौ ।४।४।४४॥

तेः परस्य चउशब्दस्य चउरो इत्यादेशः स्याद्बहुव्रीहौ । तिचउरो ।

तेश्चेति—ते चओ चउरो बहुव्रीहौ इति च्छेदः । तओ वा चउरो वा तिचउरो । त्रिचतुरा इत्यर्थः ।

इति बहुव्रीहिः ।

---

सरिमस्येति—लोप वा इति पदद्वयमनुवर्तते । सरिमा सया जस्सेति विग्रहे समासेऽनेन लोपे पकारवर्णेऽलम्य इस्वे बहुवचने सरिसया सदृक्त्वधावित्यर्थः । एवमग्रेऽपि । सरिच्चया इत्यस्य सदृग्वयसावित्यर्थः ।

## उत्तरपदस्याच्छेर ।४।४।१॥

उत्तरपदभूतस्याच्छिशब्दस्याकारोऽन्त्यादेश स्यात् । हरिमेलाम-उलमछियच्छाए ।

उत्तरपदस्येति—उत्तरपदस्येति किम् । अच्छी इत्यादौ माभूत् । अच्छ अ इति पदद्वयम् । हरिमेलाम–इत्यादेर्हरिमेलामुकुलमक्षिकाभाणामित्यर्थः ।

## अड्ढाइज्जाद्धुट्ठदिवड्ढा सार्द्धद्वयत्रयेकेषु ।१।४।५०॥

अड्ढाइज्जअद्धुट्ठदिवड्ढा सार्द्धद्वयसार्द्धत्रयसार्द्धेकेषु निपात्यन्ते । अड्ढाइज्ज । अद्धुट्ठ । दिवड्ढ ।

अड्ढेति—द्वयञ्च त्रयञ्चैकञ्च द्वयत्रयैका अर्द्धेन सह सार्द्धा । सार्द्धाश्च द्वयत्रयैकाश्चेति सार्द्धद्वयत्रयैकास्तेषु सार्द्धद्वयत्रयैकेषु । द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाण शब्दो लभते प्रत्येकसम्बन्धमिति न्यायेन द्वन्द्वस्यादौ श्रूयमाणस्य सार्द्धशब्दस्य द्वये त्रये एके चान्वयेन सार्द्धद्वयसार्द्धत्रयसार्द्धेकेष्विति लभ्यते । तत्र यथासख्यमन्वयेन अड्ढाइज्ज सार्द्धद्वये अद्धुट्ठ सार्द्धत्रये दिवड्ढ च सार्द्धैके निपात्यत इति लब्धम । सार्द्धद्वयम् । सार्द्धत्रयम । सार्द्धैकमिति क्रमेणार्थः ।

## असौ पस्य फ ।२।२।७१॥

पोपसर्गस्यादेः फो वा स्यादसुशब्दे परे । फासुओ । फासुगो ।

असाविति—आदेरिति वेति चानुवर्त्तते । पगता असवो जस्सेति विग्रहे समासे कप्रत्यये उपसर्गस्यादे पकारे फकारस्य यकारे तस्य लोपे प्रकृतिभावे फासुओ, पासुओ । प्रासुकमित्यर्थः । एवमग्रेऽपि ।

## दोर्वेवी ।४।४।२९॥

दुशब्दस्य वेवि इत्येतावादेशौ वा स्त उत्तरपदे परे । वेइंदिया । विइंदिया । बिदल । बिसरीर ।

दोरिति—उत्तरपदे वा इति च पदद्वयमनुवर्त्तते । दोण्णि इंदियाणि जस्सेति विग्रहे समासेऽनेन दुशब्दस्य वे इत्यादेशे वेइंदिया । वि इत्यादेशे

आणादिति—चेत्यस्यानुवृत्ति । सामान्यतो विधानात्समासमात्रे बोध्यम् । समासे सत्यनेनोत्तरपदस्य पाणस्योकारान्तादेशे आणापाणू । खण्डादित्वात्पूर्ववदन्त्यस्य दीर्घ । आणापाणू इत्यस्य आनपान इत्यर्थ ।

इति द्वन्द्व ।

---

# अथ तद्धितप्रकरणम् ।

## वा तद्धितः प्रथमात् कृतसन्धेः ।१।३।१॥

अधिकारोऽयम् ।

वा तद्धित इति—पदचतुष्टयमधिक्रियते । तेभ्य प्रयोगेभ्यो हितस्तद्धित इत्यन्वर्थसञ्ज्ञाश्रयणाय महासञ्ज्ञाकरणम् । तेन यथाप्रयोगमेव स्युरिति लभ्यते ।

## अदणिकेकणिज्ञेज्ञणियेयणिमेल्लकमेत्ता ।१।३।२॥

अत् अण् इक इकण् इञ्ञ इञ्ञण् इय इयण् इम इल्ल क मेत्त इत्येते प्रत्यया वक्ष्यमाणेष्वर्थेषु यथाप्रयोग स्युः ।

अदणीति—इदञ्च न विधायक तत्तत्सूत्रवैयर्थ्यापत्ते । सामान्यतया विधानेऽर्थविशेषभानानुपपत्तेश्च । किन्त्वधिकारसूत्रम् । तथा च यत्र सूत्रे प्रत्ययविशेषोपादान तत्र चकारादियत्न विना न सम्बध्यते । यत्रापि च सम्बध्यते तत्र सर्वत्र सर्वप्रत्ययस्य न विधान किन्तु यथाप्रयोगम् ।

## तद्धितेषु स्वरादेर्डिद्वद्बहुलम् ।२।४।६३॥

तद्धितेषु वर्त्तमान' स्वरादि॰ प्रत्ययो डिद्वद्बहुलम् । अचान्तिय । बहुलग्रहणात् क्वचिन्न । गङ्गेयो भाइणिज्जो भाइणेज्जो । बद्देल्लगो । मुक्केल्लगो ।

तद्धितेष्विति—प्रत्यय इति विशेषणबलाल्लभ्यते । वर्त्तमान इति शेष । स्वर आदिर्यस्य स स्वरादि प्रत्यय इत्यन्यपदार्थ । डिद्वद्भावविधानेन स्वरादौ

# अथ द्वन्द्वसमासप्रकरणम् ।

---

## समाहारेतरेतरयोगयोर्द्वन्द्वः ।१।१।७८॥

समाहारे इतरेतरयोगे च वर्त्तमानमनेकसुबन्तं समस्यते स द्वन्द्वसंज्ञः स्यात् ।
पिज्जदोसा । सीउण्ह, सीउसिणं । मणिकुंडलं । दासपोरुसं । राइदियं ।
अहोनिसं । अहोनिसिं ।

समाहारे इति—समास इत्यनुवर्त्तते । समाहारः समूहः । इतरेतरयोगश्च मिलितानामन्वयः । एवञ्च यथा बहुव्रीहिघटकपदानां कर्मादयन्तर्भावेनैवैकार्थीभावस्तथा साहित्यान्तर्भावेनैवैकार्थीभावः । परन्तु इतरेतरयोगे साहित्यं विशेषणं द्रव्यं विशेष्यम् । समाहारे च साहित्यं विशेष्यं द्रव्यं विशेषणम् । अतएव समाहाररूपसाहित्यस्यैकत्वेन तद्गतैकत्वमादायैकवचनमेव भवति । न च बुद्धिविशेषविषयत्वमेव समाहारस्तस्य विशेष्यत्वे तद्वादनासम्भवेन भेरीमृदङ्गं वादयेति न स्यादिति वाच्यम् । स्वाश्रयवृत्तित्वसम्बन्धेन वादनकर्मत्वे समाहारस्यान्वयसम्भवात् । स्वपदेन समाहारः तदाश्रयो भेर्यादिस्तद्वृत्तित्वस्य कर्मत्वे सत्त्वेन स्वार्थस्यान्वयसम्भवात् । अनेकं सुप् समास इत्येतेषामनुवृत्तिः । सुपा इति च नानुवर्त्तते । तथा सति अनेकं सुबन्तं सुबन्तेनेत्यर्थे द्विपदकद्वन्द्वसमासो न स्यात् किन्तु पदत्रयक एव स्यात् । द्वन्द्वे लिङ्गञ्च परपदस्यैव बोध्यम् । पिज्जो य दोसो य पिज्जदोसा । सीतं य उण्हं येति समाहारद्वन्द्वे तकारस्य यकारे लोपेऽकारस्य लोपे च प्रकृतिभावे सीउण्हं । उसिणशब्देन समासे सीउसिणं । उण्होसिणशब्दौ उष्णवाचकौ । गवो य आसो येति समासे गवासं । मणी य कुंडलं यत्ति विग्रहे समासे मणिकुंडलं । दासो य पोरुसो य दासपोरुसं । राइदियं इत्यत्र समासे सति जहण्णादित्वान्मगागमः । उत्तरस्याकारस्य तु समाहारे नपुंसकत्वेन तथैव ह्रस्वत्वम् । अहन्निसाशब्दयोः समासे जसादित्वादोकारे पूर्ववद्ध्रस्वः । निसिशब्देन समासे तु अहोनिसिं । पिज्जदोसा=प्रेमद्वेषौ । सीउण्हं, सीउसिणं=शीतोष्णम् । राइदियं=रात्रिंदिवम् । अहोनिसिं=अहर्निशम् ।

## आणात्पाणस्योत् ।४।४।७॥

आणात्परस्य पाणशब्दस्योकारान्तादेशो वा स्यात् । आणापाणू । आणापाणो ।

छादिति—यत्र च विशिष्य प्रकृतिमुद्दिश्य प्रत्यय उक्तस्तत्र न सामान्यप्रत्ययाना गमनमसति प्रयत्ने । अतएव पट्वाचकछशब्दाच् ष्लौ द्वावेव भवत । एवमेवाग्रेऽपि । छष छलमित्युभयो पट्कमित्यर्थ ।

## महादालयल्लल्लिया: ।१।४।२६॥

महशब्दादालयल्लल्लियप्रत्यया: स्वार्थे स्यु: । महालओ, महल्लो, महल्लओ, महल्लगो, महल्लको, महल्लिओ ।

महादिति—नाम्न इत्यस्य प्रत्यय इत्यस्य चानुवृत्ति । आलयश्च ल्लश्च ल्लियश्चेतीतरेतरयोगद्वन्द्व । आलयप्रत्यये महालओ । ल्लप्रत्यये महल्लो । ल्लप्रत्ययान्तात्के गकारे यकारे लोपे प्रकृतिभावे महल्लओ, यकारस्य लोपाभावे महल्लयो, यकाराभावे महल्लगो, गकाराभावे महल्लको । कपरे इकारे तु महल्लिओ । महत्क इत्यर्थ ।

## पोत्तादुल्ल: ।१।४।२७॥

पोत्तशब्दादुल्लप्रत्यय: स्यात् स्वार्थे । पोत्तुल्लओ ।

पोत्तादिति—नाम्न प्रत्यय इति द्वयमनुवर्त्तते । पुत्तस्सापत्तमित्यर्थे पुत्तशब्दादणि कृते आदिस्वरवृद्धौ पोत्तो । पोत्तो एव पोत्तुल्लओ । अत्रोल्लप्रत्यये सति कप्रत्यय । तद्धितेति महासञ्ज्ञाकरणादनुक्तस्यापि प्रत्ययस्य कल्पने तु पुत्तस्स अपत्त इति विग्रहेऽपत्यार्थे उल्लप्रत्यये कप्रत्यय । तथा च महासञ्ज्ञया (पुत्तादुल्लण् च) इति वार्त्तिकोऽनुमीयते । अण्प्रत्यये पोत्तो । उल्लप्रत्यये पोत्तुल्लो । स्वार्थिक कप्रत्यये पोत्तओ, पोत्तुल्लओ । पौत्रक इत्यर्थ ।

## मडस्य म इल्ले ।४।४।८५॥

मडशब्दस्य म इत्यादेश स्यादिल्ले परे । मइल्लिओ ।

मडस्येति—अनेकवर्णत्वात्सर्वादेश । मृतार्थकमडशब्दस्येल्ले परे मादेशे प्रकृतिभावे मइल्लिओ । कप्रत्यये परे इकार । तदभावे मइल्लओ । कप्रत्ययाभावे तु मइल्लो । स्वार्थिकाभावे तु मडो । मृतक इत्यर्थ ।

## पढमादिल्लु॰ ।१।४।२९॥

पढमशब्दात्स्वार्थे इल्लु॰ प्रत्यय' स्यात् । पढमिल्लुए ।

प्रत्यये परे टेर्लोपो भवति । माउलकात् षष्मिप्र । यथा गगेयो इत्यादि । भाइ णिज्जो इत्यत्र तु संयुक्ते ह्रस्वे योध्य । गगेय इत्यादीना गाङ्गेय । भागिनेय । बद्धक । मुक्तय । इत्यादयोऽर्थाः क्रमशोऽनुसन्धेयाः ।

## स्वराणामादेः ।३।२।१८।।

णिति प्रत्यये परे स्वराणा मध्ये आदेः स्वरस्य वृद्धिः स्यात् । आलकारिए । आभियोगिए । आभिग्गहिए ।

स्वराणामिति—वृद्धिरित्यस्य णितीत्यस्य चानुवृत्ति । स्वराणामित्यत्र निर्धारणे षष्ठी । अतएवाह स्वराणा मध्य इति । स्वराणा मध्ये य आदि स्वरस्तस्येत्यर्थ । यदि केवल णिति परे आदे स्वरस्य वृद्धिरित्यर्थ स्यात्तदा आलङ्कारिए इत्यादौ सिद्धावपि पोमीतयादौ वृद्धिर्न स्यादादे स्वरत्वाभावात् स्वरस्य चादित्वाभावात् । एव कृते तु स्वराणा मध्ये आदिस्वरत्वस्योकारादौ सत्त्वेन वृद्धि सिद्धयति । अलङ्कारमर्हति, अभियोगमर्हति, अभिग्रहमर्हती त्यर्थे 'इयण्' प्रत्यय आलंकारिए=आलङ्कारिक । आभियोगिए=आभियोगिक । आभिग्गहिए=आभिग्रहिक ।

## प्रथमायाश्च ।१।४।६।।

प्रथमान्तात्स्वार्थे उक्ता प्रत्ययाः स्युः । अच्चतिय । जायमेत्त । णियडिल्लया । उत्तरिल्ल । "तद्धितान्तादपि तद्धितान्तरम्" । णियडिल्लया ।

प्रथमाया इति—नाम्न प्रत्यय अदणिकादिश्चानुवर्तते । "अनिर्दिष्टार्था प्रत्यया स्वार्थे भवन्ती"ति परिभाषया स्वार्थ इति लभ्यते । उक्ता अदादयः । तत्र सामान्यसूत्रे सर्वेषा गमनेऽपि न सर्वत्र सर्वेषा विधान भवति किन्तु यथाप्रयोगमेव । एकोक्तयैव तथोक्तम् । अत्यत एव अत्यतिक । स्वार्थिक कप्रत्यय । जातमेव जातमेत्त । अत्र मेत्तप्रत्यय । सयुक्ते ह्रस्वे तु जातमित्त । णियडी एव णियडिल्ला णियडिशब्दादिल्लप्रत्यय । तत कप्रत्यये णियडिल्लया । इत्वस्य वैकल्पिकत्वेन न श्रुति । उत्तरमेव उत्तरिल्ल स्वार्थे इल्ल । अच्चन्तिय=आत्यन्तिकम् । जायमेत्त=जातमात्रम् । णियडिल्लया=निकृतिमत्ता । उत्तरिल्ल=औत्तरेयम् ।

## छाच्चलौ ।१।४।३५।।

छशब्दाच्चलौ प्रत्ययौ स्त । छच्च । छल ।

## अल्पे च ।१।४।९॥

**प्रथमान्तादल्पेऽर्थे उक्तप्रत्यया स्युः । अप्पो अंसो असिया ।**

अल्प इति—नाम्नः प्रथमाया प्रत्यय अदणीत्यादिक चानुवर्त्तते । उक्त-प्रत्यया अदणिके--इत्यादिसूत्रपठिता इत्यर्थ । अप्पो असो असिया । अश-शब्दादियप्रत्यय । कप्रत्यये असओ । असिल्लो । इत्याद्यूह्यम् । असिया=अशिका ।

## इतस्तदस्य सजात पत्तादिभ्यः ।१।३।४६॥

**प्रथमान्तपत्तादिभ्योऽस्य सजातमित्यर्थे इतप्रत्ययः स्यात् । पत्त इमस्स सजात पत्तिय । गब्भिय ।**

इत इति—नाम्न इत्यस्य प्रत्यय इत्यस्य चानुवृत्ति । पत्तादिराकृतिगण । पत्तशब्दादितप्रत्यये यकारे पत्तिय, पत्तित । पत्रितमित्यर्थ । गब्भशब्दादित-प्रत्यये गब्भित । गर्भितमित्यर्थ ।

## द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे तर ।१।४।७॥

**द्वयोरेकस्यातिशये वाच्ये विभज्यमाने चोपपदे तरः प्रत्यय स्यात् । इम, इमेसिं अतिसयेण च्छ, तुच्छतर ।**

द्वयोरिति—नाम्न प्रत्यय इति च द्वयमप्यनुवर्त्तते । अतिशयेर्थे तुच्छ-शब्दात्तर विभज्यमानवाचकमुपपदञ्च न लक्ष्ये किन्तु वाक्ये एव ।

## तरस्येके ।३।२।५०॥

**तरप्रत्ययस्य दीर्घोऽन्तादेशो वा स्यात्कप्रत्यये परे । बहुतराए, बहुतरए । अप्पतराए, अप्पतरए । अब्भहियतराए, अब्भहियतरए । विपुलतराए, विपुलतरए । विसुद्धतराए, विसुद्धतरए ।**

तरस्येति—दीर्घ इति वेति चानुवर्त्तते । बहुशब्दात्तरप्रत्यये तदन्तात्स्वार्थे क प्रत्यये तस्मिन् परे दीर्घे बहुतराए। तदभावे बहुतरए । बहुतरक इत्यर्थ । एवमग्रेऽपि । अप्पतराए=अल्पतरक ।

## धम्मादिभ्य इट्ठः ।१।४।८॥

**अतिशयविशिष्टे वर्त्तमानेभ्यः प्रथमान्तेभ्यो धम्मादिशब्देभ्य इट्ठप्रत्ययः स्यात् । धम्मिट्ठो । अहम्मिट्ठो ।**

पढमादिति—नाम प्रत्यय इति पदद्वयमनुवर्त्तते। प्रथमार्थकपढम शब्दात् स्वार्थे इल्लुप्रत्यये यप्रत्यये पढमिल्लुए। प्रथमक इत्यर्थः।

## एकादणियाकीयका असहाये ।१।४।३०॥

एकात् प्रथमान्तादसहायेऽणिय, अकि, इय, क, इत्येते प्रत्ययाः स्युः। एगाणिए। एगागी। एगिए। एगओ। एगो।

एकादिति—नाम प्रत्यय इति चानुवर्त्तते। अणियश्च अकिश्च इयश्च कश्चेतीतरेतरयोगद्वन्द्वः। असहाये वर्त्तमानादेकशब्दात् स्वार्थे इत्यर्थो बोध्यः। अतएव बहुवचनेऽपि प्रयोगो भवति। यदि सङ्ख्यार्थकादेकशब्दात्स्यात्तदा बहुवचने प्रयोगो न स्यात्। असहायार्थकस्य तु बहुवचनेऽपि प्रयोगसत्त्वेन नानुपपत्तिः। एगशब्दादणि प्रत्यये एगाणिए। अकि प्रत्यये एगागी। इयप्रत्यये एगिए। कप्रत्यये एगओ। तदभावे एगो। एकाकी इत्यर्थः। एवमेकादेरपि बोध्यम्।

## अणेयौ स्त्रियाम् ।१।४।३१॥

एकात्प्रथमान्तादसहाये स्त्रियामणेइयप्रत्ययौ स्तः। एगाणी। एगिया। एगा।

अणेयाविति—नाम प्रत्यय एकादिति पदत्रयमनुवर्त्तते। अणश्चेयश्चेतीतरेतरयोगद्वन्द्वः। समस्तघटकत्वेनैकदेशस्येयमात्रस्यानुवृत्त्यसम्भवात्पुनस्तद्ग्रहणम्। अणप्रत्यये तदन्ताङ्डीप्रत्यये एगाणी। इयप्रत्यये तु एगिया। इयप्रत्ययान्तस्य केवलस्य च गणे पाठाभावान्न ङी। एगिया=एकका।

## एयः सास्मै दीयतेऽस्य देवता ।१।३।४५॥

प्रथमान्तात् 'सास्मै दीयते' 'साऽस्य देवता' इत्यनयोरर्थयोरेयः प्रत्ययः स्यात्। दक्खिणेओ। अग्गेओ।

एय इति—नाम प्रत्यय इति द्वयोरनुवृत्तिः। अधिकारात् प्रथमान्तादिति लभ्यते। तथा च प्रथमान्तादस्मै दीयत इत्यर्थे प्रत्ययो भवति। दक्खिणा इमस्स दिज्जइत्ति दक्खिणेओ। दाक्षिण इत्यर्थः। अत्र दक्खिणाशब्दादेयप्रत्यये टिलोपः। अग्गी देवया इमस्सत्ति अग्गेओ। आग्नेय इत्यर्थः। अग्गिशब्दादेयप्रत्यये टिलोपः।

इत इति—इये इत्यस्यानुवृत्तिः । इयेत्यनेनेयेयणावित्युभौ गृह्येते । पसिणशब्दादियण्प्रत्ययेऽनेन सूत्रेणैकारस्याकारे पासणिग्गं । इये तु पसणिण इति सिध्यति । प्राश्निक इत्यर्थः ।

## तेन निर्वृत्तं क्रीतं चरति व्यवहरति जीवति गृह्यते च ।१।३।४॥

तृतीयान्तादेष्वर्थेपूक्तप्रत्ययाः स्युः । अब्भोवगमिया । अहिगरणिया । दड्डिमं । सतिय । सइय । ओवहिए । विमाइमो ।

तेनेति—नाम्न प्रत्यय अदणि० इत्येतेषामनुवृत्तिः । अतादय. प्रत्यया उक्तशब्देन गृह्यन्ते । अब्भोवगमेन निव्वत्तेति विग्रहेऽनेनाब्भोवगमशब्दादिय-प्रत्यये अब्भोवगमिया । आभ्युपगमिकीत्यर्थः । अहिगरणेण निव्वत्ता अहिग-रणिया आधिकरणिकी इत्यर्थः । दड्डेण निव्वत्त दड्डिमं । सतेण क्रीय सइय, सतिय इति सिध्यति । शतिकमित्यर्थः । अतिसत्त । तकारस्य द्वित्वम् । ओव-हिए औपाधिक इत्यर्थः । उपाधिश्छद्म तेन चरतीत्यर्थः । चरत्यर्थेऽनेनेकण् ।

## इये नायस्य नेया' ।४।४।७६॥

नायशब्दस्य 'नेया' इत्यादेश' स्यादिये परे ।

इय इति—अत्र न नेयशब्दस्य बहुवचने 'नेया' किन्तु आकारान्तनेया-शब्दस्य प्रथमैकवचने । अनेकवर्णत्वात्सर्वादेशः ।

## उदियस्य नायस्य ।३।३।७५॥

नायशब्दसम्बन्धिन इयप्रत्ययस्यादेरुकारो वा स्यात् । णेयाउओ । णेयाइओ । तेल्लिओ ।

उदियस्येति—आदेरित्यस्य वेत्यस्य चानुवृत्तिः । सम्बन्धसामान्ये षष्ठी । अत एवाह सम्बन्धिन इति । नाएण ववहरति इत्याद्यर्थे नायशब्दादिय-प्रत्यये नेयादेशे प्रत्ययादेरुकारे प्रकृतिभावे णत्वे णेयाउओ । उकाराभावे तु णेयाइओ । तेल्लेण जीवईत्याद्यर्थे इयप्रत्यय । नैयायिक तैलिक इत्यर्थौ यथा क्रमेण ज्ञेय ।

## चक्खोरत सद् ।४।२।८॥

चक्खुशब्दात्परस्यात्प्रत्ययस्य सडागम स्यात् । चक्खुसं ।

धम्मादिभ्य इति—नाम्न प्रत्यय अतिशये इति पदत्रयमनुवर्त्तते । अय-श्चाकृतिगण । अइसएण धम्मी इति विग्रहे धम्मशब्दादिट्ठप्रत्यये धम्मिट्ठो । पापिट्ठो । स चाय गुणवाचकादेव भवति । तेन न पाचक्तरो इत्यादौ भवति । धम्मिट्ठो इत्यस्य धर्मिष्ठ इत्यर्थ । पापिट्ठो इत्यस्य पापिष्ठ' । अहम्मिट्ठो इत्यस्य अधर्मिष्ठ इत्यर्थ । द्वयोरेकस्यातिशयप्रतीतौ तरस्य विधानेन बहूना मध्ये एकस्य द्वयोर्वाऽतिशयप्रतीतौ प्रवृत्तिरस्येति सिद्धम् ।

## पियादिभ्य इज्ज ।१।४।१०।।

अतिशयविशिष्टेऽर्थे वर्त्तमानेभ्य पियादिशब्देभ्यः प्रथमान्तेभ्य इज्ज' प्रत्यय स्यात् ।

पियादिभ्य इति—नाम्न प्रत्यय प्रथमाया इत्येतेषा त्रयाणामनुवृत्ति । अयञ्चाकृतिगणः ।

## पियादीनां पादिरिज्जे ।२।३।११६।।

पियादिशब्दानां पादिरादेश• स्यादिज्जे परे । पेज्ज । थेज्ज ।

पियादीनामिति—पेज्ज इत्यस्य प्रियतर थेज्ज इत्यस्य स्थैर्यमित्यर्थ । अत्र 'पियादिभ्य इज्ज' इत्यनेन 'इज्ज' प्रत्यये कृतेऽनेन पादेशे सिद्धिर्भवति । थेज्ज इत्यत्र भाव इज्जप्रत्ययेऽनेन थादेश ।

## तदर्हति करोति च ।१।३।३।।

द्वितीयान्तादर्हतिकरोतीत्यनयोरर्थयोरुक्ता• प्रत्यया स्यु• । अभिसिक्को । अलकारिए ।

तदर्हतीति—नाम्न प्रत्यय अदणि० इत्यादीनामनुवृत्ति । अर्हतीति-लब्धु योग्यो भवतीत्यर्थ । अभिसेकमर्हतीत्यर्थेऽनेन सूत्रेणाणि प्रत्यये पयात्या दित्वात् ककारस्य द्वित्वे अभिसिक्को इति सिध्यति । आभिषेक्य इत्यर्थ । अलङ्कार करेइ इति विग्रहेऽनेन सूत्रेणालङ्कारशब्दादियप्रत्यये अलङ्कारिए इति सिध्यति । अलङ्कारकर्त्ता इत्यर्थ । इकण्प्रत्यये तु आलङ्कारिए इति रूप भवति । आलङ्कारिक इत्यर्थ । अलम्पूर्वककृधातोरियण्प्रत्यये अलङ्कार्यमित्यर्थ ।

## इतोऽत्पासिणस्य ।४।४।७७।।

पसिणशब्दस्येकारस्याकार• स्यादियप्रत्यये परे । पासणिए ।

## साऽस्मिन् पुण्णमासी संज्ञायाम् ।१।३।८॥

अस्मिन्नर्थेऽण् स्यात् सज्ञायाम् । आसोओ मासो ।

सेति—प्रथमाया नाम्न प्रत्यय अदणि० इत्यादीनामनुवृत्ति । सेति प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थेऽण् प्रत्यय स्याद् य प्रथमान्तार्थे स चेत् पुण्णमासी भवति । पुण्णमासी इति पुण्णो मासो जस्सि सा पुण्णमासी । आ-सोई पुण्णमासी जस्सि इति विग्रहे आसोईशब्दादनेन सूत्रेणाणि ईकारलोपे आसोओ, अस्सोओ मासो । आश्विनो मास इत्यर्थ ।

## सगड्या॰ सागड ।१।३।१४॥

सगडीशब्दात् षष्ठ्यन्तात्समूह इत्यर्थे सागड' प्रत्ययो वा स्यात् । सगडीसागड ।

सगड्या इति—नाम्न प्रत्यय' समूह इति पदत्रयमनुवर्त्तते । सगडीसागड । नाया० ७ । सगडीसागड इत्यस्य शाकटमित्यर्थ ।

## वातेनोपहृतमीन' ।१।४।२॥

तृतीयान्तवातशब्दादुपहतमित्यर्थे ईनः प्रत्यय' स्यात् । वाईण, वातीण ।

वातेनेति—नाम्न इति प्रत्यय इति चानुवर्त्तते । वातेण उवहृत इत्यर्थेऽनेन सूत्रेण वातशब्दादीनप्रत्यये तकारस्य यकारे लोपे वाईण, यकाराभावपक्षे वातीण । वातीनम् (वातोपहृतम्) इत्यर्थ ।

## तत आगत॰ ।१।३।५॥

पञ्चम्यन्तादागत इत्यर्थ उक्ताः प्रत्यया' स्यु । पासगिय । पारितोसिय ।

तत इति—नाम्न प्रत्यय अदणि० इत्येतेषामनुवृत्ति । अदादय प्रत्यया उक्तशब्देन गृह्यन्ते । पसगाओ आगतो इत्यर्थे पसगशब्दादियण्प्रत्यये वृद्धौ पासगिय । प्रासङ्गिकमित्यर्थ । इक्णप्रत्यये पासगिको । महुराओ आगतो माथुरो अणप्रत्यय । प्रायश इयण् इक्ण् अण् प्रत्यया अत्र भवन्ति आगत इत्यर्थे । तत्रेयण् प्रत्ययोऽस्तु वा इक्णप्रत्यये सति ककारस्य गकारे यकारोऽस्तु।

## तस्येदमपत्य समूहो वृत्तिर्व्यापारः ।१।३।९॥

षष्ठ्यन्तादिदम्, अपत्य, समूहः, वृत्ति, व्यापार इत्येतेष्वर्थेषूक्ता प्रत्यया

चक्खोरिति—चक्खो अत इति पदद्वयम् । चक्खुणा गिण्हिज्ज इत्यर्थे चक्खुशब्दात्प्रत्ययेऽनेनातप्रत्ययस्य मडागमे चक्खुम । चाक्षुषमित्यर्थ । आगमेऽकार उच्चारणार्थ । चक्षुषा गृह्य इत्यर्थ ।

## अदणौ नक्षत्रेण युक्त कालः ।४।४।१॥

नक्षत्रवाचकेभ्योऽस्सिण्यादिशब्देभ्यस्तृतीयान्तेभ्यो युक्तः काल इत्यर्थे अद् अण् प्रत्ययौ भवतः ।

अदणाविति—नाम्न प्रत्यय इति पदद्वयस्यानुवृत्ति । नक्षत्रवाचका शब्दा वृत्तिविषये नक्षत्रयुक्त चन्द्रमसमभिदधाना प्रत्यय लभन्ते । तथाच नक्षत्रयुक्त-चन्द्रेण युक्त इत्यर्थे प्रथमान्तान्नक्षत्रवाचकाच्छब्दाददणौ भवतो यो युक्त स कालश्चेदित्यर्थ । नक्षत्रेणेति किम् ? चन्द्रेण युक्ता रात्रिरिति विग्रहे मा भूत् । काल इति किम् ? पुष्येण युक्तश्चन्द्र इत्यर्थे मा भूत् ।

## अस्सिण्या इणस्योसणि ।४।४।७१॥

अस्सिणीसम्बन्धिन इणस्योसादेश स्यादणि परे । आसोई, अस्सोई । आसाढी । कत्तिया । जेट्ठामूला । फग्गुणी । विसाही ।

अस्सिण्या इति—अस्सिणीशब्दघटकेण ओसादेश । सित्त्वादादिलस्थान । अस्सोई+अ इति स्थिते ऽस्सादित्वाल्लोपे दीर्घे ईकारलोपे आसोअशब्दात्पुनर्ङीप्रत्यये आसोई । अस्सिणीए जुत्ता पुण्णमासीत्यर्थ । कत्तिया इत्यादौ तु अत् प्रत्यय । आसोई, अस्सोई=आश्विनी । आसाढी=आषाढी । कत्तिया=कार्त्तिकी । जेट्ठामूला=ज्येष्ठामूली । फग्गुणी=फाल्गुनी । विसाही=वैशाखी ।

## मिगसिरस्येत पूर्वस्यात् ।४।४।९०॥

मिगसिरसम्बन्धिन पूर्वस्येकारस्याकारो वा स्यादति प्रत्यये परे । मगसिरा । मिगसिरा । साविट्ठी । पोट्ठवती । पोसी । माही । चेती ।

मिगसिरस्येति—वा अति इति पदद्वयमनुवर्त्तते । मिगसिरशब्दादति प्रत्ययेऽनेन मकारोत्तरवर्त्तिन इकारस्याकारे मगसिरा । पक्षे मिगसिरा । सविट्ठाए जुत्ता साविट्ठी । अण् प्रत्यय । पोट्ठवताए जुत्ता पोट्ठवती । प्रौष्ठपदीत्यर्थ । पुस्सेण जुत्ता पोसी । पौषीत्यर्थ । अस्सादित्वात् मलोप । महाए जुत्ता माही । माघीत्यर्थ । चित्ताए जुत्ता चेती । चैत्रीत्यर्थ । अस्सादित्वात्पूर्वतकारस्य लोप । सर्वत्राण् प्रत्यय ।

## साऽस्मिन् पुण्णमासी संज्ञायाम् ।१।३।८॥

अस्मिन्नर्थेऽण् स्यात् सज्ञायाम् । आसोओ मासो ।

सेति—प्रथमाया नाम्न प्रत्यय अदणि० इत्यादीनामनुवृत्ति । सेति प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थेऽण् प्रत्यय स्याद् य प्रथमान्तार्थ स चेत् पुण्णमासी भवति । पुण्णमासी इति पुण्णो मासो जस्सि सा पुण्णमासी । आसोई पुण्णमासी जस्सि इति विग्रहे आसोईशब्दादनेन सूत्रेणाणि ईकारलोपे आसोओ, अस्सोओ मासो । आश्विनो मास इत्यर्थ ।

## सगड्या॰ सागड॰ ।१।३।१४॥

सगडीशब्दात् षष्ठ्यन्तात्समूह इत्यर्थे सागडः प्रत्ययो वा स्यात् । सगडीसागड ।

सगड्या इति—नाम्न प्रत्ययः समूह इति पदत्रयमनुवर्त्तते । सगडीसागड । नाया० ७ । सगडीसागड इत्यस्य शाकटमित्यर्थ ।

## वातेनोपहृतमीन॰ ।१।४।२॥

तृतीयान्तवातशब्दादुपहतमित्यर्थे ईनः प्रत्यय॰ स्यात् । वाईण, वातीण ।

वातेनेति—नाम्न इति प्रत्यय इति चानुवर्त्तते । वातेण उवहत इत्यर्थेऽनेन सूत्रेण वातशब्दादीनप्रत्यये तकारस्य यकारे लोपे वाईण, यकाराभावपक्षे वातीण । वातीनम् ( वातोपहृतम् ) इत्यर्थ ।

## तत आगत ।१।३।५॥

पञ्चम्यन्तादागत इत्यर्थ उक्ताः प्रत्ययाः स्यु । पासगिय । पारितोसिय ।

तत इति—नाम्न प्रत्यय अदणि० इत्येतेषामनुवृत्ति । अदाद्य प्रत्यया उक्तशब्देन गृह्यन्ते । पसगाओ आगतो इत्यर्थे पसगशब्दादियणप्रत्यये वृद्धौ पासगिय । प्रासङ्गिकमित्यर्थ । इक्णप्रत्यये पासगिको । मथुराओ आगतो माथुरो अणप्रत्यय । प्रायश इयण् इक्ण् अण् प्रत्यया एव भवन्ति आगत इत्यर्थे । तत्रेयण् प्रत्ययोऽस्तु वा इक्णप्रत्यये सति ककारस्य गकारे यकारोऽस्तु ।

## तस्येदमपत्य समूहो वृत्तिर्व्यापार ।१।३।९॥

षष्ठ्यन्तादिदम्, अपत्य, समूह, वृत्ति, व्यापार इत्येतेष्वर्थेषूक्ता॰ प्रत्यया

चक्खोरिति—चक्खो अत इति पदद्वयम् । चक्खुणा गिण्हिज्ज इत्यर्थे चक्खुशब्दादत्प्रत्ययेऽनेनात्प्रत्ययस्य सडागमे चक्खुस । चाक्षुषमित्यर्थे । आगमेऽकार उच्चारणार्थ । चक्षुषा गृह्यत इत्यर्थ ।

## अदणौ नक्षत्रेण युक्त॰ काल ।४।४।१॥

नक्षत्रवाचकेभ्योऽस्सिण्यादिशब्देभ्यस्तृतीयान्तेभ्यो युक्त' काल इत्यर्थे अद् अण् प्रत्ययौ भवत' ।

अदणाविति—नाम्न प्रत्यय इति पदद्वयस्यानुवृत्ति । नक्षत्रवाचका शब्दा वृत्तिविषये नक्षत्रयुक्त चन्द्रमसमभिदधाना प्रत्यय लभन्ते । तथाच नक्षत्रयुक्त-चन्द्रेण युक्त इत्यर्थे प्रथमान्तान्नक्षत्रवाचकाच्छब्दाददणौ भवतो यो युक्त स कालश्चेदित्यर्थ । नक्षत्रेणेति किम् ? चन्द्रेण युक्ता रात्रिरिति विग्रहे मा भूत् । काल इति किम् ? पुष्येण युक्तश्चन्द्र इत्यर्थे मा भूत् ।

## अस्सिण्या इणस्योसणि ।४।४।७१॥

अस्सिणीसम्बन्धिन इणस्यौसादेश॰ स्यादणि परे । आसोई, अस्सोई । आसाढी । कत्तिया । जेट्ठामूला । फग्गुणी । विसाही ।

अस्सिण्या इति—अस्सिणीशब्दघटकेण ओसादेश । सित्त्वादखिलस्थाने । अस्सोई + अ इति स्थिते ऽस्सादित्वाल्लोपे दीर्घे ईकारलोपे आसोअशब्दात्पुनर्डीप्रत्यये आसोई । अस्सिणीए जुत्ता पुण्णमासीत्यर्थ । कत्तिया इत्यादौ तु अत् प्रत्यय । आसोई, अस्सोई=आश्विनी । आसाढी=आषाढी । कत्तिया=कार्तिकी । जेट्ठामूला=ज्येष्ठामूली । फग्गुणी=फाल्गुनी । विसाही=वैशाखी ।

## मिगसिरस्येत पूर्वस्यात् ।४।४।९०॥

मिगसिरसम्बन्धिन पूर्वस्येकारस्याकारो वा स्यादति प्रत्यये परे । मगसिरा । मिगसिरा । साविट्ठी । पोट्ठवती । पोसी । माही । चेती ।

मिगसिरस्येति—वा अति इति पदद्वयमनुवर्त्तते । मिगसिरशब्दादति प्रत्ययेऽनेन मकारोत्तरवर्त्तिन इकारस्याकारे मगसिरा । पक्षे मिगसिरा । सविट्ठाए जुत्ता साविट्ठी । अण् प्रत्यय । पोट्ठवताए जुत्ता पोट्ठवती । प्रौष्ठपदीत्यर्थ । पुस्सेण जुत्ता पोसी । पौषीत्यर्थ । अस्सादित्वात् सलोप । महाए जुत्ता माही । माघीत्यर्थ । चित्ताए जुत्ता चेती । चैत्रीत्यर्थ । अस्सादित्वात्पूर्वतकारस्य लोप । सर्वत्राण् प्रत्यय ।

## साऽस्मिन् पुण्णमासी संज्ञायाम् ।१।३।८॥

अस्मिन्नर्थेऽण् स्यात् सज्ञायाम् । आसोओ मासो ।

सेति—प्रथमाया नाम्न प्रत्यय अदणि० इत्यादीनामनुवृत्ति. । सेति प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थेऽण् प्रत्यय स्याद् य प्रथमान्तार्थ स चेत् पुण्णमासी भवति । पुण्णमासी इति पुण्णो मासो जस्सि सा पुण्णमासी । आसोई पुण्णमासी जस्सि इति विग्रहे आसोईशब्दादनेन सूत्रेणाणि ईकारलोपे आसोओ, अस्सोओ मासो । आश्विनो मास इत्यर्थ ।

## सगड्या सागड ।१।३।१४॥

सगडीशब्दात् षष्ठ्यन्तात्समूह इत्यर्थे सागडः प्रत्ययो वा स्यात् । सगडीसागडं ।

सगड्या इति—नाम्न प्रत्यय समूह इति पदत्रयमनुवर्त्तते । सगडीसागड । नाया० ७ । सगडीसागड इत्यस्य शाकटमित्यर्थ ।

## वातेनोपहृतमीन ।१।४।२॥

तृतीयान्तवातशब्दादुपहृतमित्यर्थे ईनः प्रत्यय' स्यात् । वाईण, वातीण ।

वातेनेति—नाम्न इति प्रत्यय इति चानुवर्त्तते । वातेण उवहृत इत्यर्थेऽनेन सूत्रेण वातशब्दादीनप्रत्यये तकारस्य यकारे लोपे वाईण, यकाराभावपक्षे वातीण । वातीनम (वातोपहृतम्) इत्यर्थ ।

## तत आगत ।१।३।५॥

पञ्चम्यन्तादागत इत्यर्थ उक्ता' प्रत्यया' स्युः । पासगिय । पारितोसिय ।

तत इति—नाम्न प्रत्यय अदणि० इत्येतेषामनुवृत्ति । अदादय प्रत्यया उक्तशब्देन गृह्यन्ते । पसगाओ आगतो इत्यर्थे पसगशब्दादियण्प्रत्यये वृद्धौ पासगिय । प्रासङ्गिकमित्यर्थ । इकण्प्रत्यये पासगिको । मथुराओ आगतो माथुरो अण्प्रत्यय । प्रायश इयण् इकण् अण् प्रत्यया एव भवन्ति आगत इत्यर्थे । तत्रेयण् प्रत्ययोऽस्तु वा इकण्प्रत्यये सति ककारस्य गकारे यकारोऽस्तु ।

## तस्येदमपत्य समूहो वृत्तिर्व्यापार. ।१।३।०

षष्ठ्यन्तादिदम्, अपत्य, समूहः, वृत्ति, व्यापार

स्यु । कानिलिय । उत्तरिञ्ज । कोसेञ्ज । वेसालिओ । मागड । कावोया ।

तस्येति—नाम प्रत्यय अदणि० इत्येतेऽनुवर्त्तन्ते । यद्यपीदन्त्वेनापत्य स्यापि ग्रहणमम्भवेन पृथगपत्यग्रहण व्यर्थं तथाप्यपत्यत्वेन बोधाय तद्ग्रहण-स्यावश्यकत्वम् । तथा चेदन्त्वेनापत्यत्वेन च बोधस्यानुभवसिद्धत्वेनोभयोरप्यु-पादानमावश्यकमेवेति प्रतिभाति । कविलस्स इम काविलिय कापिलकमित्यर्थ । इयप्रत्यय । उत्तरस्स इम उत्तरिञ्ज । औत्तरेयमित्यर्थ । इञ्ञप्रत्यय । डिद्भा वस्य बाहुलकत्वेनात्र तदभावान्न टिलोप । वेसालीए अवच्च इत्यर्थ इयणप्रत्यये वेसालिओ वैशालिक इत्यर्थ । डिति टेरिकारस्य लोप । मगडाण समूहो मागड । शाकटमित्यर्थ । समूहार्थेऽण् प्रत्यय । कवोयस्स वित्ती कावोया । कापोतीत्यर्थ । वृत्त्यर्थेऽण्प्रत्यय ।

## मयश्च तस्य विकार. ।१।३।६॥

षष्ठ्यन्ताद्विकार इत्यर्थे मयप्रत्ययश्चकारादुक्ताः प्रत्यया' स्यु. ।

आममय । कोसेञ्ज ।

मय इति—नाम प्रत्यय अदणि० इत्येतेऽनुवर्त्तन्ते । आमस्स विकार इत्यर्थे मयप्रत्यय आममय आम्रमयमित्यर्थ । कोसस्स विकारो कोसेञ्ज । इञ्ञप्रत्यय । डिद्भावस्य बाहुलकत्वेनात्राप्रवृत्त्या न टिलोपः ।

## अदणोरुतोऽव् ।३।३।४७॥

उकारस्यावादेश स्याददणो. प्रत्यययो' परयो । पाण्डवा, पण्डवा ।

पौरवो । लाघव । मद्दव ।

अदणोरिति—पण्डुशब्दादपत्यार्थेऽति प्रत्ययेऽणि वा कृत आद्यस्वरस्य वृद्धावुकारस्यावादेशे पाण्डवा । पक्षे पण्डवा । पुरोरपत्य पौरवो । लघोर्भावो लाघव । मृदोर्भावो मद्दव मार्दवमित्यर्थ ।

## उज्ज्वादेर् इये च स्वरस्य ।२।४।८५॥

उज्ज्वादिशब्दस्यादे. स्वरस्याकार' स्याचाददणो परयोरिये च ।

अज्जव । आज्जव । अज्जविय ।

उज्ज्वादेरिति—आदेरिति अदणोरिति चानुवर्त्तते । आदे स्वरस्यैव मत्त्वेनाह—स्वरस्येति । उज्जुस्स भावो अज्जव, आज्जव । आर्जवमित्यर्थ । उज्जुशब्दादति प्रत्यये कृत आदुकारस्याकारे कृतेऽन्त्योकारस्यावादेशेऽपि कृते सयुक्ते ह्रस्वे च अज्जव । आज्जव ।।

## चउछाभ्यां कस्यादे: ।३।३।२९।।

चउछशब्दाभ्या परस्य कप्रत्ययस्यादेर्द्वित्व स्यात् । चउक्क । छक्क ।

चउछाभ्यामिति—द्विरित्यनुवर्त्तते । चउशब्दात्स्वार्थे कप्रत्यये ककारस्य द्वित्वे चउक्क । चतुष्कमित्यर्थ । छशब्दात्कप्रत्यये ककारस्य द्वित्वे छक्क षट्कमित्यर्थ । उत्तरपदत्वाभावाच्च कायान्त्विवाद् द्वित्वम् ।

## ऊलो वलवाताभ्यां न सहते ।१।४।३।।

बलवातशब्दाभ्या न सहते इत्यर्थे 'ऊल' प्रत्यय. स्यात् । बल्लूलो । वातूलो ।

ऊल इति—नाम्न प्रत्यय इत्युभयमनुवर्त्तते । बल न सहते इत्यर्थेऽनेन सूत्रेण बलशब्दादूलप्रत्यये बल्लूलो । वात न सहते इत्यर्थे वातशब्दादूलप्रत्यये वातूलो वातरोगीत्यर्थ । पुरुषवचनयोर्विवक्षा नास्ति तद्धिते । अतएव मध्यमोत्तमपुरुषयोर्बहुवचनेऽपि च सिध्यति ।

## चोरवणिग्भ्यामिज्जस्यादे ।४।१।२।।

चोरवणिज्शब्दाभ्या परस्येज्जप्रत्ययस्यादेर्लोपः स्यात् । चोरिय । वाणिज्ज ।

चोरवणिग्भ्यामिति—लोप इत्यनुवर्त्तते । चोरस्य व्यापारो चोज्ज । चोरशब्दादिज्जप्रत्यये टिलोपेऽनेन प्रत्ययस्यादेर्लोपे त्रिव्यञ्जनसयुक्ते पूर्वस्य लोपे चोज्ज । इयादिप्रत्यये तु चोरिय इत्यादि । चौर्यम् इत्यर्थ, । वणिज्शब्दादिज्जप्रत्यये तु वाणिज्ज । कार्यन्तु पूर्ववत् किन्त्वत्रेज्जप्रत्यय एव भवतीति विशेष । वाणिज्ज इत्यस्य वाणिज्यमित्यर्थ, ।

## अप्पणादिच्चियेज्जियौ ।१।२।१०।।

अप्पणशब्दात्षष्ठ्यन्तादिदमित्यर्थे इच्चियेज्जियौ भवतः । अप्पणिच्चिय । अप्पणिज्जिय ।

अप्पणादिति—नाम्न प्रत्यय तस्येदम् इत्येतेषामनुवृत्ति, । तस्येदमित्य

स्यु । काविलिय । उत्तरिज्ज । कोसेज्ज । वेसालिओ । सागड । कावोया ।

तस्येति—नाम्न प्रत्यय अदणि० इत्येतेऽनुवर्त्तन्ते । यद्यपीदन्त्वेनापत्य स्यापि ग्रहणमम्भवेत् पृथगपत्यग्रहण व्यर्थं तथाप्यपत्यत्वेन बोधाय तद्ग्रहण स्यावश्यकत्वम् । तथा चेदन्त्वेनापत्यत्वेन च बोधस्यानुभवसिद्धत्वेनोभयोरप्यु पादानमावश्यकमेवेति प्रतिभाति । कविलस्स इम काविलिय कापिलकमित्यर्थ । इयप्रत्यय । उत्तरस्स इम उत्तरिज्ज । औत्तरेयमित्यर्थ । इज्जप्रत्यय । डिद्वद्भा वस्य बाहुलकत्त्वेनात्र तदभावान्न टिलोप । वेसालीए अवच्च इत्यर्थ इयणप्रत्यये वेसालिओ वैशालिक इत्यर्थ । डिति टरिकारस्य लोप । सगडाण समूहो सागड । शाकटमित्यर्थ । समूहार्थेऽण् प्रत्यय । कवोयस्स निसी कावोया । कापोतीत्यर्थ । धृत्त्यर्थेऽणप्रत्यय ।

## मयश्च तस्य विकार ।१।३।६॥

षष्ठ्यन्ताद्विकार इत्यर्थे मयप्रत्ययश्चकारादुक्ता० प्रत्यया स्युः ।
आममय । कोसेज्ज ।

मय इति—नाम प्रत्यय अदणि० इत्येतेऽनुवर्त्तन्ते । आमस्स विकार इत्यर्थे मयप्रत्यय आममय आम्रमयमित्यर्थ । कोसस्स विकारो कोसेज्ज । इज्जप्रत्यय । डिद्वद्भावस्य बाहुलकत्वेनात्राप्रवृत्त्या न टिलोप ।

## अदणोरुतोऽव् ।३।३।४७॥

उकारस्यावादेश' स्याददणो प्रत्यययो' परयो । पाण्डवा, पण्डवा ।
पौरवो । लाघव । मद्दव ।

अदणोरिति—पण्डुशब्दादपत्यार्थेऽति प्रत्ययेऽणि वा कृत आद्यस्वरस्य वृद्धावुकारस्यावादेशे पाण्डवा । पक्षे पण्डवा । पुरोरपत्य पौरवो । लघोर्भावो लाघव । मृदोर्भावो मद्दव मार्दवमित्यर्थ ।

## उज्ज्वादेर इये च स्वरस्य ।२।४।८५॥

उज्ज्वादिशब्दस्यादे' स्वरस्याकार स्याचाददणो परयोरिये च ।
अज्जव । आज्जव । अज्जविय ।

इदिति—नाम्न' प्रत्यय इति पदद्वयस्यानुवृत्ति । अधीत इमेण अधीई । 'अधीती' इत्यर्थ । कित पुव्व इमेण कितपुव्वी । कृतपूर्वीत्यर्थ ।

## पयडेर्योऽणि ।२।३।७५॥

पयडिशब्दस्योपधाया यकारो वा स्यादणि परे । पायय ।

पयडेरिति—उपधाया वा इति द्वयोरनुवृत्ति । पयडीए इम इति विग्रहेऽणि प्रत्यय उपधाया यकारे टिलोपे वृद्धौ पायय । प्राकृतमित्यर्थ ।

## पयावत्यादीनां नाणि ।४।१।२३॥

पयावतिप्रभृतिशब्दाना टेर्लोपो न स्यादणि परे। पायावच्च । सेणावच्च ।

पयावत्यादीनामिति—टेरिति लोप इति चानुवर्त्तते । पयावतिस्स इम पायावच्च । अत्राणि कृते टेर्लोपनिषेधे तकारात्परस्येकारस्य चकारे तकारस्य परसवर्णे पायावच्च । प्राजापत्यमित्यर्थ । सेणावतिस्स इम सेणावच्च सैनापत्य-मित्यर्थ ।

## इये सिलेसस्य सेसः ।४।४।७५॥

सिलेसस्य सेसादेश स्यादिये परे। ससेसिय ।

इय इति—ससिलेसेण निव्वित्त ससेसिय । अत्र ससिलेसघटकसिलेस-भागस्य सेसादेश । ससेसिय इत्यस्य साश्लेषिकमित्यर्थ ।

## णिति विरोयणादीनामइर्वा ।२।४।७३॥

विरोयणादिशब्दानां णिति परे आदिस्वरस्याइ इत्यादेशो वा स्यात् । वइ-रोयण, वेरोयण । वइसदेवो, वेसदेवो । वइसेसिए, वेसेसिए । वइसाहो, वेसाहो । जइणो, जेणो । वइचित्त, वेचित्त । वइधम्म, वेधम्म । कइलासो, केलासो ।

णितीति—आदेर्वेति पदद्वयस्यानुवृत्ति । तथा च विरोयणादिशब्दाना स्वराणा मध्य आदे स्वरस्येत्यर्थ । तेन विरोयणादिशब्दे स्वरस्यादित्वाभावेऽपि न क्षति । विरोयणस्स इम इत्याद्यर्थेऽणि कृतेऽनेन वेरिकारस्याइ इत्यादेशे वइरोयण, तदभावे वेरोयण । पक्षे आदिस्वरस्य वृद्धि । वइरोयण इत्यस्य

नुवर्त्तनादेव 'षष्ठ्यन्तादिदमित्यर्थे' इत्यर्थो लभ्यते। आत्मवाचिनोऽप्पणशब्दादिद मर्थे इषियेज्जियप्रत्यययो सतो अप्पणिषिय। अप्पणिज्जिय। आत्मीयमित्यर्थ।

## वातादोलोलौ ।१।२।१५॥

षष्ठ्यन्ताद्वातशब्दात्समूहेऽर्थे 'ओलोलौ' प्रत्ययौ स्त । वातोली। वातूलो।

वातादिति—तस्य समूह इत्यनुवर्त्तते। अतएवाह षष्ठ्यन्तादिति। तत्र ओलप्रत्ययान्त स्त्रीलिङ्ग। वातस्य समूह इत्यर्थे वातशब्दादनेन सूत्रेण ओल-प्रत्यये ङीप्रत्यये वातोली। उलप्रत्यये तु वातूलो। विच्छेदात्पुनरुलग्रहण कृतम्।

## पयात्यादीनामदणो ।२।३।७०॥

एषामुपधाया द्वित्व स्यादत्यणि च परे। पायत्त।

पयात्यादीनामिति—उपधाया द्वि इति पदद्वयमनुवर्त्तते। पयातीना समूहो इत्यर्थेऽणि प्रत्ययेऽनेनोपधाया द्वित्वे टिलोप आदिस्वरवृद्धौ पायत्त। अयञ्चाकृतिगण।

## अजिणस्येतोऽणि ।३।२।३६॥

अजिणशब्दस्येकारस्य दीर्घ स्यादणि परे। आईण, आजीण।

अजिणस्येति—दीर्घ इत्यनुवर्त्तते। स्वरस्येत्युपस्थित्या नेष्टसिद्धि सम्भवति। अकारद्वयस्यापि दीर्घप्रसङ्गात्। अत 'इत' इत्युक्तम्। अजिणेण निव्वत्त आईण। अत्र निर्वृत्तार्थेऽणि प्रत्यये इकारस्य दीर्घे आदिस्वरवृद्धौ जका रस्य यकारे लोपे प्रकृतिभावे आईण। यकाराभावे आजीण। आजिनमित्यर्थ।

## वा पडिहार्या आत ए ।४।४।७२॥

पडिहारीशब्दसम्बन्धिन आकारस्यैकारो वा स्यादणि परे।
पाडिहेर। पाडिहार।

वेति—अणीत्यनुवर्त्तते। पडिहारीए इम इत्यर्थेऽणि प्रत्ययेऽनेनाकारस्यै-कारे पाडिहेर। प्रातिहार्यमित्यर्थ। एकाराभावे पाडिहार।

## इत् कितपुव्वादिभ्योऽनेन ।१।४।४॥

कितपुव्वादिशब्देभ्योऽनेन इत्यर्थे इत् प्रत्यय स्यात्। अधीई। कितपुव्वी।

इदिति—नाम्न प्रत्यय इति पदद्वयस्यानुवृत्ति । अधीत इमेण अधीई । 'अधीती' इत्यर्थ । कित पुव्व इमेण कितपुव्वी । कृतपूर्वीत्यर्थ ।

## पयडेर्योऽणि ।२।३।७५॥

पयडिशब्दस्योपधाया यकारो वा स्यादणि परे । पायय ।

पयडेरिति—उपधाया वा इति द्वयोरनुवृत्ति । पयडीए इम इति विग्रहेऽणि प्रत्यय उपधाया यकारे टिलोपे वृद्धौ पायय । प्राकृतमित्यर्थ ।

## पयावत्यादीनां नाणि ।४।१।३३॥

पयावतिप्रभृतिशब्दाना टेर्लोपो न स्यादणि परे। पायावच्च । सेणावच्च ।

पयावत्यादीनामिति—टेरिति लोप इति चानुवर्त्तते । पयावतिस्स इम पायावच्च । अत्राणि कृते टेर्लोपनिषेधे तकारात्परस्येकारस्य चकारे तकारस्य परसवर्णे पायावच्च । प्राजापत्यमित्यर्थ । सेणावतिस्स इम सेणावच्च सैनापत्यमित्यर्थ ।

## इये सिलेसस्य सेस· ।४।४।७५॥

सिलेसस्य सेसादेश स्यादिये परे । ससेसिय ।

इय इति—ससिलेसेण निव्वित्त ससेसिय । अत्र ससिलेसघटकसिलेसभागस्य सेसादेश । ससेसिय इत्यस्य साश्लेपिकमित्यर्थ ।

## णिति विरोयणादीनामइर्वा ।२।४।७३॥

विरोयणादिशब्दाना णिति परे आदिस्वरस्याइ इत्यादेशो वा स्यात् । वइरोयण, वेरोयण । वइसदेवो, वेसदेवो । वइसेसिए, वेसेसिए । वइसाहो, वेसाहो । जइणो, जेणो । वइचित्त, वेचित्त । वइधम्म, वेधम्म । कइलासो, केलासो ।

णितीति—आदेर्वेति पदद्वयस्यानुवृत्ति । तथा च विरोयणादिशब्दाना स्वराणा मध्य आदे स्वरस्येत्यर्थ । तेन विरोयणादिशब्दे स्वरस्यादित्वाभावेऽपि न क्षति । विरोयणस्स इम इत्याद्यर्थेऽणि कृतेऽनेन वेरिकारस्याइ इत्यादेशे वइरोयण, तदभावे वेरोयण । पक्षे [illegible] वृद्धि । वइरोयण इत्यस्य

वैरोचनमित्यर्थः । विसदेवस्स इमं वइसदेवो । वैश्वदेव इत्यर्थः । पक्षे वेसदेवो । विसेसस्स इम वइसेसिए । विसेस स्य वा वइसेसिए । वैशेषिक इत्यर्थः । आदेशाभावे वेसेसिए । विसाहो पुण्णिमा जस्सिं मासे वइसाहो । वैशाख इत्यर्थः । पक्षे वेसाहो । जिणस्स इमो जइणो । जैन इत्यर्थः । पक्षे जेणो । विचित्तस्स भावो वइचित्त । वैचित्र्यमित्यर्थः । पक्षे वेचित्त । विधम्मस्स भावो वइधम्म वैधर्म्यमित्यर्थः । पक्षे वेधम्म । णिति परे विधानेन केलासो एव कइलासो । अत्र स्वार्थिकोऽण् प्रत्ययो बोध्य । पक्षे केलासो । कैलाश इत्यर्थः ।

## परात्कीय ।१।३।११॥

षष्ठ्यन्तात्परशब्दात् सम्बन्धिन्यर्थे कीय' प्रत्यय स्यात् । परकीय ।

परादिति—तस्येदम् नाम्न प्रत्यय इत्येतेऽनुवर्त्तन्ते । तत्फलितमाह षष्ठ्यन्तादित्यादि । परस्स इम परकीय । परशब्दात् कीय प्रत्यय ।

## रायाण् ण्णो यस्य त्विद्वा ।१।३।१२॥

रायशब्दात्सम्बन्धिन्यर्थे ण्णप्रत्यय स्याद्यस्य तु इकारो वा स्यात् ।

राइण्ण । रायण्ण ।

रायादिति—तस्येदम् नाम्न प्रत्यय इत्येतेषामनुवृत्ति । तस्येदमित्यनुवृत्त्या 'सम्बन्धिन्यर्थे' इत्यर्थो लभ्यते । इदन्त्वेन राज्ञ कर्मणोऽपत्यादेश्च ग्रहणम् । रायशब्दाद् ण्णप्रत्यये यकारोत्तराकारस्येकारे यकारलोपे प्रकृतिभावे राइण्ण । राजन्यमित्यर्थ । इकारादेशाभावपक्षे तु रायण्ण । आदेशस्यैव विकल्प विधान न तु प्रत्ययस्यापि । अत ण्णोक्त यस्य तु इति ।

## कम्माणणकौ ।१।३।१३॥

कम्मशब्दात्सम्बन्धिन्यर्थे ण क प्रत्ययौ [illegible] कम्मअ ।

कम्मादिति— [illegible] । कम्[illegible] [illegible] । णप्रत्यये [illegible]
कप्रत्यये तु कम्मक,

अब्भतरगो । अवरिल्ल । पुरच्छिमं, पुरत्थिम । पच्छिम । अन्तिम । उवरिल्लं । उवरिम । भाण्डारिए । अच्छी ।

तत्रेति—नाम्न प्रत्यय अदणि० इत्येतेऽनुवर्त्तन्ते । अब्भतरे भवो अब्भतरिए । इयप्रत्ययो भवे । कप्रत्यये अब्भतरगो । अभ्यन्तरज इत्यर्थ । अवरे भवो अवरिल्ल । अवरशब्दादिल्लप्रत्यय । आपरमित्यर्थ । पुरत्थाभव पुरच्छिम, पुरत्थिम । पौरस्त्यमित्यर्थ । पच्छाभव पच्छिम । पाश्चात्त्यमित्यर्थ । अन्तेभव अन्तिम । इमप्रत्यय । उवरि भव उवरिल्ल । इल्लप्रत्यय । इमप्रत्यये तु उवरिम । उपरितनमित्यर्थ । भण्डारे अहिगडो भाण्डारिए । भाण्डारिक इत्यर्थ । इकप्रत्यय । अच्छे भवा इत्यर्थेऽतप्रत्यये अच्छी ।

## उदीईपडीईभ्यां णड् ।१।३।१९॥

आभ्या भवार्थे णड् प्रत्ययः स्यात् । उदीण । उईण । पडीण ।

उदीईति—तत्र भव नाम्न प्रत्यय इत्येतेऽनुवर्त्तन्ते । प्रत्ययोऽय डान्तस्तेन स्वरादित्वाभावेऽपि डिति टेर्लोप सिध्यति । टान्तस्य शङ्कैव नास्ति टकारोच्चारणस्य वैयर्थ्यापत्ते । उदीईए भव इत्यर्थे उदीईशब्दाण्णड्प्रत्यये टिलोपे उदीण । पक्षे उईण । उदीचीनमित्यर्थ । पडीईए भव पडीण । प्रतीचीनमित्यर्थ ।

## दीवादिभ्य इचः ।१।३।१८॥

एभ्यो भवार्थे इचप्रत्यय स्यात् । दीविच ।

दीवादिभ्य इति—नाम्न प्रत्यय तत्र भव इत्येतेऽनुवर्त्तन्ते । अन्नादे रपवादोऽयम् । दीवे भव दीविच । द्वीपार्थकदीवशब्दाद्भवार्थे इचप्रत्यय ।

## पाईतो ण ।१।३।१७॥

पाईशब्दाद्भवार्थे णप्रत्ययः स्यात् ।

पाईत इति—अनुवृत्ति पूर्ववत् । अदादिप्रत्ययापवाद ।

## णे पाईत ईतो दद् वा ।४।२।५९॥

पाईशब्दसम्बन्धिन ईकारस्य दडागमो वा स्याण्णप्रत्यये परे ।

पादीण, पाईण ।

ण इति—पाईशब्दाद् णप्रत्यये दडागमे पादीण, तदभावे पाइण ।

वैरोचनमित्यर्थः । विसदवस्स इम वइस्सदेवो । वैश्वदेव इत्यर्थः । पक्षे वेसदेवो । विसेसस्स इम वइसेसिए । विसेस एव वा वइसेसिए । वैशेषिक इत्यर्थः । आदेशाभावे वेसेसिए । विसाहो पुण्णिमा जस्सि मासे वइसाहो । वैशाख इत्यर्थः । पक्षे वेसाहो । जिणस्स इमो वइणो । जैन इत्यर्थः । पक्षे जेणो । विचित्तस्स भावो वइचित्त । वैचित्र्यमित्यर्थः । पक्षे वेचित्त । विधम्मस्स भावो वइधम्म वैधर्म्यमित्यर्थः । पक्षे वेधम्म । णिति परे विधानेन केलासो एव कइलासो । अत्र स्वार्थिकोऽण् प्रत्ययो बोध्यः । पक्षे केलासो । कैलाश इत्यर्थः ।

## परात्कीयः ।१।३।११॥

षष्ठ्यन्तात्परशब्दात् सम्बन्धिन्यर्थे कीय प्रत्ययः स्यात् । परकीय ।

परादिति—तस्येदम् नाम्न प्रत्यय इत्येतेऽनुवर्त्तन्ते । तत्फलितमाह षष्ठ्यन्तादित्यादि । परस्स इम परकीय । परशब्दात् कीय प्रत्यय । ,

## रायाण् ण्णो यस्य त्विद्वा ।१।३।१२॥

रायशब्दात्सम्बन्धिन्यर्थे ण्णप्रत्यय स्याद्यस्य तु इकारो वा स्यात् ।

राइण्ण । रायण्ण ।

रायादिति—तस्येदम् नाम्न प्रत्यय इत्येतेषामनुवृत्ति । तस्येदमित्यनुवृत्त्या 'सम्बन्धिन्यर्थे' इत्यर्थो लभ्यते । इदन्त्वेन राज्ञ कर्मणोऽपत्यादेश्च ग्रहणम् । रायशब्दाद् ण्णप्रत्यये यकारोत्तराकारस्येकारे यकारलोपे प्रकृतिभावे राइण्ण । राजन्यमित्यर्थः । इकारादेशाभावपक्षे तु रायण्ण । आदेशस्यैव विकल्पेन विधान न तु प्रत्ययस्यापि । अत एवोक्त यस्य तु इति ।

## कम्माण्णकौ ।१।३।१३॥

कम्मशब्दात्सम्बन्धिन्यर्थे ण्ण क प्रत्ययौ स्त । कम्मण्ण, कम्मअ ।

कम्मादिति—अनुवृत्तिस्तु पूर्ववत् । कम्मस्स इम कम्मण्ण । ण्णप्रत्यय । कप्रत्यये तु कम्मक, कम्मअ । कार्मणमित्यर्थः ।

## तत्र भवोऽधिकृत ।१।३।१४॥

सप्तम्यन्ताद्भवोऽधिकृत इत्यनयोरर्थयोरुक्तप्रत्यया स्यु । अब्भतरिए,

अब्भंतरगो । अवरिल्ल । पुरच्छिम, पुरत्थिम । पच्छिम । अन्तिम । उवरिल्ल । उवरिम । भाण्डारिए । अच्छी ।

तत्रेति—नाम्न प्रत्यय अदणि० इत्येतेऽनुवर्त्तन्ते । अब्भतरे भवो अब्भतरिए । इयप्रत्ययो भवे । कप्रत्यये अब्भतरगो । अभ्यन्तरक इत्यर्थ । अवरे भवो अवरिल्ल । अवरशब्दादिल्लप्रत्यय । आपरमित्यर्थ । पुरत्थाभव पुरच्छिम, पुरत्थिम । पौरस्त्यमित्यर्थ । पच्छाभव पच्छिम । पाश्चात्त्यमित्यर्थ । अन्तेभव अन्तिम । इमप्रत्यय । उवरि भव उवरिल्ल । इल्लप्रत्यय । इमप्रत्यये तु उवरिम । उपरितनमित्यर्थ । भण्डारे अहिगडो भाण्डारिए । भाण्डारिक इत्यर्थ । इकप्रत्यय । अच्छे भवा इत्यर्थेऽतप्रत्यये अच्छी ।

## उदीईपडीईभ्यां णड् ।१।३।१९॥

आभ्या भवार्थे णड् प्रत्ययः स्यात् । उदीण । उईण । पडीण ।

उदीईति—तत्र भव नाम्न प्रत्यय इत्येतेऽनुवर्त्तन्ते । प्रत्ययोऽय डान्तस्तेन स्वरादित्वाभावेऽपि डिति टेर्लोप सिध्यति । टान्तस्य शङ्कैव नास्ति टकारोच्चारणस्य वैयर्थ्यापत्ते । उदीईए भव इत्यर्थे उदीईशब्दाण्णड्प्रत्यये टिलोपे उदीण । पक्षे उईण । उदीचीनमित्यर्थ । पडीईए भव पडीण । प्रतीचीनमित्यर्थ ।

## दीवादिभ्य इच्च ।१।३।१८॥

एभ्यो भवार्थे इचप्रत्यय स्यात् । दीविच्च ।

दीवादिभ्य इति—नाम्न प्रत्यय तत्र भव इत्येतेऽनुवर्त्तन्ते । अणादेरपवादोऽयम् । दीवे भव दीविच्च । द्वीपार्थकदीवशब्दाद्भवार्थे इचप्रत्यय ।

## पाईतो ण. ।१।३।१७॥

पाईशब्दाद्भवार्थे णप्रत्यय. स्यात् ।

पाईत इति—अनुवृत्ति पूर्ववत् । अदादिप्रत्ययापवाद ।

## णे पाईत ईतो दद् वा ।४।२।५९॥

पाईशब्दसम्बन्धिन ईकारस्य ददागमो वा स्याण्णप्रत्यये परे ।
पादीण, पाईण ।

णे इति—पाईशब्दाद् णप्रत्यये ददागमे पादीण, तदभावे पाइण ।

## अति पच्छिमस्य पचच्छिमपचत्थिमौ ।१।४।८९॥

पश्चिमशब्दस्य पचच्छिमपचत्थिमावादेशौ भवतोऽति परे ।
पचच्छिम । पचत्थिम ।

अतीति—पश्चिमशब्दस्थानिकौ पचच्छिमपचत्थिमौ द्वावादेशौ भवतोऽति परे भवार्थके । पश्चिमे भव इत्यर्थे पश्चिमशब्दादति प्रत्यये पचच्छिमादेशे पचच्छिम । पचत्थिमादेशे पचत्थिम । पश्चिममित्यर्थः ।

## तत्र साधुरेज्जणेयणौ ।१।३।२२॥

सप्तम्यन्तात्साधुरित्यर्थे एज्जण् इयण् प्रत्ययौ स्त' । पाहेज्ज । पाहेय ।
सावतेज्ज । सावतेय । सापतेज्ज । सापतेय ।

तत्रेति—नाम्न प्रत्यय इति पदद्वयमनुवर्त्तते । पहे साहू पाहेज्ज । एज्जण् प्रत्यये वृद्धि । एयण् प्रत्यये तु पाहेय । पाथेयमित्यर्थ । सवतेमि साहू सावतेज्ज । एयण् प्रत्यये तु सावतेय । स्वापतेयमित्यर्थ । पकारस्य वकाराभावे सापतेज्जमित्यादि ।

## पासादिल्लक शेते ।१।३।२३॥

सप्तम्यन्तात्पासशब्दाच्छेते इत्यर्थे 'इल्लक.' प्रत्यय स्यात् । पासिल्लओ ।

पासादिति—तत्र नाम्न प्रत्यय इत्येतेऽनुवर्त्तन्ते । पासे सयइ पासिल्लओ इत्यत्र पासशब्दादिल्लगप्रत्यये पासिल्लओ । पार्श्विक इत्यर्थ ।

## अध्युत्तरपदाददीनौ ।१।४।३२॥

अध्युत्तरपदकाददीनप्रत्ययौ स्त । परज्झो । पराधीणो ।

अध्युत्तरेति—नाम्न प्रत्यय इति पदद्वयस्यानुवृत्ति । अधिरुत्तरपद यस्य सोऽध्युत्तरपदस्तस्मादित्यथ । परस्स परंसि वा अहि इति विग्रहे पष्ठीसमासे सप्तमीसमासे वा सत्यनेन सूत्रेणात्प्रत्यये इकारोत्तरेकारस्य झकारे इकारस्य परसवर्णे परज्झो । ईनप्रत्यये पराधीणो । अत्प्रत्ययस्य डिद्भावाभावाम्न टिलोप । ईनप्रत्ययस्य तद्भावाट्टिलोप । तत्र बहुलग्रहणात ।

## वहियादिभ्य इरणिमणौ ।१।३।२१॥

एभ्यो भवार्थे इरण् इमण् प्रत्ययौ स्त' ।

बहीति—नाम्न प्रत्यय तत्र भव इत्येतेऽनुवर्त्तन्ते । तत्र भव इत्यस्यानुवर्त्तनफलमाह भवार्थे इति ।

## इरणिमणोर्वहिया वह॰ ।४।४।७४॥

वहियाशब्दस्य वहादेशः स्यादिरणिमण्प्रत्यययोः । वाहिर ३ । वाहिमं ३ ।

इरणिमणोरिति—अनेकवर्णत्वात्सर्वादेश । आदेशेऽकार उच्चारणार्थं । वहि वहिं वहिया वा भवो वाहिर । वाहिम । आद्याभ्यामुभयो प्रत्यययो परयोष्टिलोपमात्रम् । अन्त्यात्तु वहादेशोऽपि । बाह्यमित्यर्थ ।

## मज्झान्मश्च ।१।३।२०॥

मज्झशब्दादुक्तेऽर्थे मप्रत्ययश्चकारादुक्तप्रत्ययाश्च स्युः । मज्झमं, मज्झिमं, मज्झिल्लं ।

मज्झादिति—नाम्न प्रत्यय तत्र भव अदणि॰ इत्यादयोऽनुवर्त्तन्ते । तथा च सप्तम्यन्तान्मज्झशब्दाद्भव इत्यर्थे मो भवति चकारादुक्तप्रत्यया इत्यर्थस्तत्फलितमाह मज्झशब्दादित्यादि । मज्झे भव इत्यर्थे मज्झशब्दान्मप्रत्यये मज्झम । इमप्रत्यये मज्झिम । इल्लप्रत्यये मज्झिल्ल । मध्यममित्यर्थ ।

## इदिणमन्ताश्च तदस्त्यस्यास्मिन् ।१।३।२४॥

प्रथमान्तादस्यास्तीत्यर्थेऽस्मिन्नस्तीत्यर्थे च इद् इण् मन्त प्रत्ययाश्चकारादुक्तप्रत्ययाश्च यथाप्रयोग स्युः । अगारी । कोडुंबी ।

इदिणमन्ताश्चेति—नाम्न प्रत्यय अदणि॰ इत्येतेऽनुवर्त्तन्ते । इश्च इण् च मन्तश्च इदिणमन्ता । चकारेणादादय अनुवर्त्तन्ते । अत एवाह चकारादुक्तप्रत्यया इति । स्वेच्छया प्राप्तिमात्र दृष्ट्वा सर्वत्र न सर्वप्रत्यया प्रयोक्तव्या इति दर्शनायाह यथाप्रयोगमिति । अगारो अत्थि जस्स अगारी । अत्रागारशब्दादित् प्रत्यय । कुडुंबो अत्थि जस्स कोडुंबी । इण्प्रत्यये वृद्धि । कोडुम्बी इत्यस्य कुटुम्बीत्यर्थ ।

## आन्मन्तस्य व आदेः ।२।४।७१॥

अकारात्परस्य मन्तप्रत्ययस्यादेर्वकारः स्यात् । वण्णव, वण्णवन्तो । भगव, भगवन्तो । आत्किम्, धीइमन्तो । जातिमन्तो । तिव्वलिओ । गठिल्लो । माइल्लो । कलुणो ।

आदिति—वण्णो अत्थि इमस्स वण्णव, वण्णवन्तो । वण्णशब्दान्मन्त-प्रत्ययेऽनेन मकारस्य वकारे न्तस्य लोप । अकारान्तपरस्य मन्तस्यादेर्वकारविधानेन वीइम, वीइमन्तो । जाती अत्थि इमस्स जातिम, जातिमन्तो । तिसूलो अत्थि इमस्स तिसूलिओ । त्रिशूलार्थकतिसूलशब्दादिक्प्रत्यय । गठी अत्थि इमस्स इत्यर्थे मत्वर्थकगठिशब्दादिल्लप्रत्यये गठिल्लो । माया अत्थि इमस्स माइल्लो । मायाशब्दादिल्लप्रत्यये टिलोपे यकारस्य लोपे प्रकृतिभाव । कलुणा अत्थि इमस्स कलुणो । कलुणशब्दादति प्रत्यये टिलोप । वण्णव=वर्णवान् । भगव=भगवान् । वीइमन्तो=वीचिमान् । जातिम=जातिमान् । तिसूलिओ=त्रिशूलिक । गठिल्लो=ग्रन्थिमान । माइल्लो=मायावी । कलुणो=करुण ।

## न्त आउसात् ।१।३।२५॥

आउसशब्दादुक्तेऽर्थे न्तप्रत्ययो वा स्यात् । आउसो, आउसन्तो ।

न्त इति—तदस्त्यस्य नाम्न प्रत्यय इति पदत्रयमनुवर्त्तते । आउसो अत्थि इमस्स आउसन्तो । अत्र आउसशब्दाद् न्तप्रत्यय । तदभावे अति प्रत्यये आउसो । मन्तप्रत्यये आउसमन्तो । आउसो इत्यस्यायुष्मानित्यर्थ ।

## गोर्मि ।१।३।२६॥

गोशब्दान्मिः प्रत्यय स्यादुक्तेऽर्थे । गोमी ।

गोरिति—नाम्न प्रत्यय तदस्त्यस्य इति पदत्रयस्यानुवृत्ति । अतएवाह उक्तेऽर्थे इति । गावो अत्थि इमस्स गोमी । गोमानित्यर्थ ।

## मिण स्त्रियाम् ।१।३।२७॥

गोशब्दादुक्तेऽर्थे मिण प्रत्यय स्यात् स्त्रियाम् । गोमिणी ।

मिण इति—गो नाम प्रत्यय तदस्त्यस्य इति पदचतुष्टयस्यानुवृत्ति । स्त्रियामित्युपादानात्पुंसि गोमिण इति न । गोशब्दाद् इमस्स अत्थीत्यर्थे मिण प्रत्यये ङीप्रत्यये गोमिणी । गोमतीत्यर्थ ।

## छवेरिये ।३।२।३५॥

छविशब्दस्य दीर्घोऽन्तादेश स्यादियप्रत्यये परे । छवीइए ।

छवेरिति—दीर्घ इत्यनुवर्त्तते । टिलोपापवादोऽयम् । तेन कृतेऽपि दीर्घे न टिलोप । दीर्घविधानसामर्थ्याद् दीर्घे कृते न पूर्वपरयोर्दीर्घ । छवी अत्थि इमस्स छवीइए । छविमानित्यर्थ ।

## हासादित्त. ।१।३।२८।

हासशब्दादित्तः प्रत्ययः स्यादुक्तेऽर्थे । हासइत्ता ।

हासादिति—नाम्न प्रत्यय तदस्त्यस्य इति पदत्रयमनुवर्त्तते । हासो अत्थि इमस्स हासइत्ता इत्यत्र हासशब्दादित्तप्रत्यय । हासवन्त इत्यर्थ । जयन्ति हासइत्ता । पण्ह० २।२॥

## जसादिभ्यो वा ।२।४।७२॥

जसादिशब्देभ्य परस्स मन्तप्रत्ययस्यादेर्वकारो वा स्यात् । जसवन्तो, जसमन्तो, जसोमन्तो । आयारवन्तो, आयारमन्तो । णातिवन्तो, णातिमन्तो ।

जसादिभ्य इति—आदेरिति मन्तस्य व इति चानुवर्त्तते । जसो अत्थि इमस्स जसवन्तो । वकाराभावे जसमन्तो । पक्षे ओजसादीनामित्यनेनोकारे जसोमन्तो । यशस्वानित्यर्थ । आयारो अत्थि इमस्स आयारवन्तो, वकाराभावे आचारवन्तो, वकाराभावे आचारमन्तो । आचारवानित्यर्थ । णाती अत्थि इमस्स णातिवन्तो । वकाराभावे णातिमन्तो । न्तलोपपक्षे तूदाहरण स्वय बोध्यम् । णातिवन्तो इत्यस्य ज्ञातिमान् ।

## इति सड्ढाया ।३।३।११॥

सड्ढाशब्दस्य ह्रस्वोऽन्तादेशो वा स्यादित्प्रत्यये परे । सड्ढई, सड्ढी ।

इतीति—ह्रस्व इति वेति चानुवर्त्तते । सड्ढा अत्थि इमस्स सड्ढई । अत्र सड्ढाशब्दादित्प्रत्यये टिलोप बाधित्वा ह्रस्वे सड्ढई । ह्रस्वाभावे टिलोप सड्ढी । श्रद्धावानित्यर्थ ।

## जयादिभ्य इण ।१।३।२९॥

एभ्य उक्तेऽर्थे इण प्रत्यय स्यात् । जइणो । दोसिणो । बरहिणो ।

जयादिभ्य इति—नाम्न प्रत्यय तदस्त्यस्य इति पदत्रयमनुवर्त्तते । जयो अत्थि इमस्स जइणो । इणप्रत्यये टिलोपे यकारलोपे प्रकृतिभाव । जयी, इत्यर्थ । दोसो अत्थि इमस्स दोसिणो । दोषीत्यर्थ । बरहो अत्थि इमस्स बरहिणो । बर्हीं इत्यर्थ । 'मयूरो बर्हिणो बर्हीं' इत्यमर ।

## किमेरिणस्य ।४।१।६॥

किमिशब्दात्परस्येणस्यादेर्लोप स्यात् । किमिणो ।

किमेरिति—लोप आदे इति पदद्वयमनुवर्त्तते। किमी अस्थि इमस्स किमिणो। किमिशब्दादिणप्रत्यये तस्यादेरिकारस्य लोप। किमिणो इत्यस्य कृमिमानित्यर्थ।

## पङ्कादीनां सञ्ज्ञाया मन्ते ।३।२।३८॥

पङ्कादिशब्दाना दीर्घोऽन्तादेश स्यान्मन्तप्रत्यये परे सञ्ज्ञायाम्। पङ्कावती।

पङ्कादीनामिति—दीघ इत्यनुवर्त्तते। पङ्को अस्थि इमस्स पङ्कावती। पङ्कशब्दान्मन्ते कृते दीर्घे पङ्कावतीति सिद्ध्यति। पङ्किल इत्यर्थ। 'सजम्बाले तु पङ्किल इत्यमर। आकृतिगणोऽयम्।

## इलो गन्धादिभ्य ।१।३।३०॥

गन्धादिभ्य इल• प्रत्यय स्यादुक्तेऽर्थे। गन्धिलो। तुन्दिलो।

इल इति—नाम्न प्रत्यय तदस्त्यस्य इत्येतेऽनुवर्त्तन्ते। गन्धो अत्थि इमस्स गन्धिलो। गन्धिल इत्यर्थ।

## जडाया उलेलेयाला ।१।३।३१॥

जडाशब्दादुक्तेऽर्थे उल इल इयाल इत्येते प्रत्यया' स्यु। जडुलो, जडिलो, जडियालो।

जडाया इति—अनुवृत्ति पूर्ववत्। उलश्च इलश्च इयालश्चेतीतरेतरयोगद्वन्द्व। जटार्थकजडाशब्दादुलप्रत्यये जडुलो, इलप्रत्यये जडिलो। इयाल प्रत्यये जडियालो। जटिल इत्यर्थ।

## रजादिलस्सलौ ।१।३।३२॥

रजशब्दादुक्तेऽर्थे इलस्मलप्रत्ययौ स्त। रइला, रजस्सला।

रजादिति—अनुवृत्ति पूर्ववत्। रजाद् इलस्सलौ इति च्छेद। इलश्च स्सलश्च इलस्सलौ। रजोवाचकरजशब्दादिलप्रत्यये टिलोपे जस्य यकारे लोपे प्रकृतिभावेऽप्प्रत्यये रइला। स्सलप्रत्यये तु रजस्सला। रजस्वलेत्यर्थ।

## पम्हादिभ्यो ल ।१।३।३६॥

पम्हादिशब्देभ्य उक्तेऽर्थे लप्रत्यय स्यात्। पम्हलो। पत्तलो। तणुलो।

पम्हादिभ्य इति—अनुवृत्ति पूर्ववत्। अत आह उक्तेऽर्थे इति। पम्ह

ृत्थि इमस्स पम्हलो । पक्ष्मल इत्यर्थ । पत्त अत्थि अस्स पत्तलो । पत्रल
त्यर्थ । तणू अत्थि अस्स तणुलो । तनुल इत्यर्थ ।

## लस्य क्वचित् ।२।३।२४॥

लप्रत्ययस्य द्वित्व स्यात् क्वचित् । नियडिल्लो ।

लस्येति—द्विरित्यनुवर्त्तते । लप्रत्ययोऽत्र मन्तार्थक एव ग्राह्य । क्वचिदि-
नेन यत्र प्रयोगे लद्वित्व प्रतीयते तत्रैवास्य प्रवृत्तिरिति ध्वनितम् ।

## आलुर्दयादिभ्य. ।१।३।२३॥

दयादिशब्देभ्य उक्तेऽर्थे आलुः प्रत्ययः स्यात् । दयालू । वीसरणालू ।

आलुरिति—नाम्न प्रत्यय तदस्त्यस्येत्येतेऽनुवर्त्तन्ते । दया अत्थि इमस्स
याल्लू । दयालुरित्यर्थ । वीसरण अत्थि इमस्स वीसरणालू । विशरणा-
लुरित्यर्थ ।

## उश्च लज्जाया वा ।१।३।२४॥

लज्जाशब्दादुक्तेऽर्थे वा उप्रत्ययः स्यात् । लज्जू, लज्जालू ।

उश्चेति—नाम्न प्रत्यय तदस्त्यस्य आलुरिति पदचतुष्टयमनुवर्त्तते । लज्जा
अत्थि इमस्स लज्जू । पक्षे आलुप्रत्यये तु लज्जालू । लज्जालुरित्यर्थ ।

## जसादिभ्यः सिस्सी च ।१।३।२५॥

जसादिशब्देभ्यः सिस्सिप्रत्ययौ भवतश्चकारादुक्ताः प्रत्ययाश्च स्यु ।

जसादिभ्य इति—अदणि० नाम्न प्रत्यय तदस्त्यस्येत्येतेऽनुवर्त्तन्ते ।
दादे प्रत्ययस्योदाहरण प्राय उक्तम् । प्रकृतप्रत्ययस्य तद् वक्ष्यते ।

## जसादीनां सौ ।४।२।२१॥

जसादिशब्दाना मगागमः स्यात्सौ परे। जससी, जसस्सी। तेजसी, तेजस्सी।
वचसी, वचस्सी । ओयसी, ओयस्सी ।

जसादीनामिति—मगित्यनुवर्त्तते । जसशब्दात् सिप्रत्यये मगागमे
जससी । सिस प्रत्यये तु जसस्सी । यशस्वीत्यर्थ । तेजो अत्थि इमस्स तेजसी,
तेजस्सी । तेजस्वीत्यर्थ । वचो अत्थि इमस्स वचसि, वचस्सी । वर्चस्वीत्यर्थ ।
ओओ अत्थि इमस्स ओयसी, ओयस्सी । ओजस्वीत्यर्थ ।

किमेरिति—लोप आदे इति पदद्वयमनुवर्त्तते। किमी अत्थि इमस्स किमिणो। किमिशब्दादिणप्रत्यये तस्यादेरिकारस्य लोप। किमिणो इत्यस्य कृमिमानित्यर्थ।

## पङ्कादीनां सञ्ज्ञायां मन्ते ।३।२।३८॥

पङ्कादिशब्दाना दीर्घोऽन्तादेश स्यान्मन्तप्रत्यये परे सञ्ज्ञायाम्। पङ्कावती।

पङ्कादीनामिति—दीर्घ इत्यनुवर्त्तते। पङ्को अत्थि इमस्स पङ्कावती। पङ्कशब्दान्मन्ते कृते दीर्घे पङ्कावतीति सिद्ध्यति। पङ्किल इत्यर्थ। 'सजम्बाले तु पङ्किल इत्यमर। आकृतिगणोऽयम्।

## इलो गन्धादिभ्य ।१।३।३०॥

गन्धादिभ्य इल प्रत्यय' स्यादुक्तेऽर्थे। गन्धिलो। तुन्दिलो।

इल इति—नाम्न प्रत्यय तदस्त्यस्स इत्येतेऽनुवर्त्तन्ते। गन्धो अत्थि इमस्स गन्धिलो। गन्धिल इत्यर्थ।

## जडाया उलेलेयाला ।१।३।३१॥

जडाशब्दादुक्तेऽर्थे उल इल इयाल इत्येते प्रत्यया. स्यु। जडुलो, जडिलो, जडियालो।

जडाया इति—अनुवृत्ति पूर्ववत्। उलश्च इलश्च इयालश्चेतीतरेतरयोग द्वन्द्व। जटार्थकजडाशब्दादुलप्रत्यये जडुलो, इलप्रत्यये जडिलो। इयाल प्रत्यये जडियालो। जटिल इत्यर्थ।

## रजादिलस्सलौ ।१।३।३२॥

रजशब्दादुक्तेऽर्थे इलस्सलप्रत्ययौ स्त। रइला, रजस्सला।

रजादिति—अनुवृत्ति पूर्ववत्। रजाद् इलस्सलौ इति च्छेद। इलश्च स्सलश्च इलस्सलौ। रजोरावर्रजशब्दादिलप्रत्यये टिलोपे जस्य यकारे लोपे प्रकृतिभावेऽप्प्रत्यये रइला। स्सलप्रत्यये तु रजस्सला। रजस्वलेत्यर्थ।

## पम्हादिभ्यो ल ।१।३।३६॥

पम्हादिशब्देभ्य उक्तेऽर्थे लप्रत्यय' स्यात्। पम्हलो। पत्तलो। तणुलो।

पम्हादिभ्य इति—अनुवृत्ति पूर्ववत्। अत आह उक्तेऽर्थे इति। पम्ह

इण् इति—नाम्न प्रत्यय तस्य भाव इति पदत्रयमनुवर्त्तते। जडस्स भावो जडिणो। जडत्वमित्यर्थ । णिगणगशब्दौ द्वावपि नग्नार्थौ । तस्मादिणप्रत्यये णिगिणो णगिणो । अस्य वैकल्पिकत्वेन पक्षेऽणि कृते णग्ग नग्नत्वमित्यर्थ । मुण्डशब्दादिणप्रत्यये मुण्डिणो। मुण्डत्वमित्यर्थ । सघातवाचकसघाडशब्दादिणप्रत्यये सघाडिणो। सघातत्वमित्यर्थ ।

## इयण् इस्सरादिभ्यः ।१।३।४१॥

इस्सरादिशब्देभ्यो भावे इयणप्रत्ययः स्यात्। इस्सरिय। अज्जविय। सामग्गिय।

इयणिति—पूर्ववदनुवृत्ति । इस्सरस्स भावो इस्सरिय। ऐश्वर्यम्। उज्जु शब्दादियप्रत्यये अज्जविय। आर्जवमित्यर्थ । आद्युकारस्याकारोऽन्त्योकारस्यावादेशश्च। अणि तु अज्जव इत्युक्तम्। समग्गशब्दादियण्प्रत्यये वृद्धौ सामग्गिय। सामग्र्यमित्यर्थ । अज्जविय इत्यादौ वृद्धावपि सयुक्ते ह्रस्वस्य बाहुलकत्वेनात्र नित्यतया प्रवृत्तौ न वृद्धिश्रवणम्।

## अप्पबहो. कश्च ।१।३।३९॥

अप्पबहुशब्दाद्भावे कप्रत्ययश्चकाराद्यथाप्राप्तम् । अप्पाबहुय। अप्पाबहुग। अप्पाबहुक। अप्पाबहुत्त।

अप्पबहोरिति—तस्य भाव इति अदणि० इति चानुवर्त्तते। अप्प च बहू च अप्पाबहू। समाहारद्वन्द्व। उत्तरपदे परे दीर्घः। तस्माद्भावे कप्रत्यये अप्पाबहुय। अल्पबहुत्वमित्यर्थ । यथाप्राप्तमित्यस्य फलमाह अप्पाबहुत्त इति।

## अप्पाबह्वादिभ्यो भावस्य ।३।४।७२॥

एभ्य' परस्य भावप्रत्ययस्य लोपो वा स्यात्। अप्पाबहु।

अप्पेति—लोप इति वेति चानुवर्त्तते। भावपदस्य भावार्थके लक्षणया आह भावप्रत्ययस्येति। अप्पाबहुशब्दाद्भावे कादिप्रत्यये लोपे अप्पाबहु । अल्प बहुत्वमित्यर्थ ।

## अहिकादिभ्योऽण् ।१।३।४२॥

एभ्यो भावेऽण्प्रत्यय. स्यात्। आहिक।

अहिकेति—तस्य भाव नाम्न प्रत्यय इत्येतेषामनुवृत्ति। अहिकस्स भावो आहिक। आधिक्यमित्यर्थ । पयात्यादित्वादणि द्वित्वम्।

## तत्त्वणा तस्य भाव ।१।३।३७॥

षष्ठयन्तान्नाम्न इत्यर्थे तत्त्वणप्रत्यया स्यु । अयत्तण । तीयत्तण । पहुत्तण । अधत्तण ।

तत्तणा इति—नाम्न प्रत्यय इत्युभयमनुवर्त्तते । प्रकृतिजन्यबोध प्रकारीभूतो भाव इत्यभिधीयते । अयशब्दात् त्तणप्रत्यये अयत्तण । आम्रत्वमित्यर्थ । तीयशब्दात्त्तणप्रत्यये तीयत्तण । तृतीयत्वमित्यर्थ । पहुशब्दात् त्तणप्रत्यये पहुत्तण । प्रभुत्वमित्यर्थ । अधशब्दात् त्तणप्रत्यये अधत्वमित्यर्थ । अत्र त्तणान्त क्लीबे । तान्त स्त्रिया त्तान्त विकल्पेन स्त्रियाम् । त्तौ स्त्रीप्रत्यय उदाहृतौ । तत्र द्रष्टव्यौ ।

## जहातहश्चाति ।२।३।७३॥

जहातहाशब्दस्योपधायाश्चकारो वा स्यादति परे । जहातच । जहातह ।

जहेति—उपधाया इति चेति चानुवर्त्तते । जहा तहा भावो जहातच जहातह, जहातच जहातह । जहातहाशब्दादति कृते उपधायाश्चकारे सनि पयात्यादित्यात् द्वित्वम् । जहातह इत्यस्य यथातथमित्यर्थ ।

## जहातहोऽदियणौ ।१।३।३८॥

जहातहाशब्दाद्भावेऽद् इयण् प्रत्ययौ भवत ।

जहातह इति—तस्य भाव नाम्न प्रत्यय इत्येतेऽनुवर्त्तन्ते । जहातहाशब्दोऽव्ययसमुदाय सुप् सुपा इत्यनेन समस्त । जहातहाभावो जहातह । जहातह । अतप्रत्यये परे टिलोप ।

## जहातहस्तस्येयणि ।३।३।३२॥

जहातहाशब्दसम्बन्धिनस्तकारस्य द्वित्व वा स्यादियण्प्रत्यये परे । आहत्तहिय, आहातहिय, जाहातहिय ।

जहातह इति—द्विरित्यस्य चेत्यस्य चानुवृत्ति । विच्छेदेन पुनर्जहातहाशब्दपाठ कृत । जहातहाशब्दादियण्प्रत्यये तकारस्य द्वित्वे वृद्धौ सयुक्ते ह्रस्वे आहत्तहिय । एव जाहत्तहिय । याथातथिकमित्यर्थ ।

## इणो जडादिभ्य ।१।३।४०॥

जडादिशब्देभ्यो भावे इणप्रत्ययो वा स्यात् । जडिणो । सिंगिणो । सगिणो । नग्ग । मुडिणो । सघाडिणो ।

इणा इति—नाम्न' प्रत्यय तस्य भाव इति पदत्रयमनुवर्त्तते। जडस्स भावो जडिणो। जडत्वमित्यर्थ। णिगणगशब्दौ द्वावपि नग्नार्थौ। तस्मादिणप्रत्यये णिगिणो णगिणो। अस्य वैकल्पिकत्वेन पक्षेऽणि कृते णग्ग नग्नत्वमित्यर्थ। मुण्डशब्दादिणप्रत्यये मुडिणो। मुण्डत्वमित्यर्थ। सघातवाचकसघाडशब्दादिणप्रत्यये सघाडिणो। सघातत्वमित्यर्थ।

## इयण् इस्सरादिभ्यः ।१।३।४१॥

इस्सरादिशब्देभ्यो भावे इयण्प्रत्ययः स्यात्। इस्सरिय। अज्जविय। सामग्गिय।

इयणिति—पूर्ववदनुवृत्ति। इस्सरस्स भावो इस्सरिय। ऐश्वर्यम्। उज्जुशब्दादियप्रत्यये अज्जविय। आर्जवमित्यर्थ। आद्युकारस्याकारोऽन्त्योकारस्यावादेशश्च। अणि तु अज्जव इत्युक्तम्। समग्गशब्दादियण्प्रत्यये वृद्धौ सामग्गिय। सामग्र्यमित्यर्थ'। अज्जविय इत्यादौ वृद्धावपि सयुक्ते ह्रस्वस्य बाहुलकत्वेनात्र नित्यतया प्रवृत्तौ न वृद्धिश्रवणम्।

## अप्पवहो' कश्च ।१।३।३९॥

अप्पवहुशब्दाद्भावे कप्रत्ययश्चकाराद्यथाप्राप्तम्। अप्पावहुय। अप्पाबहुग। अप्पाबहुक। अप्पाबहुत्त।

अप्पबहोरिति—तस्य भाव इति अदणि० इति चानुवर्त्तते। अप्प च बहू च अप्पावहू। समाहारद्वन्द्व। उत्तरपदे परे दीर्घः। तस्माद्भावे कप्रत्यये अप्पावहुय। अल्पबहुत्वमित्यर्थ। यथाप्राप्तमित्यस्य फलमाह अप्पाबहुत्त इति।

## अप्पावह्वादिभ्यो भावस्य ।३।४।७२॥

एभ्य परस्य भावप्रत्ययस्य लोपो वा स्यात्। अप्पाबहु।

अप्पेति—लोप इति वेति चानुवर्त्तते। भावपदस्य भावार्थके लक्षणया आह भावप्रत्ययस्येति। अप्पावहुशब्दाद्भावे यादिप्रत्यये लोपे अप्पाबहु। अल्पबहुत्वमित्यर्थ।

## अहिकादिभ्योऽण् ।१।३।४२॥

एभ्यो भावेऽण्प्रत्यय' स्यात्। आहिक।

अहिकेति—तस्य भाव नाम्न प्रत्यय इत्येतेषामनुवृत्ति। अहिकस्स भावो आहिक। आधिक्यमित्यर्थ। पयात्यादित्वादणि द्वित्वम्।

## तेलोकादिभ्य स्वार्थे ।१।२।४४॥

तैलोक्यादिशब्देभ्य स्वार्थेऽण् स्यात् । तेलुक, तेलोक । सेन्न । सान्निद्ध । सामीप्प । ओवम्म । दोहग्ग । सोहग्ग ।

तैलोकादिभ्य इति—अण् नामः प्रत्ययः इति पदत्रयमनुवर्त्तते । भाव इत्यस्य निवृत्त्यर्थमाह स्वार्थ इति । त्रयो लोका तेलुक, तेलोक । तिलोकशब्दात् स्वार्थेऽणि कृते आदिस्वरवृद्धौ संयुक्ते ह्रस्वे तेलुक । ह्रस्वाभावे तेलोक । सेना एव सेन्न । सन्निधी एव सान्निद्ध । समीप एव सामीप्प । उवमा एव ओवम्म । दुहग्ग एव दोहग्ग । सुहग्ग एव सोहग्ग । सर्वत्र स्वार्थेऽणि कृते यथात्यादीनामिति सूत्रेणो पधाया द्वित्वम् । तेलुक=त्रैलोक्यम् । सेन्न=सैन्यम् । सान्निद्ध=सान्निध्यम् । सामीप्प=सामीप्यम् । ओवम्म=औपम्यम् । दोहग्ग=दौर्भाग्यम् । सोहग्ग= सौभाग्यम् ।

## आतो जुवाणस्य वस्य द्विर्वाऽणि ।२।२।१७॥

जुवाणशब्दस्यातो ह्रस्वो वस्य तु द्विर्वा स्यादणि । जुव्वण, जोव्वण । जोवण, जोवणग ।

आत इति—अणि परे उपधाया द्वित्वविधानेनात्राप्राप्त्या पुनर्विधानम् । ह्रस्व इत्यनुवर्त्तते । तस्यात इत्यनेन सम्बन्ध । 'वा' इत्यनेन तु द्विरित्यस्यैव सम्बन्धो न तु 'ह्रस्व' इत्यस्यापि । अत एवात् वस्य द्विर्वेति । जुवाणस्स भावो जुव्वण इत्यादि । जुवाणशब्दादणि कृते ह्रस्वे द्वित्वे च जुव्वण इति । जोवणग इत्यत्र तु अणन्तात्स्वार्थे गो बोध्य । जुव्वण इत्यादे यौवनमित्यर्थ ।

## दूतादीनाञ्च ।२।३।७६॥

एषामुपधायाश्चकारो वा स्यादणि परे । दोच ।

दूतादीनामिति—अणि उपधाया वेति पदत्रयमनुवर्त्तते । दूतस्स भावो दोच, दोत्त । दूतशब्दादणि कृते उपधायाश्चकारे द्वित्वम् । चकाराभावे तकारस्यो पधाभूतस्य द्वित्वम् । आदिस्वरस्य वृद्धिस्तूभयत्र । अयञ्चाकृतिगण । दोच= दौत्यमित्यर्थ ।

## वियावडादियण् वा ।१।३।४३॥

वियावडशब्दाद्भावे इयण् वा स्यात् । वेयावडिय, वेयावच्च ।

वियावडादिति—नाम्न' प्रत्यय अण् तस्य भाव' इत्येतेऽनुवर्त्तन्ते। व्यापृत्तार्थकवियावडशब्दाद्भावे इयण्प्रत्यये वृद्धौ वेयावडिय। अणि तूपधायाश्चाकारे वेयावच्च। वैयावृत्यमित्यर्थ।

## थेरादीनां ज ।२।३।७७॥

थेरादीनामुपधाया जकारः स्यादणि परे। थेज्ज। धेज्ज। सहेज्ज।

थेरादीनामिति—उपधाया इत्यणीति च पदद्वयमनुवर्त्तते। थेरस्स भावो इत्यर्थे थेरशब्दादणि प्रत्यये उपधाया जकारे द्वित्वे थेज्ज। एव धीरस्स भावो धेज्ज। सहायस्स भावा सहेज्ज।

## अणि कलुणस्यौत् ।३।३।७०॥

कलुणशब्दस्य स्वराणां मध्य आदे' स्वरस्यौकारादेशो वा स्यादणि परे। कोलुण्ण।

अणीति—स्वराणाम् आदे स्वरस्य वा इत्येतेषामनुवृत्ति। कलुण एव कोलुण्ण, कालुण्ण। कलुणशब्दात्स्वार्थेऽणि अकारस्याकारे उपधाया द्वित्वे कोलुण्ण, ओकाराभावे कालुण्ण। कारुण्यमित्यर्थ।

## वच्चादावहिपुरयोरेत् ।४।४।५५॥

अहिपुरशब्दयोरेकारोऽन्तादेशः स्याद्वच्चादौ शब्दे परे। आहेवच्च। पोरेवच्च। पोरेकच्च। पोरेगत्त।

वच्चेति—अहिश्च पुरश्चाहिपुरौ तयो। अहिपतिस्स भावो आहेवच्च। अहिवतिशब्दादणि कृते पयावत्यादिगणपाठेन टिलोपनिषेधे तकारात्परस्येकारस्य चकारे तकारस्य परसवर्णे वच्चे परेऽनेनाहेरिकारस्यैकारे आहेवच्च। आधिपत्यमित्यर्थ। पुरवतिस्स भावो पोरेवच्च। पौरपत्यमित्यर्थ। पोरेकच्च। अणि परे कडस्योपधायाश्चकारे द्वित्वम्। पौरस्कृत्यमित्यर्थ। पोरेगत्त इत्यत्र गतशब्दस्योपधाया अणि परे द्वित्वम्। पौरोगत्यमित्यर्थ।

## वा ह. सफले फस्य ।४।४।७३॥

सफलशब्दघटकफकारस्य हकारो वा स्यादणि परे। साहल्ल, साफल्ल।

वेति—अणीत्यनुवर्त्तते। वा ह इति हकारोत्तराकार उच्चारणार्थ। सफले इत्यत्र सप्तम्यर्थो घटकत्वमत एवाह शब्दघटकेति। सफलस्स भावो साहल्ल। अणि परे फकारस्य हकार उपधाया द्वित्वञ्च। पक्षे साफल्ल। साफल्यमित्यर्थ।

## भिगोश्च॰ शिष्य॰ ।१।४।५॥

षष्ठयन्ताद् भिगुशब्दात् चप्रत्यय' स्याच्छिष्य इत्यर्थे । भिउच्चो ।

भिगोरिति—नाम्न प्रत्यय इत्युभयोरनुवृत्ति । भिगुणो सिस्सो भिउच्चो । भिगुशब्दात् चप्रत्यये गकारस्य यकारे लोपे भिउच्चो । अपत्येऽणि भागवो । उज्ज्वादित्यादिकारस्याकार । उकारस्य स्ववादेश । भिग्गो इत्यस्य भृगो शिष्यो भार्गव इत्यर्थ ।

## करादियोगे सपद्यकर्त्तर्यत्तादिभ्य ईरभूततद्भावे ।१।४।२३॥

विकारात्मता प्राप्नुवत्यां प्रकृतौ वर्त्तमानेभ्यो विकारशब्देभ्योऽत्तादिभ्य स्वार्थे ई प्रत्यय स्यात् करादियोगेऽभूततद्भावे गम्यमाने । अत्तीकरेई । ईसरीकरो । गाहीकओ । एगीभूए । दरिद्दीहूय ।

करादियोग इति—नाम्न इति प्रत्यय इति चानुवर्त्तते। सम्पद्यश्चासौ कर्त्ता सम्पद्यकर्त्ता तस्मिन् सम्पद्यकर्त्तरि । तत्फलितमाह विकारात्मतामित्यादि । येन रूपेण प्रागभूत तेन रूपेण तस्य भावे इत्यभूततद्भावे इत्यस्य फलितोऽर्थ । तथा च तत्रैवाय प्रत्ययो यत्र विकाररूपतामापद्यमान प्रकृतिरूपमेव विवक्ष्यते। इति निर्गलितोऽर्थ ।अत्तशब्दादीप्रत्यये।अत्तीकरेई। आत्मीकरोतीत्यथ । ईसरशब्दादीप्रत्यये ईसरीकरो। ईश्वरीकर इत्यर्थ । एवमन्येऽपि। तत्र एगीभूए इत्यस्यैकीभूत । दरिद्दीहूय इत्यस्य दरिद्रीभूयेत्यर्थो ज्ञेय ।

## मोल्यादिभ्य ईत ।३।४।५३॥

मोल्यादिशब्देभ्य' परस्येप्रत्ययस्य लोप' स्यात् । मोलिकडो ।

मोल्यादिभ्य इति—लोप इत्यनुवर्त्तते । मोलिरादिर्येषा ते मोल्यादय । आकृतिगणोऽयम्। मोलिश ब्दादीप्रत्यये तस्यानेन सूत्रेण लोपे मोलिकडो। मौलीकृत इत्यर्थ ।

## आमादिभ्य प्राचुर्ये ।१।३।७॥

आमादिशब्देभ्य प्राचुर्येऽर्थे मयप्रत्यय स्यात् । आममय । सरमय । तिणमय । आणदमय । णाणमय । वईमय ।

आमादिभ्य इति—नाम्न प्रत्यय मय इति पदत्रयमनुवर्त्तते । आमस्स पाचुरिय आममय। सरस्स पाचुरिय सरमय । तिणस्स पाचुरिय तिणमय । आणदस्स पाचुरिय आणदमय। णाणस्स पाचुरिय णाणमय । सर्वत्र प्राचुर्येऽर्थे

मय । आममय=आम्रमयम् । सरमय=शरमयम् । तिणमय=तृणमयम् । आण-न्दमय=आनन्दमयम् । णाणमय=ज्ञानमयम् । वईमय=वचोमयम् ।

## ओदयादीनां मये ।४।४।८४॥

अयादिशब्दानामोकारोऽन्तादेशः स्यान्मये परे । अयोमय । वओमय । जमोमय ।

ओदिति—अयसः विकारो अयोमय । वअसः पाचुरिय वओमय । जससः पाचुरिय जसोमय । सर्वत्र मये परे ओकारोन्तादेश । वओमय=वचोमयम । जशोमय=यशोमयम् ।

## सुकुमारस्य सुगमलोऽणि ।३।३।४९॥

अस्याणि परे सुगमलादेशो वा स्यात् । सोगमल्ल, सोगुमार ।

सुकुमारस्येति—वेत्यनुवर्त्तते । सुकुमारस्स भावो इति विग्रहेऽणि कृतेऽनेन सुगमलादेशे वृद्धौ द्वित्वमुपधाया । पक्षे सोगुमार । अस्य गणे पाठाभावान्न द्वित्वम् । सुगमलशब्दस्यैव हि विशिष्य तत्र पाठ । अन्यथासुकुमारशब्दपाठेनैव स्वस्य स्थानिवद्भावेन सुगमलशब्दस्य च ग्रहणसम्भवेन तस्य विशिष्य निर्देशस्य वैयर्थ्यापत्ते ।

## अङ्गादीनां मये ।३।२।५१॥

एषा दीर्घोऽन्तादेशो वा मये परे । अङ्गामय, अङ्गमय । रययामय, रययमय ।

अङ्गादीनामिति—दीर्घ इत्यस्य वा इत्यस्य च सम्बन्ध । अङ्गस्स विकारो रययस्स विकारो इत्यर्थे मये दीर्घ । अङ्गमय रजतमयमिति क्रमेणार्थ ।

## इङ्गालादिभ्यो भो भवयोगे ।१।४।३४॥

एभ्यो भ' प्रत्यय स्याद्भवधातुयोगे । इङ्गालब्भूया । छारियब्भूया । तत्तक-वेल्लकब्भूया ।

इङ्गालादिभ्य इति—सम्पद्यकर्त्तरि इत्यस्याभूततद्भावे इत्यस्य चानुवृत्ति । तथा च विकारात्मताम् प्राप्नुवत्याम् प्रकृतौ वर्त्तमानेभ्य इङ्गालादिभ्यो भ प्रत्यय स्यादभूततद्भावे गम्यमाने इत्यर्थो निर्गलित । प्रत्ययेऽकार उच्चारणार्थ । अतएव परसवर्णेन बकार । महाविभाषासम्बन्धादिङ्गालीभूयेत्यपि बोध्यम् ।

## मणादिभ्य ईत सुट् ।४।२।९॥

एभ्यः परस्येप्रत्ययस्य सुडागम' स्यात् । मणसीकरेइ ।

मणादिभ्य इति—ईमत्ययेनामूततद्भावार्थक एव गृह्यते । लक्ष्यानुरो धात् । तेन नान्यत्र मुडागम । विशेषविहितत्वेन पूर्वं मुटि स्वरादित्वाभावा ड्डिद्भावाभावेन न टिलोप ।

## कजतेतेभ्यः परिमाणे मन्तावतियौ ।१।४।४६॥

एभ्यः परिमाणेऽर्थे मन्तआवतियप्रत्ययौ स्तः ।

कजतेतेभ्य इति—कश्च जश्च तश्च एतश्चेति द्वन्द्व । मन्तश्च आवतियश्च मन्तावतियौ ।

## कान्मन्तस्यैयाद् ।४।२।६१॥

अस्मात्परस्य मन्तप्रत्ययस्य एयाडागम' स्यात् । केयाव, केयावन्तो । स्त्रिया केयानन्ती । जाव, जावन्तो । ताव, तावन्तो । एयाव, एयावन्तो ।

कादिति—कात् मन्तस्य एयाट् इति पदत्रयम् । कशब्दान्मन्तप्रत्यये एयाडागमे स्वरादित्वाड्डिद्भावेन टिलोप । मकारस्य वकार । न्तस्य लोप । कियान् । कियन्ती । जावन्त । तावन्त । एतावन्त इति क्रमेणार्थ ।

## एरावतियस्य कात् ।३।२।२१॥

अस्मात्परस्यावतियप्रत्ययस्यादेरेकार' स्यात् । केवतिए । जावतिए । तावतिए । एतावतिए ।

एरिति—आदेरित्यनुवर्त्तते । आवतियस्यादेरनेनैकारे टिलोप । कात्किम् । जावतिए ।

## कात्तिश्च सख्यापरिमाणे ।१।४।३६॥

कशब्दात्तिप्रत्ययश्च स्यात्सख्यापरिमाणेऽर्थे । कइ, कवि ।

कादिति—सख्याया परिमाण परिच्छेद । तस्मिन् कर्त्तव्ये य प्रश्न-स्तद्वाचकात्कशब्दादस्येत्यर्थे तिप्रत्ययो भवतीति निर्गलितम् । चकारान्मन्ताव-तियौ भवत । उदाहरणञ्चोक्तम् ।

## जतेतेभ्यस्तियत्तिलौ चापि ।१।४।४७॥

एभ्य परिमाणेऽर्थे । तियत्तिलावपि भवत । चात्तिश्च ।

जतेतेभ्य इति—जश्च तश्च एतश्चेति द्वन्द्व । तियश्च त्तिलश्च तियत्तिलौ । अपिकार समुच्चयार्थ । तेनान्येऽपि परिमाणार्थका समुच्चिता । चकारश्च

त्तिप्रत्ययस्यामेतनस्यानुकर्षणार्थं । अत एवाह चात्तिश्चेति । अनुकृष्टेश्च लक्ष्यानुरोधाद्व्यवस्थितत्वेन नैतशब्दात्तिप्रत्यय । तादृशलक्ष्यानभिधानात् । एव तैताभ्यामेव तिलप्रत्ययो न तु जशब्दात्।

## जताभ्यां तियस्य ।३।३।४१॥

जताभ्या परस्य तियस्यादेर्द्वित्व स्यात्। जत्तिए। तत्तिए। तत्तिलो। जइ, जत्ति। तइ, तत्ति।

जताभ्यामिति—आदेरिति द्विरिति चानुवर्त्तेते। तियप्रत्यये तकारस्य द्वित्वम्। "जस्स जइ इदियाइ तस्स तइ भणियव्वाइ" भग० ८–१०।

## एतस्य वत्तिये ।२।३।६२॥

अस्योपधाया वकारो वा तिये परे। एवइए, एवत्तिए। पक्षे—

एतस्येति—उपधाया वा इत्यनयो पदयोरनुवृत्ति। तियप्रत्यये तकारस्योपधाभूतस्य वकार। उपधाभूतस्यानेन वकारविधानेन लोपस्य सर्वतो बलवत्त्वेऽपि न पूर्वं लोप। तथा सति उपधात्वस्यैव नाशापत्ते। समुदायविशिष्टस्यैवोपधापदार्थत्वात्। वैशिष्ट्य स्वघटकत्वस्वघटकान्त्यवर्णावधिकपूर्वत्वोभयसम्बन्धेन। अत पूर्वमेतस्यैव प्रवृत्तेराह पक्षे इति। लोपस्य तु तस्य विधानेऽपि चारितार्थ्यं सम्भवति।

## एतस्य तियत्तिलयोः ।३।४।८२॥

एतशब्दान्त्यस्य लोप. स्यात्तियत्तिलपरयो.। इत्तिए, एत्तिए। एत्तिलो।

एतस्येति—लोप इत्यनुवर्त्तते। तियप्रत्ययेऽन्त्यलोपे प्रत्ययतकारस्य द्वित्वे त्रिव्यञ्जनसयोगात्पूर्वस्य लोप। येनानाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति इति न्यायेन बाध्यबाधकस्थले बाध्यस्य पुन प्राप्तावपि न प्रवृत्तिर्भवति। अतएव वकारविधिरपि चरितार्थो भवति। अन्यथा वकारकरणेऽनेनान्त्यलोपे त्रिव्यञ्जनसयोगे वकारस्य लोपे परसवर्णेन तकारे च वकारश्रवणासम्भवेन तद्विधानमेव व्यर्थं स्यात्। मन्मते तु पक्षे प्रवृत्त्या सकलेष्टसिद्धि। अतएव मूले उक्त पक्षे इति। वकाराभावे इति तदर्थ। एवञ्च वकारपक्षे नैतस्य प्रवृत्तिर्भवतीति सिद्धम्।

## तस्य पूरणे म ।१।३।४७॥

मणादिभ्य इति—ईप्रत्ययेनाभूततद्भावार्थक एव गृह्यते । लक्ष्यानुरोधात् । तेन नान्यत्र सुडागम । विशेषविहितत्वेन पूर्वं सुटि स्वरादित्वाभावाद्विद्भावाभावेन न टिलोप ।

## कजतेतेभ्य परिमाणे मन्तावतियौ ।१।४।४६॥

एभ्य' परिमाणेऽर्थे मन्तआवतियप्रत्ययौ स्त' ।

कजतैतेभ्य इति—कश्च जश्च तश्च एतश्चेति द्वन्द्व । मन्तश्च आवतियश्च मन्तावतियौ ।

## कान्मन्तस्यैयाट् ।४।२।६१॥

अस्मात्परस्य मन्तप्रत्ययस्य एयाडागम स्यात् । केयाव, केयावन्तो । स्त्रिया केयावन्ती । जाव, जावन्तो । ताव, तावन्तो । एयाव, एयावन्तो ।

कादिति—कात् मन्तस्य एयाट् इति पदत्रयम् । कशब्दान्मन्तप्रत्यये एयाडागमे स्वरादित्वाद्विद्भावेन टिलोप । मकारस्य वकार । न्तस्य लोप । कियान् । कियन्ती । जावन्त । तावन्त । एतावन्त इति क्रमेणार्थ ।

## एरावतियस्य कात् ।३।२।२१॥

अस्मात्परस्यावतियप्रत्ययस्यादेरेकारः स्यात् । केवतिए । जावतिए । तावतिए । एतावतिए ।

एरिति—आदेरित्यनुवर्त्तते । आवतियस्यादेरनेनैकारे टिलोप । कात्किम् । जावतिए ।

## कात्तिश्च सख्यापरिमाणे ।१।४।३६॥

कशब्दात्तिप्रत्ययश्च स्यात्सख्यापरिमाणेऽर्थे । कइ, कति ।

कादिति—सख्याया परिमाण परिच्छेद । तस्मिन् कर्त्तव्ये य प्रश्नस्तद्वाचकात्कशब्दादस्मिन्नर्थे तिप्रत्ययो भवतीति निर्गलितम् । चकारान्मन्तावतियौ भवत । उदाहरणञ्चोक्तम् ।

## जतेतेभ्यस्तियत्तिलौ चापि ।१।४।४७॥

एभ्य परिमाणेऽर्थे । तियत्तिलावपि भवत' । चात्तिश्च ।

जतैतेभ्य इति—जश्च तश्च एतश्चेति द्वन्द्व । तियश्च त्तिलश्च तियत्तिलौ । अपिकार समुच्चयार्थ । तेनान्येऽपि परिमाणार्थका समुच्चिता । चकारश्च

तिप्रत्ययस्यामेतनस्यानुकर्षणार्थं । अत एवाह चात्तिश्चेति । अनुकृष्टेश्च लक्ष्यानुरोधाद्व्यवस्थितत्वेन नैतशब्दात्तिप्रत्यय । तादृशलक्ष्यानभिधानात । एव तैताभ्यामेव तिलप्रत्ययो न तु जशब्दात् ।

## जताभ्यां तियस्य ।२।३।४१॥

जताभ्या परस्य तियस्यादेर्द्वित्व स्यात् । जत्तिए । तत्तिए । तत्तिलो । जइ, जति । तइ, तति ।

जताभ्यामिति—आदेरिति द्विरिति चानुवर्त्तेते । तियप्रत्यये तकारस्य द्वित्वम् । "जस्स जइ इदियाइ तस्स तइ भणियव्वाइ" भग० ८–१० ।

## एतस्य वस्तिये ।२।३।६२॥

अस्योपधाया वकारो वा तिये परे । एवइए, एवतिए । पक्षे—

एतस्येति—उपधाया वा इत्यनयो पदयोरनुवृत्ति । तियप्रत्यये तकारस्योपधाभूतस्य वकार । उपधाभूतस्यानेन वकारविधानेन लोपस्य सर्वतो बलवत्त्वेऽपि न पूर्वं लोपः । तथा सति उपधात्वस्यैव नाशापत्ते । समुदायविशिष्टस्यैवोपधापदार्थत्वात् । वैशिष्ट्य स्वघटकत्वस्वघटकान्त्यवर्णावधिकपूर्वत्वोभयसम्बन्धेन । अत पूर्वमेतस्यैव प्रवृत्तेराह पक्षे इति । लोपस्य तु तस्य विधानेऽपि चारितार्थ्यं सम्भवति ।

## एतस्य तियत्तिलयोः ।२।४।८२॥

एतशब्दान्त्यस्य लोप. स्यात्तियत्तिलपरयो । इत्तिए, एत्तिए । एत्तिलो ।

एतस्येति—लोप इत्यनुवर्त्तते । तियप्रत्ययेऽन्त्यलोपे प्रत्ययतकारस्य द्वित्वे त्रिव्यञ्जनसयोगात्पूर्वस्य लोप । येनानाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति इति न्यायेन बाध्यबाधकस्थले बाध्यस्य पुन प्राप्तावपि न प्रवृत्तिर्भवति। अतएव वकारविधिरपि चरितार्थो भवति । अन्यथा वकारकरणेऽनेनान्त्यलोपे त्रिव्यञ्जनसयोगे वकारस्य लोपे परसवर्णन तकारे च वकारश्रवणासम्भवेन तद्विधानमेव व्यर्थं स्यात् । मन्मते तु पक्षे प्रवृत्त्या सकलेष्टसिद्धि' । अतएव मूले उक्त पक्षे इति । वकाराभावे इति तदर्थ । एवञ्च वकारपक्षे नैतस्य प्रवृत्तिर्भवतीति सिद्धम् ।

## तस्य पूरणे म ।१।३।४७॥

षष्ठ्यन्तात्पूरणेऽर्थे म' प्रत्यय' स्यात् । पञ्चम । सत्तम । अट्ठम । नवम । अट्ठारसम । वीसइम ।

तस्येति—पचण्ह, सत्तण्ह, अट्ठण्ह, नवण्ह, अट्ठारसण्ह, वीसईण्ह पूरण इत्यर्थे मप्रत्यय ।

## दुतिभ्या डीयतियतीयच्चण' ।१।३।४८।।

आभ्या षष्ठ्यन्ताभ्या पूरणेऽर्थे डीयतियतीयचणू प्रत्यया स्युः ।

दुतिभ्यामिति—तस्य पूरणे इत्यनुवर्त्तते । डीयश्च तियश्च तीयश्च चणू चेति द्वन्द्व ।

## डीयतियतीयेपु दोर्विः ।४।४।८७।।

दुशब्दस्य व्यादेश स्याड्डीयतियतीयेपु परेपु । बीय । बिइय, बितिय । बितीय ।

डीयतियेति—दो वि इति भिन्न पदम । डीयप्रत्यये वि इत्यादेशे टिलोप । बिइय इत्यत्र तकारस्य यकारे लोप ।

## दोस्तियतीययोर्ज्ज ।२।३।७४।।

दुशब्दात्परयोरनयोरुपधाया ज्ञादेशो वा स्यात् । वितिज्ज । पक्षे रूपमुक्तम् । दोच्च ।

दोरिति—वापदोपधापदयो सम्बन्ध । आदेशे अकार उच्चारणार्थ । आदशश्च जद्वयघटित' । उपधाया जकारे सयुक्ते ह्रस्वदीर्घघटिते । पक्षे वितिय । वितीय चणू प्रत्यये वृद्धौ दोच्च । यद्यप्येकेनापि सम्भवति बितिज्ज । तथापि विनिगमनाविरहादुभयोरुपादानम् । द्वितीयमर्थे ।

## तेश्चणि चात् ।४।४।८८।।

तिशब्दस्याकारान्तादेश स्याद् चणिडीयतियतीयेपु च । तीय । तइय, तईय, तच्च ।

तेरिति—ते , चणि, च, अत्, इति चत्वारि पदानि । डीयतियतीयेपु इत्यनुवर्त्तते । डीयप्रत्यये परेऽदादेशो विधीयता मा वा विधीयता टिलोपेन समानमेव रूपम् । अतएव रूपस्यैक्य तस्मिन्परे । एकदेशानुवृत्ते क्वाचित्कतया ज्ञापकसाध्यतया च समुदायस्यैवानुवृत्तेरनेन तस्मिन्नपि विधीयते तदादेश । एतेन डीयेऽदादेशो विफल इति प्रत्युक्तम् । चणि परे वृद्धावपि सयुक्ते बाहुलकादित्य ह्रस्वो भवति ।

## चतोस्त्थः ।१।३।५०॥

चतुश्शब्दात्पूरणेऽर्थे त्थ' प्रत्ययः स्यात् । चउत्थ, चतुत्थ ।

चतोरिति—तस्य पूरण इत्यनुवर्त्तते । चउण्ह पूरण चउत्थ । चतुश्शब्दात् त्थप्रत्यय । तकारस्य यकारे लोप । तदभावे चतुत्थ । तस्येत्यत्र वचनमविवक्षितम् । चतुर्थमिति तदर्थ ।

## ट्ठश्छात् ।१।३।४९॥

छशब्दात्पूरणेऽर्थे ट्ठप्रत्ययः स्यात् । छट्ठ ।

ट्ठ इति—अनुवृत्तिस्तु पूर्ववत् । छण्ह पूरण छट्ठ । छशब्दादुक्तेऽर्थे ट्ठप्रत्यय । षष्ठमित्यर्थ ।

## सखेज्जात्तितिमौ ।१।३।५१॥

अस्मात्पूरणेऽर्थे तितिमौ प्रत्ययौ भवत' । सखिज्जई, सखेज्जई । सखिज्जइम, सखेज्जइम ।

सखेज्जादिति—तस्य पूरण इत्यनुवर्त्तते । प्रत्यये तकारोच्चारण तस्य स्थाने यकार विधाय लोपेन सन्धि निवारयितुम् । उद्वृत्तस्वरस्य सन्धेरभावात् । एतेन प्रयोगे तकारश्रुतेरभावेन प्रत्यये तकारोच्चारण व्यर्थम् । सन्धिस्तु सहिताया अविवक्षयाऽपि सुसाध्येति परास्तम् । एकपदे सहिताया नित्यत्वात् । अत एवोक्तम्—'सहितैकपदे नित्या नित्या धातूपसर्गयो । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥' इति । प्रयोगे तकारयकारयोरश्रुतिस्तु नित्ययकारलोपाभ्याम् ।

## द्वयोरेकस्य निर्द्धारणे कान्नैकेभ्यस्तरः ।१।४।४४॥

एभ्यो द्वयोरेकस्य निर्द्धारणे गम्यमाने तर' प्रत्ययः स्यात् । इमेसिं कतरो साहू । अन्नयरो । एकतरो ।

द्वयोरिति—निर्द्धारण गुणेन क्रियया सज्ञया च भवति । गुणस्योदाहरण मूल एवोक्तम् । क्रियाया उदाहरणम् इमेसिं कतरो अज्झावगे । अन्नयरो । एकतरो । सज्ञाया उदाहरणम्–इमेसिं कतरो देवदत्तो । अन्नयरो । एकतरो ।

## बहूनां तमः ।१।४।४५॥

कान्नैकेभ्यो बहूनामेकस्य निर्द्धारणे तमः स्यात् । इमेसु कतमो प्पियो । अन्नतमो । एकतमो ।

बहूनामिति—तरस्य निर्द्धारणे पञ्चमेभ्य इति पदत्रयमनुवर्त्तते । अत्रापि पूर्ववत् क्रियासम्बन्धयोरुदाहरण योजनीयम् । गुणस्य तु भूय एवोत्तम् । बहूनामेकस्य निर्द्धारणेऽपि तरो भवति । द्वयोरित्युपादानं प्रायोऽभिप्रायम् । तथा च इमेसु क्तरो पुञ्जो इत्यपि साध्वेव ।

## कुभादिभ्य. प्रमाणे क ।१।४।३७॥

प्रमाणे वर्त्तमानेभ्य' कुभादिभ्योऽस्येति निर्दिष्टे प्रमेयेऽर्थे क. प्रत्यय स्यात् ।

कुभग, कुमक ।

कुभादिभ्य इति—तदस्येत्यनुवर्त्तते । प्रमाण यदि च्छेदकमात्रम् । प्रमीयतेऽनेनेति विग्रहात् । कुभो नाम धान्यमापनाय परिमाणविशेष । कुभो पमाण जस्स त कुभग । कप्रत्यये कस्य गः ।

## कमादिभ्य सो' ।१।४।३८॥

एभ्य स्वार्थे सोप्रत्ययो वा स्यात् । कममो । पगामसो । एगतसो ।

कमादिभ्य इति—अनिर्दिष्टार्थत्वात्स्वार्थ इति लभ्यते । कमेण=कमसो । तृतीयान्तात्सोप्रत्यय । क्रमश इत्यर्थ । पगाम=पगामसो । एगत=एगतसो ।

## वह्वल्पार्थात्कारकात् ।१।४।३९॥

बह्वर्थकाल्पार्थकात्कारकात्स्वार्थे सोप्रत्ययो वा । बहुसो, बहूणि । अप्पसो, अप्पाणि । कुभकमो, कुभकाणि ।

बह्वल्पार्थादिति—द्वन्द्वान्ते द्वन्द्वादौ यच्छ्रूयते तल्लभते प्रत्येक सम्बन्धमिति न्यायेनार्थशब्दस्य बहौ अल्पे चान्वयेन बह्वर्थकाल्पार्थकादिति लभ्यते । कारकादित्युक्तेरिह कारकादिति लभ्यते । कारकम् । दोण्ह सामी इति विग्रहे दुसो सामीति माभूत् । बहुसो बहूणि वा ददासि । अत्र बहुशब्दाद्द्वितीयान्तात्सोप्रत्यय । कुभकाणीत्यत्र प्रमाणे कप्रत्ययोत्तर सोप्रत्यय । कुम्भपरिमित धान्य ददातीत्यर्थ ।

## एकादिभ्यो वीप्सायाम् ।१।४।४०॥

एभ्य' कारकेभ्य सोप्रत्ययो वा स्याद्वीप्सायाम् । एगसो । दुसो । एग एग । दो दो ।

एकादिभ्य इति—अनुवर्त्तमान कारकादिति पद विशेष्यानुरोधाद्बहुवचनान्ततया विपरिणमते । सोप्रत्ययेन वीप्साया उक्तत्वेन न तत्र द्विर्वचनम् ।

उक्तार्थानामप्रयोगात्। तदभावे वीप्साया द्विर्वचनम्। अतएवाह एग एग। वीप्सा च व्याप्तुमिच्छा। व्याप्तिप्रतिपिपादयिषा। सा च प्रयोक्तुर्धर्मः। शाब्दबोधविषयस्तु व्याप्तिरेव। तथाच व्याप्तौ प्रत्ययः फलितः। व्याप्तिः कार्त्स्न्यम्।

## एक्कात्तिसिस्सिमौ काले च ।१।४।४१॥

एकशब्दाद्वीप्साया चात् कालेपि सिस्सिमप्रत्ययौ स्तश्चकारात्सोः। एक्कसि। एक्कस्सिं। एक्कसो।

एक्कादिति—वीप्सायाम् इत्यस्यानुवृत्तिः। चकारात्सो समुच्चयः। सिश्च सिस्सिश्च सिस्सिमौ। एकशोऽर्थः। तदभावे एक एक। वीप्साया द्विर्वचनम्। काले सप्तम्यन्तादेकशब्दात् सिस्सिमप्रत्यये एक्कसि, एक्कस्सिम्। एकदेत्यर्थः।

## संख्यायाः क्रियाप्रकारे धा ।१।४।४३॥

क्रियायाः प्रकारे वर्त्तमानात्सख्यावाचकात्स्वार्थे धाप्रत्ययः स्यात्। एकहा, एकधा। दुहा, दुधा।

सख्याया इति—ननु क्रियायाः प्रकारे वर्त्तमानसख्यावाचकादेव प्रत्ययस्य विधाने नवहा भत्ती बहुहा गुणो इत्यादिप्रयोगाणां का गतिरिति चेत्सत्यम्। उवदिस्सइ भवईत्यादिक्रियाया अध्याहारेण तत्र निर्वाहसम्भवात्। स च प्रकारो भेदः सादृश्यञ्च। तथा चैकप्रकारकमिति बोधः। प्रकाररूपार्थद्योतको धाप्रत्ययः।

## सख्याया क्रियाभ्यावृत्तिगणने क्खुत्तो ।१।४।२८॥

सङ्ख्यावाचकेभ्यः क्रियाया जन्मगणनाया वर्त्तमानेभ्यः स्वार्थे क्खुत्तोप्रत्ययः स्यात्। दुक्खुत्तो। तिक्खुत्तो।

सङ्ख्याया इति—अभ्यावृत्तिर्जन्म। अतएवाह जन्मगणनायामिति। दुशब्दात् क्खुत्तोप्रत्यये दुक्खुत्तो। गच्छईत्यस्य द्विवारं गच्छतीत्यर्थः। एवमन्येऽपि।

## अणतादिभ्यः क्खुत्तो ।४।१।४॥

एभ्यः परस्य क्खुत्तोरादेर्लोपो वा स्यात्। अणतखुत्तो। अणतक्खुत्तो।

अणतादिभ्य इति—आदेर्लोपो वेति सम्बध्यते। अणतशब्दात्क्खुत्तोप्रत्ययेऽनेन सूत्रेण प्रत्ययककारलोपेऽणतखुत्तो।

उक्तार्थानामप्रयोगात् । तन्भावे वीप्साया द्विर्वचनम् । अतएवाह एग एग । वीप्सा च व्याप्तुमिच्छा । व्याप्तिप्रतिपिपादयिषा । सा च प्रयोक्तुर्धर्मः । शाब्दबोधविषयस्तु व्याप्तिरेव । तथाच व्याप्तौ प्रत्यय फलित । व्याप्ति कात्स्न्र्यम् ।

## एक्कास्सिस्सिमौ काले च ।१।४।४१॥

एक्कशब्दाद्वीप्साया चात् कालेपि सिस्सिम्प्रत्ययौ स्तश्चकारात्सोः । एक्कसि । एक्कस्सिं । एक्कसो ।

एक्कादिति—वीप्सायाम् इत्यस्यानुवृत्ति । चकारात्सो समुच्चय । सिश्च स्सिश्च सिस्सिमौ । एक्कशोऽर्थ । तदभावे एक्क एक्क । वीप्साया द्विर्वचनम् । काले सप्तम्यन्तादेक्कशब्दात् सिस्सिम्प्रत्यये एक्कसि, एक्कस्सिम् । एकदेत्यर्थ ।

## सख्याया क्रियाप्रकारे धा ।१।४।४३॥

क्रियायाः प्रकारे वर्त्तमानात्सख्यावाचकात्स्वार्थे धाप्रत्ययः स्यात् । एक्कहा, एक्कधा । दुहा, दुधा ।

सख्याया इति—ननु क्रियाया प्रकारे वर्त्तमानसख्यावाचकादेव प्रत्ययस्य विधाने नवहा भत्ती बहुहा गुणो इत्यादिप्रयोगाणा का गतिरिति चेत्सत्यम् । उवदिस्सइ भवईत्यादिक्रियाया अध्याहारेण तत्र निर्वाहसम्भवात् । स च प्रकारो भेद सादृश्यञ्च । तथा चैकप्रकारकमिति बोध । प्रकाररूपार्थद्योतको धाप्रत्यय ।

## संख्याया. क्रियाभ्यावृत्तिगणने क्खुत्तो ।१।४।२८॥

सख्यावाचकेभ्यः क्रियाया जन्मगणनाया वर्त्तमानेभ्यः स्वार्थे क्खुत्तोप्रत्यय' स्यात् । दुक्खुत्तो । तिक्खुत्तो ।

सख्याया इति—अभ्यावृत्तिर्जन्म । अतएवाह जन्मगणनायामिति । दुशब्दात् क्खुत्तोप्रत्यये दुक्खुत्तो । गच्छईत्यस्य द्विवार गच्छतीत्यर्थ । एवमन्येऽपि ।

## अणतादिभ्य. क्खुत्तो' ।४।१।४॥

एभ्य' परस्य क्खुत्तोरादेर्लोपो वा स्यात् । अणतखुत्तो । अणंतक्खुत्तो ।

अणतादिभ्य इति—आदेर्लोपो वेति सम्बध्यते । अणतशब्दात्क्खुत्तोप्रत्ययेऽनेन सूत्रेण प्रत्ययककारलोपेऽणतखुत्तो ।

बहूनामिति—एकस्य निर्द्धारणे कारकेभ्य इति पदत्रयमनुवर्त्तते। अत्रापि पूर्ववत् क्रियासज्ञयोरुदाहरण योजनीयम्। गुणस्य तु मूल एवोक्तम्। बहूनामेकस्य निर्द्धारणेऽपि तरो भवति। द्वयोरित्युपादान प्रायोऽभिप्रायम्। तथा च इमेसु कनरो पुञ्जो इत्यपि साध्वेव।

## कुभादिभ्य. प्रमाणे क. ।१।४।३७॥

प्रमाणे वर्त्तमानेभ्य कुभादिभ्योऽस्येति निर्दिष्टे प्रमेयेऽर्थे क प्रत्यय स्यात्। कुभग, कुभक।

कुभादिभ्य इति—तदस्येत्यनुवर्त्तते। प्रमाण यदि च्छेदकमानम्। प्रमीयतेऽनेनेति विग्रहात्। कुभो नाम धान्यमापनाय परिमाणविशेष। कुभो पमाण जस्स त कुभग। कप्रत्यये कस्य ग।

## कमादिभ्य. सो ।१।४।३८॥

एभ्यः स्वार्थे सोप्रत्ययो वा स्यात्। कमसो। पगामसो। एगतसो।

कमादिभ्य इति—अनिर्दिष्टार्थत्वात्स्वार्थे इति लभ्यते। कमेण=कमसो। तृतीयान्तात्सोप्रत्यय। क्रमश इत्यर्थ। पगाम=पगामसो। एगत=एगतसो।

## बह्वल्पार्थात्कारकात् ।१।४।३९॥

बह्वर्थकाल्पार्थकात्कारकात्स्वार्थे सोप्रत्ययो वा। बहुसो, बहूणि। अप्पसो, अप्पाणि। कुभकसो, कुभकाणि।

बह्वल्पार्थादिति—द्वन्द्वान्ते द्वन्द्वादौ यच्छ्रयते तल्लभते प्रत्येक सम्बन्धमिति न्यायेनार्थशब्दस्य बहौ अल्पे चान्वयेन बह्वर्थकाल्पार्थकादिति लभ्यते। कारकादिकम्। गोण्ड सामी इति विग्रहे दुसो सामीति माभूत्। बहुसो बहूणि वा ददासि। अत्र बहुशब्दाद्द्वितीयान्तात्सोप्रत्यय। कुभकाणीत्यत्र प्रमाणे कप्रत्ययोत्तर सोप्रत्यय। कुभपरिमित धान्य ददातीत्यर्थ।

## एकादिभ्यो वीप्सायाम् ।१।४।४०॥

एभ्य कारकेभ्य सोप्रत्ययो वा स्याद्वीप्सायाम्। एगसो। दुसो। एग एग। दो दो।

एकादिभ्य इति—अनुवर्त्तमान कारकादिति पद विशेष्यानुरोधाद्बहुवचनान्ततया विपरिणमते। सोप्रत्ययेन वीप्साया उक्तत्वेन न तत्र द्विर्वचनम्।

उक्तार्थानामप्रयोगात्। तदभावे वीप्साया द्विर्वचनम्। अतएवाह एग एग। वीप्सा च व्याप्तुमिच्छा। व्याप्तिप्रतिपिपादयिषा। सा च प्रयोक्तुर्धर्मः। शाब्दबोधविषयस्तु व्याप्तिरेव। तथाच व्याप्तौ प्रत्ययः फलितः। व्याप्तिः कार्त्स्न्यम्।

## एकात्सिस्सिमौ काले च ।१।४।४१॥

एकशब्दाद्वीप्साया चात् कालेपि सिस्सिम्प्रत्ययौ स्तश्चकारात्सोः। एकसि। एकस्सि। एकसो।

एकादिति—वीप्सायाम् इत्यस्यानुवृत्तिः। चकारात्सो समुच्चयः। सिश्च सिस्सिश्च सिस्सिमौ। एकशोऽर्थः। तदभावे एक एक। वीप्साया द्विर्वचनम्। काले सप्तम्यन्तादेकशब्दात् सिस्सिम्प्रत्यये एकसि, एकस्सिम्। एकदेत्यर्थः।

## सख्याया· क्रियाप्रकारे धा ।१।४।४३॥

क्रियायाः प्रकारे वर्त्तमानात्सख्यावाचकात्स्वार्थे धाप्रत्ययः स्यात्। एकहा, एकधा। दुहा, दुधा।

सख्याया इति—ननु क्रियायाः प्रकारे वर्त्तमानसख्यावाचकादेव प्रत्ययस्य विधाने नवहा भत्ती बहुहा गुणो इत्यादिप्रयोगाणा का गतिरिति चेत्सत्यम्। उवदिस्सइ भवईत्यादिक्रियाया अभ्याहारेण तत्र निर्वाहसम्भवात्। स च प्रकारो भेदः सादृश्यञ्च। तथा चैकप्रकारकमिति बोधः। प्रकाररूपार्थद्योतको धाप्रत्ययः।

## संख्याया· क्रियाभ्यावृत्तिगणने क्खुत्तोः ।१।४।२८॥

सख्यावाचकेभ्यः क्रियाया जन्मगणनायां वर्त्तमानेभ्यः स्वार्थे क्खुत्तोप्रत्ययः स्यात्। दुक्खुत्तो। तिक्खुत्तो।

सख्याया इति—अभ्यावृत्तिर्जन्म। अतएवाह जन्मगणनायामिति। दुशब्दात् क्खुत्तोप्रत्यये दुक्खुत्तो। गच्छईत्यस्य द्विवार गच्छतीत्यर्थः। एवमन्येऽपि।

## अणतादिभ्य· क्खुत्तो· ।४।१।४॥

एभ्यः परस्य क्खुत्तोरादेर्लोपो वा स्यात्। अणतखुत्तो। अणतक्खुत्तो।

अणतादिभ्य इति—आदेर्लोपो वेति सम्बध्यते। अणतशब्दात्क्खुत्तोप्रत्ययेऽनेन सूत्रेण प्रत्ययककारलोपेऽणतखुत्तो।

## अनुकम्पादौ कः ।१।२।४२।।

नाम्नोऽनुकम्पाद्यर्थे कः प्रत्ययः स्यात् । जीवितए । सरीरए । अस्सओ ।

अनुकम्पादाविति—अनुकम्पादिशब्दस्त्रिविशिष्टपरः । तथाऽनुकम्पितादौ प्रत्ययः सिद्धः । जीवितए जीवितकम् । अनुकम्पितं जीवितमिति तदर्थः । जीवितं जीवनम् । सरीरए शरीरकम् । अनुकम्पितं शरीरमित्यर्थः । अस्सओ । अश्वकः । अश्व इव प्रतिकृतिरर्थः । तृणचर्मकाष्ठादिनिर्मितं प्रतिमापरपर्यायं वस्तु प्रतिकृतिः । कुसिमओ अस्सो अस्सओ इत्यादावपि बोध्यमेवमेव । जीवितादिशब्दो जीवितादावेव वर्तते । कप्रत्ययस्यानुकम्पितादिरर्थ इति नायं स्वार्थिक इति । अन्ये तु जीवितादय एव शब्दा अनुकम्पितादौ वर्तन्ते । प्रत्ययस्तु तेषामौपचारिकत्वस्य बोधक इति स्वार्थिक एव ।

## सर्वनाम्नः पञ्चम्यास्तो ।१।४।११।।

पञ्चम्यन्तेभ्यः सर्वनामभ्यस्तोप्रत्ययो वा । सव्वओ । जत्तो । तत्तो ।

सर्वनाम्न इति—प्रत्ययग्रहणे तदन्ता ग्राह्या इति पञ्चमीरूपप्रत्ययग्रहणे तदन्तानां ग्रहणात् पञ्चम्यन्तेभ्य इति लभ्यते । सव्वाओ इति पञ्चम्यन्तात्तोप्रत्ययः । महाविभाषासम्बन्धात्पक्षे वाक्यमपि तेन सव्वाओ इत्यपि । सर्वत इत्यर्थः ।

## उत्कस्य तोत्थयोः ।४।४।६७।।

अस्योकारोऽन्तादेशो वा तोत्थप्रत्यययोः परयोः । कुत्तो, कत्तो । कुत्थ, कत्थ ।

उत्कस्येति—वेत्यनुवर्तते । षष्ठीनिर्दिष्टत्वादन्त्यस्य स्वरस्य भवति । काओ इति पञ्चम्यास्तोप्रत्ययः । तस्मिन्नुकारादेशः । वक्ष्यमाणत्थप्रत्यये उकारादेशो कुत्थ । तदभावे कत्थ । कुत इत्यर्थः ।

## एतस्य त्तवि ।४।४।८१।।

एतशब्दस्यासादेशः स्यात्तोप्रत्यये परे । अत्तो ।

एतस्येति—अस् इत्यनुवर्तते । सित्त्वात्सर्वादेशः । एताओ इति पञ्चम्यन्तात्तोप्रत्ययः । तस्मिन्नासादेशः । सित्त्वात्कृत्स्नस्थाने ।

## इसिमस्य तोण्हिदाणिंहहत्तरेषु ।४।४।७८।।

इमशब्दस्येसादेशः स्यात्तोण्हिदाणिंहहत्तरप्रत्ययेषु परेषु । इत्तो ।

इसिमस्येति—इस् इमस्येति पदद्वयम् । तोश्च ण्हिश्च दाणिश्च हश्च हत्तरश्चेति द्वन्द्वः । इमाओ इति पञ्चम्यन्तात्तोप्रत्यये इसादेशः ।

## इमजतकेभ्यस्तोर्वा ।३।३।२०॥

एभ्यस्तोप्रत्ययस्यादेर्द्वित्वं वा स्यात् । इत्तो । जत्तो, जतो । कत्तो, कतो ।

इमजेति—आदेरिति द्विरिति पदद्वयमनुवर्त्तते । तोप्रत्ययेऽनेन तकारस्य द्वित्वम् ।

## अश्चापिजताभ्याम् ।१।४।१२॥

आभ्यां पञ्चम्यन्ताभ्याममप्रत्ययोऽपि स्यात् । जं । तं ।

अश्चेति—पञ्चम्या इत्यनुवर्त्तते । अपिशब्दाद्यथाप्राप्तम् । जशब्दात् अमि टिलोपेऽनुस्वारः ।

## जपकामाभ्यामाएश्च ।१।४।१३॥

पञ्चम्यन्ताभ्यामाभ्यामाएप्रत्ययश्च स्यात् । जाए । पगामाए ।

जपकामाभ्यामिति—जश्च पकामश्चेति द्वन्द्वः ।जाओ इति पञ्चम्यन्तादाए-प्रत्ययः । यतः । पगामाए इत्यस्य प्रकामतः इत्यर्थः । चकाराद्यथोक्ता प्रत्यया भवन्ति ।

## ण्हश्च जात् ।१।४।१४॥

पञ्चम्यन्ताज्जशब्दाद् ण्हप्रत्ययश्च स्यात् । जण्ह ।

ण्हमिति—पञ्चम्या इत्यनुवर्त्तते ।जाओ इति पञ्चम्यन्तात् ण्हमि प्रत्ययेऽ-नुस्वारः । यस्मादित्यर्थः ।

## तादादोतयश्च ।१।४।१५॥

तशब्दात्पञ्चम्यन्ताद् आत् ओ ते आए इत्येते प्रत्ययाश्च स्युः । ता । तो । तते । तए । ताए ।

तशब्दादिति—अनुवृत्त्या पञ्चम्यन्तादिति लभ्यते । आश्च ओश्च तेश्चेति द्वन्द्वः । आएरिति सम्बध्यते । आप्रत्यये दीर्घः । ओप्रत्यये वृद्धिः । टिलोपो बोभयत्र । तकारस्य यकारे लोपे तए । आएप्रत्यये टिलोपः ।

## जादिभ्यः ससम्यास्त्थः ।१।४।१८॥

सप्तम्यन्तेभ्यो जादिभ्यस्त्थप्रत्ययः स्यात् । जत्थ । तत्थ । कुत्थ । कत्थ । एगत्थ । इयरत्थ ।

सप्तम्या इति—त्थप्रत्यये उपाग त्तादेशो कुत्थ । तदभावे कत्थ । कस्मि-न्नित्यर्थः । एवमन्येऽपि । ज, सञ्ज, त, थ, एत, एग, अन्त इयर एते आदय ।

## एत्थ त्थे ।४।४।८२॥

एतच्छब्दस्य एस् अस् आदेशौ त्तस्त्ये परे । एत्थ । अत्थ ।

एगिति—एतस्य अस् इति लभ्यतेऽनुवृत्त्या । त्थप्रत्यये असादेशे अत्थ । एसादेशे एत्थ । सयुक्ते ह्रस्वे तु इत्थ ।

## एकात् त्थस्य त्त ।४।४।६८॥

एकशब्दात्परस्य त्थप्रत्ययस्य त्तादेशो वा स्यात् । एगत्त ।

एकादिति—वेत्यनुवर्तते । अनेकवर्णत्वात्सर्वादेश । एकशब्दात् त्थप्रत्यये तस्य त्तादेशे ककारस्य गकारे एगत्त । एकत्रेत्यर्थ ।

## काद्धीहहिंण्हवश्च ।१।४।१९॥

सप्तम्यन्तात्कशब्दाद् हि इह हिं ण्हु प्रत्ययाश्च स्यु । कहि । किह । कहिं । कण्हु ।

कादिति—सप्तम्या इत्यनुवर्तते । चात् हीहहिंण्हव इति भिन्न पदम् । हिश्च इहश्च हिंश्च ण्हुश्चेति द्वन्द्व । किह इत्यत्र टिलोप ।

## हहमौ चेमात् ।१।४।२०॥

इमात् सप्तम्यन्ताद् हहमौ प्रत्ययौ स्त. । इह । इह ।

हहमानिति—सप्तम्या इत्यनुवृत्त्या लभ्यते । हप्रत्यये ङसिमस्येत्यनेने-त्तादेश । अनुस्वारे इह ।

## कम्मादिभ्यश्च ।१।४।१६॥

कम्मादिभ्य. सर्वविभक्तिकेभ्यस्तोप्रत्ययः स्यात् । कम्मओ । पिट्ठओ । अत्थओ । धम्मओ । दव्वओ ।

कम्मादिभ्य इति—सुन त्तादेव तद्धितस्य विधानेऽत्र विशेषविभक्त्युपादानाभावेन सार्वविभक्तिकत्व लब्धम् । कर्मत । पृष्ठत । अर्थत । धर्मत । द्रव्यत इति क्रमेणार्थ ।

## तवि दुह ।३।३।७॥

तोप्रत्यये परे दुहाशब्दस्य ह्रस्वो वा । दुहा=दुहओ, दुहाओ ।

तरीति—वा ह्रस्व इति चानुवृत्त्या लभ्यते। ह्मप्रत्ययान्तात्स्वार्थे तोप्रत्यये वा ह्रस्व।

## सव्वैकान्नकजतेभ्यः काले दा ।१।४।२२॥

सप्तम्यन्तेभ्य' कालार्थेभ्यः स्वार्थे दाप्रत्ययः स्यात्।

सव्वैकेति—सप्तम्या इत्यनुवर्त्तते। कालार्थेभ्य इति तु सव्वत्थ देसे इत्यादौ प्रत्ययवारणाय। वर्त्तमानेभ्य इत्यध्याह्रियते। अतएव काले इत्यत्र कारक-विभक्तिर्जायते। अन्यथा क्रियान्वयित्वाभावेन सा न स्यात्। तथाच काले वर्त्तमानेभ्य इति योजनालभ्यफलितार्थमाह कालार्थेभ्य इति।

## सव्वस्स सो दे ।४।४।६९॥

सव्वशब्दस्य सादेशो वा दाप्रत्यये परे। सदा। सव्वदा। एकदा। अन्नदा। कदा। जदा। तदा।

सव्वस्येति—वेत्यनुवर्त्तते। अनेकवर्णत्वात्सर्वादेश। सव्वस्सिं काले सदा। दाप्रत्यये सादेश। एकस्सिं काले एकदा। अन्नस्सिं काले अन्नदा। कस्सिं काले कदा। जस्सिं काले जदा। तस्सिं काले तदा।

## ण्हिहुणादाणिम इमात्।१।४।२३॥

इमशब्दात्काले वर्त्तमानात्सप्तम्यन्ताद् ण्हि हुणा दाणिम् प्रत्ययाः भवन्ति।

ण्हिमिति—काले सप्तम्या इति चानुवर्त्तते। ण्हिश्च हुणाश्च दाणिश्च इति द्वन्द्व।

## इयो ण्हिमि वा ।४।४।७९॥

इमशब्दस्येयादेशो वा ण्हिमि परे। इयण्हि, इण्हि।

इय इति—इमस्य इत्यनुवृत्त्या लभ्यते। अनेकवर्णत्वात्सर्वादेश। इमशब्दात् ण्हिम्प्रत्यये इयादेशे इयण्हि। पक्षे इसिमस्य तोण्हिमित्यादिसूत्रेणेसादेश।

## हुणेऽस् ।४।४।८०॥

इमशब्दस्यासादेश' स्याद् हुणाप्रत्यये परे। अहुणा।

हुण इति—इमस्येति सम्बध्यते। इमस्सिं काले अहुणा। हुणा प्रत्ययेऽसादेश।

## इमस्य दाणिमि सर्वस्य ।३।४।७१॥

अस्य कृत्स्नस्य लोपो वा दाणिमि परे। दाणिं, इयाणिं, इदाणिं।

इमस्येति—षष्ठीनिर्दिष्टत्वादन्त्यस्य प्राप्तौ तद्वारणाय सूत्रे सर्वस्येति पदोपादानम्। अनुवर्त्तते च लोप इति पद चापदञ्च। इमस्सिं काले दाणिं। प्रत्यये परे इमस्य सर्वस्य लोप। दकारस्य यकारे इयाणिं।

## आहेहिंहिहियमश्च कजतेभ्य ।१।४।२४॥

काले वर्त्तमानेभ्य सप्तम्यन्तेभ्य एभ्य आहे हिं हि हियम् प्रत्ययाश्च स्युः। काहे। कहिं। कहि। कहिय। जाहे। जहिं। जहि। जहिय। ताहे। तहिं। तहि। तहिय।

आहे इति—आहेश्च हिञ्च हिश्च हियश्चेति द्वन्द्व। सप्तम्या काले इत्यनुवर्त्तते। चकारो दासमुच्चयार्थ। कस्सिं काले काहे।

## तादतिश्च ।१।४।२५॥

काले वर्त्तमानात्तशब्दात्स्वार्थेऽतिप्रत्ययोऽपि स्यात्। तइ।

तादिति—अनुवृत्त्या काले इति लभ्यते। सप्तम्या इत्यपि बोध्यम्। अति प्रत्यये टिलोप। तकारस्य यकारे लोप। उद्वृत्तस्वरत्वान्न सन्धि।

## तएर्याक् ।४।२।६०॥

तइशब्दस्य यागागमो वा स्यात्। तइया, तइ।

तएरिति—तइ इति पूर्वदिशा ससाध्य यागागमे कित्त्वादन्त्यावयवे तइया। तदा इत्यर्थ। वा इत्यनुवर्त्तते।

## वा दस्त क्वचित् ।३।३।६१॥

दाप्रत्ययस्यादेस्तकारो वा क्वचित्। सता, सदा। कता, कदा।

वा दस्त इति—आदेरित्यनुवर्त्तते। क्वचिदित्युक्त्या तकारघटितस्य क्वाचित्कत्व बोध्यते।

## बहोस्तोत्तौ ।१।४।२१॥

बहुशब्दात् तोत्तौ प्रत्ययौ वा स्तः। बहुतो, बहुत्त।

बहोरिति—पञ्चम्यन्तसप्तम्यन्ताभ्यामेव बहुशब्दाभ्यामनेनापि भवतस्तोत्तौ।

## पर्यभिभ्याश्च ।१।४।१७॥

परिअभिशब्दाभ्यां तोप्रत्ययः स्यात्। परितो। अभितो।

पर्यभिभ्यामिति—सर्ववाचकात्परिशब्दादुभयवाचकादभिशब्दात्तो प्रत्ययो भवति । परितो इत्यस्य सर्वत इत्यर्थः । अभितो इत्यस्य उभयत इत्यर्थः । तो इत्यनुवर्त्तते ।

## कादावतियस्यैवश्चिरे ।४।४।८६॥

कशब्दात्परस्यावतियस्यैवादेशश्चिरे परे । केवचिर, केवचिर ।

कादिति—अनेकवर्णत्वात्सर्वादेशः । एयादेशे टिलोपे कायादित्याद्यकारस्य द्वित्वे केवचिर । कियच्चिरमित्यर्थः ।

## इणमादीनामेवे दीर्घो वा ।२।३।७९॥

एषामुपधाया दीर्घो वा स्यादेवे परे । इणामेव । जामेव । तामेव । जेणामेव । तेणामेव । खिप्पामेव । एवामेव ।

इणमादीनामिति—उपधाया इत्यनुवर्त्तते । इणम् इत्यादिपदम् । इणमेव इत्यत्रोपधाया दीर्घे इणामेव ।

इति तद्धितप्रकरणम् ।

इति श्रीलोङ्कागच्छान्तर्गतलिम्बडीसम्प्रदायतिलकायमानपूज्यपाद-
श्रीगुलाबचन्द्रजित्स्वामिशिष्य-मुनिरत्नचन्द्रविरचि-
ताया स्वोपज्ञायामर्थप्रकाशिकाभिधाया
जैनसिद्धान्तकौमुदीव्याख्याया पूर्वार्द्धं
समाप्तम् ।

---

श्रीः

# जैनसिद्धान्तकौमुदी

## उत्तरार्द्धम् ।

## अथ आख्यातप्रकरणे प्रथमो गणः ।

### क्रियायामच्छादयो धातवः ।१।१।२९॥

क्रियावाचिनोऽच्छादयो धातुसंज्ञाः स्युः ।

क्रियायामिति—वर्त्तमाना इत्यध्याह्रियते । अतएव सप्तमी सगच्छते । इतरथा क्रियान्वयित्वाभावेन कारकत्वाभावात् सा न स्यात् । तत्फलितमाह क्रियावाचिन इति । क्रिया नाम व्यापारसन्तान । यथा पच्धातोरधिश्रयणमारभ्याध श्रयणपर्यन्तव्यापारसन्तान क्रिया अर्थ । अत एवोक्तम्—'गुणभूतैरवयवै समूह क्रमजन्मनाम् । बुद्ध्या प्रकल्पिताभेद क्रियेति व्यपदिश्यते ॥' इति । अस्यार्थ —क्रमजन्मना व्यापाराणा समूह प्रति गुणभूतैरवयवैर्युक्त सकलनात्मिकयैकत्वमसमुदायबुद्ध्या प्रकल्पिताभेदरूप समूह क्रियेति व्यवह्रियते । समुदायगतैकत्वमादायैव 'एका क्रिये'ति व्यवहार । क्रमेण जायमानाना क्षणनश्वराणा व्यापाराणा वस्तुभूतसमुदायाभावात् बुद्ध्या इत्युक्तम् । एकैकव्यापारेऽपि समूहरूपारोपादधिश्रयणकालेऽपि पचतीति व्यवहार । अतएवोक्तम्—'एकदेशे समूहे वा व्यापाराणा पचादय । स्वभावत प्रवर्त्तन्ते तुल्यरूप समाश्रिता ॥' इति । अतएव चोक्तम्—'यावत् सिद्धमसिद्ध वा साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥' इति । सिद्ध=भूत विद्यमानध्वसप्रतियोगि । असिद्ध=भूतभिन्न वर्त्तमान वर्त्तमानप्रागभावप्रतियोगि च । यावत्=सर्वं व्यापारवृन्द साध्यत्वप्रकारेण अभिधीयते सा अभिधीयमाना क्रियेति कथ्यते । आश्रित क्रमरूप येन तत्त्वादित्यर्थ । साध्यत्वञ्च क्रियान्तराकाङ्क्षानुत्थापकता-

वच्छेदकरूपवत्त्वम् । एतादृशी क्रिया त्याद्यन्तपदैरभिधीयते । पच इ इत्याद्युक्तौ क्रियान्तराकाङ्क्षाया अदर्शनात् । कृदन्तैस्तथा नाभिधीयते पाक इत्युक्तौ क्रियान्तराकाङ्क्षाया दर्शनात् । तथा च क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकत्व सिद्धव्यापारत्वमिति फलितम् । एवञ्च क्रियावाचकत्वे सति अच्छादिगणपठितत्व धातुत्वमिति सिद्धम् । क्रियायामिति किम् । अच्छादिगणपठितसमानानुपूर्वीकस्य नाम्नो धातुसञ्ज्ञा माभूत । अच्छादय इति किम् । क्रियावाचकस्य पुढो इत्याद्यव्ययस्य धातुसञ्ज्ञा माभूत् ।

## धातो॰ ।२।१।१॥

आपादसमाप्तेरधिकारोऽयम् ।

आपादसमाप्तेरित्यस्य—पादसमाप्तिपर्यन्तमित्यर्थ ।

## त्यादय॰ कर्मणि च सकर्मकेभ्यो भावे चाकर्मकेभ्य ।२।२।२५॥

**त्यादय॰ प्रत्यया सकर्मकेभ्यो धातुभ्यः कर्त्तरि कर्मणि च स्युरकर्मकेभ्यो भावे कर्त्तरि च ।**

त्यादय इति—कर्त्तरीति चादनुवर्त्तते । कर्त्तृत्व कर्मत्वञ्च कारके प्रदर्शितम् । सकर्मकेभ्य इति—सकर्मकत्वञ्च स्वार्थफलव्यधिकरणव्यापारवाचकत्वम् । अकर्मकत्वञ्च स्वार्थफलसमानाधिकरणव्यापारवाचकत्वम् । उक्तञ्च वैयाकरणभूषणे "फलव्यापारयोरेकनिष्ठतायामकर्मक । धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृत ॥" इति । अस्यार्थ —फलव्यापारयो एकनिष्ठतायाम्=एकमात्रनिष्ठताया भिन्नाधिकरणावृत्तिताया सत्यामकर्मक । एतेन गम्धातोरकर्मकतापत्ति फलव्यापारयोरेकत्राधिकरणे सत्त्वात् सयोगस्योभयनिष्ठत्वादिति परास्तम् । गम्धात्वर्थसयोगव्यापारयोरेकमात्रवृत्तित्वाभावात् । एकमात्रनिष्ठत्वञ्च तद्व्यक्तिभिन्नानिष्ठत्वे सति तद्व्यक्तिनिष्ठत्वम् । भिन्नाधिकरणवृत्तित्वाभाववत्त्वमिति यावत् । सयोगस्य व्यापाराधिकरणवृत्तित्वेऽपि व्यापारानधिकरणग्रामवृत्तित्वेनोक्तलक्षणानाक्रान्तत्वाभावान्न दोष । तथाच फलसमानाधिकरणमात्रव्यापारवाचकत्वम कर्मकस्य लक्षण फलति । पच्धात्वर्थफलव्यधिकरणव्यापारवाचकत्वस्य अस् धातोरपि सत्त्वेन सकर्मकत्वापत्तिरत स्वार्थेति लक्षणे प्रदत्तम् । लक्ष्यत्वेनाभिमत स्वपदेन ग्राह्यम् । तथाचोदासीनधात्वर्थफलमादाय दत्तस्य दोषस्योपरितनस्य नावकाश । ननु फलत्व हि साक्षात्प्रयोजनत्व तच्चान्येच्छानधीनेच्छाविषयत्वम् । तत्तु तृप्तिप्रभृतेरेव नतु विक्लित्तिप्रभृते । विक्लित्तीच्छायास्तृप्तीच्छाधीनत्वात् ।

तृप्तीच्छायास्तु अन्येच्छानधीनत्वेनान्येच्छानधीनेच्छाविषयत्वात् । पाकादेस्तु अन्येच्छाधीनेच्छाविषयत्वात्मकगौणप्रयोजनत्वात्तथा च विक्लित्त्यादेः कथं फलत्वव्यवहार इति चेन्न धात्वर्थजन्यत्वे सति कर्तृप्रत्ययसमभिव्याहारे धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वरूपशास्त्रीयफलत्वस्य तत्रानपायात् । ग्रामं गच्छइ देवदत्तो इति वाक्याद् देवदत्तरूपाश्रयवृत्तिर्ग्रामाभिन्नाश्रयवृत्तिसंयोगानुकूलो व्यापार इति बोधोदयेन संयोगे धात्वर्थव्यापारजन्यत्वस्य व्यापारत्वावच्छिन्नविशेष्यतानिरूपितानुकूलत्वसम्बन्धावच्छिन्नप्रकारत्वस्य च सत्त्वात् । कर्ता धात्वर्थव्यापाराश्रयः । कर्म धात्वर्थफलाश्रयः । तत्राश्रयांश एव कर्तृकर्मप्रत्यययोः शक्तिर्नतु फलव्यापारविशिष्टे तयोर्धातुलभ्यत्वेनानन्यलभ्यत्वाभावात् । अनन्यलभ्यो हि शब्दार्थ इति न्यायेनानन्यलभ्यस्यैव शब्दार्थत्वात् । तेन न व्यापारादेर्द्विधाभानम् ।

भावः क्रिया सा च धातुत्वेन सकलधातुवाच्या भावार्थप्रत्ययेनानूद्यते । अतएव क्रियाया द्विधाभानम् । कर्तृकर्मवाचिन एव त्यादेरस्मद्युष्मच्छब्दाभ्यामेकार्थवाचकत्वादिरूपं सामानाधिकरण्यम् । अतएव तत्रैव पुरुषवचनव्यवस्था भवति । भाववाचिनस्तु अस्मद्युष्मच्छब्दाभ्यां तादृशसामानाधिकरण्याभावान्मध्यमोत्तमपुरुषाप्राप्त्या भावेत्यादिप्रत्यये कृते सति प्रथमपुरुष एव । तत्राप्येकवचनमेव न बहुवचनम्। त्यादिवाच्यभावनाया असत्त्वरूपत्वेन बहुत्वाप्रतीतेः । अतएव "असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते" इति सगच्छते । तिङ्पदन्तु गच्छतीत्यादि साधकानां प्रत्ययानामुपलक्षणम् । असत्त्वरूपत्वन्तु क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मवत्त्वम् । क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकधर्मवत्त्वं सत्त्वरूपत्वम्। अतएव भावे कृत्प्रत्यये सति सर्ववचनं भवति। भावार्थकृदन्तप्रयोगे सति क्रियान्तराकाङ्क्षोदयेन सत्त्वभूतत्वात् । भावार्थकत्यादिप्रत्यये तु क्रियान्तराकाङ्क्षानुदयेनासत्त्वरूपत्वम्। सत्त्वरूपोपादान एव संख्या प्रतीयते नत्वसत्त्वरूपोपादाने इत्यत्र प्रतीतिरेव मुख्यं मानम्। एकवचनन्तु सामान्यत एव विधीयते नत्वेकत्वविवक्षायामेव एकवचनमिति सामान्यसूत्रकरणात् । बहुवचनन्तु बहुत्वविवक्षायामेव बहुत्वे बहुवचनमिति सूत्रकरणात् । तथा च बहुत्वाविवक्षाया बहुवचनस्याप्राप्तिः स्फुटैव । भावे कर्मणि च प्रत्यये सति कर्तुरनुक्तत्वात्तृतीया भवति कर्मणः प्रथमा । उक्तार्थस्य नामार्थान्तर्गतत्वात्, कर्तरि प्रत्यये सति कर्तुरुक्तत्वात्तत्र प्रथमा। कर्मणो द्वितीया। कर्तृप्रत्यये सख्याया कर्तरि कर्मप्रत्यये तु तस्या कर्मणि समन्वयः । कालस्य तु व्यापारे न फले न वा कर्तरि कर्मणि वा । तथा सति व्यापारविगमे फलसत्त्वे पचइ इति स्यात् । भूतकालिकः प्रयोगश्च न स्यात् ।

फलस्य विद्यमानत्वात्। घटार्थादावन्वयेऽपि तथा दोषः स्यात्। घटार्थादौ सत्त्वे भविष्यत्कालिक प्रयोगश्च न स्यात्। फलार्थेरविद्यमानत्वात्। मन्मते तु व्यापारसत्त्वे वर्तमानकालिक। व्यापारविगमे भूतकालिक । व्यापारे भाविनि भविष्यत्कालिक प्रयोगो भवति। कारकस्य नामार्थेऽभेदान्वय । कर्तृप्रत्यये व्यापारमुख्यविशेष्यको बोध । कर्मणि फलमुख्यविशेष्यकः । अतएवोक्त क्रियाप्रधानमाख्यात सत्त्वप्रधानानि नामानीति। न चात्र क्रियार्थो व्यापारस्तथा च व्यापारमुख्यविशेष्यक एव बोध उचित उभयत्रेति वाच्यम्। क्रियत इति क्रियेति कर्मसाधनेन फलार्थकत्वस्यापि सम्भवात्।

## आज्ञायां भविष्यति वर्त्तमाने च तिन्तिसिद्दमिमवः ।२।१।२॥

धातोर्वर्त्तमाने आज्ञायां भविष्यति च तिन्तिसिद्दमिमो एते षट् प्रत्यया भवन्ति।

आज्ञायामिति—अत्रेऽनुवृत्तयेऽसमासनिर्देश । आज्ञा नाम वक्त्रनुमतत्वे सति कर्तुरनिष्टहेतुत्वम्। यथा कारागार गच्छेत्यादौ त्यत्कर्तृक राजानुमतत्वानिष्टहेतु कारागारगमनमिति बोधे कारागारगमन कर्तुरनिष्टम्। वक्तुरभिमतञ्च। सैवाज्ञा मित्राद्युदीरितवाक्यस्थले वक्त्रभिमतत्वे सति कर्तुरिष्टहेतुत्वस्वरूपा भवति। या अनुज्ञाशब्देनोच्यते। एव वक्त्रादिभेदेनाज्ञास्वरूपमपि परिवर्त्तनीयम्। भविष्यत्त्वञ्च वर्त्तमानो य प्रागभावस्तत्प्रतियोगित्वम्। वर्त्तमानत्व धातुविशिष्टत्व वैशिष्ट्यञ्च स्वप्रयोगाधिकरणत्वस्ववान्ययावद्व्यापारप्रतियोगिकप्रागभावकूटानधिकरणत्वस्ववान्ययावद्व्यापारप्रतियोगिकध्वसकूटानधिकरणत्वैतत्त्रितयसम्बन्धेन ।

## त्यादिषु द्वौ द्वौ प्रथममध्यमोत्तमो ।१।१।३१॥

एषु द्वौ द्वौ प्रत्ययौ क्रमशः प्रथममध्यमोत्तमसञ्ज्ञौ स्त ।

त्यादिष्विति—तिन्तिसिद्दमिमोषु क्रमश क्रमेण सञ्ज्ञाना त्रित्वेऽपि अभेदानुरोधात्समानवचनत्वम्। तत्र तिन्तिप्रत्ययौ प्रथमसञ्ज्ञौ। सिद्दप्रत्ययौ मध्यमसञ्ज्ञौ। मिमोप्रत्ययौ उत्तमसञ्ज्ञौ। घटकत्व सप्तम्यर्थ । तथा च त्यादिघटकौ द्वौ द्वौ सञ्ज्ञिनञ्च सञ्ज्ञाश्च तिस्र इत्यत क्रमश इत्युक्तम्।

## अस्मे प्रयुज्यमानेऽपि समानाधिकरणे उत्तम ।२।१।३६॥

त्यादिवाच्यकारकवाचिनि अस्मच्छब्दे प्रयुज्यमानेऽप्रयुज्यमाने चोत्तम स्यात्।

अस्मे इति—समानाधिकरणे इत्यत पूर्वं त्यादिभिरिति शेष । तथाच त्यादिभि समानाधिकरणेऽस्मच्छब्दे इत्यर्थ । त्यादिसमानाधिकरणत्व त्यादि-

वाच्यकारकवाचकत्वमेव । त्यादिवाच्यकारकवाचकास्मदादिश दा॰ प्रयुज्यन्ता मा वा प्रयुज्यन्ताम् । सर्वथोत्तममध्यमौ भात॰ । अतएवाह प्रयुज्यमानेऽपीति । अपिनाऽप्रयुज्यमाने इति संगृह्यते । अतएव तुम यासि, यामि इत्युभय साधीय । उदाहरण यथा अह भवामि इत्यादौ मिवाच्यकर्तृकारकवाचकास्मदशब्दस्य प्रयुज्यमानत्वेनोत्तम । अप्रयुज्यमानस्य भवामि इत्युदाहरणम् ।

## तुम्हे मध्यम ।२।१।३७॥

तथाभूते तुम्हशब्दे मध्यमः स्यात् ।

तुम्ह इति—तथाभूते—त्यादिप्रत्ययवाच्यकारकवाचिनि, प्रयुज्यमानेऽप्रयुज्यमाने चेत्यर्थ । यथा तुम भवसि इत्यादौ सिवाच्यकर्तृकारकवाचितुम्हशब्दस्य प्रयुज्यमानतया मध्यम । अप्रयुज्यमानस्य भवसि इत्युदाहरणम् ।

## शेषे प्रथम॰ ।२।१।३८॥

उक्तविषयादन्यत्र प्रथमः स्यात् ।

शेषे इति—उक्तादन्य शेष । उक्तश्च मध्यमोत्तमयोर्विषय । ततोऽन्यत्र प्रथमपुरुषलाभान्मध्यमोत्तमयोरविषये प्रथम स्यादिति लब्धम् । तदेवाह—उक्तेत्यादि । यथा स॰ भव इ इत्यादौ मध्यमोत्तमप्रसङ्गाभावात्प्रथमपुरुष । अत्र तिवाच्यकारकवाची नास्मदतुम्हशब्द किन्तु तशब्द । तथा चास्मदतुम्हशब्दादन्यत्र सर्वत्र प्रथमपुरुष एवेति सिध्यति ।

## एकवचनवहुवचने क्रमश॰ ।१।१।३२॥

त्यादिषु लब्धप्रथमादिसञ्ज्ञकाः प्रत्येक क्रमेणैकवचनवहुवचनसञ्ज्ञाः स्युः ।

अच्छ् उपवेशने ।१।

एकवचनेति—क्रमश क्रमेण । तेन लब्धप्रथमादिसञ्ज्ञकयोस्तिन्तीत्यादिकयोर्द्वयो पूर्वस्यैकवचन नाम । उत्तरस्य बहुवचन नाम सिध्यति । अत्र नास्ति परस्मैपदात्मनेपदविभाग । अतस्तदर्थं नाकारि प्रयत्न । अत्र द्विवचन नास्तीत्युक्तमेव तेन सञ्ज्ञाद्वयमेव विहितम् । उपवेशने—उपवेशन नाम पार्ष्ण्युप स्थादिसयोगानुकूलो व्यापारविशेष । पार्ष्णिश्च गुल्फयोरधःप्रदेश॰ ।

## आ आज्ञाप्रवर्तनावर्तमानेषु ।२।१।७६॥

धातोरस् प्रत्ययः स्यादाज्ञाप्रवर्त्तनावर्त्तमानेषु परेषु ।

आ इति—असितिशब्दस्य प्रथमैकवचने रूपम्। प्रत्यय धातोरित्यनुवर्तते। अर्थविशेपनिर्देशाभावात् स्वार्थिकोऽयम्प्रत्यय ।

## अच्छादेरसस्तेरे ।३।१।६६॥

एम्य परस्मादसः परस्य तिप्रत्ययस्यैकारो वा स्यात् । अच्छते, अच्छइ । अच्छति । अच्छसि । असः किम् । वरेइ ।

अच्छादेरिति—वा इत्यनुवृत्त्या लभ्यते। अनेन विधीयमान एकार अन्त्यस्य षष्ठ्या इति परिभाषयाऽन्त्यस्य भवति। अच्छ्धातोस्तिप्रत्यये मध्ये ऽसि प्रत्यये इकारस्यैकारे अच्छते । एकाराभावे अच्छइ । तकारस्य यकारे लोप । यकारादेशस्य वैकल्पिकत्वान्न सर्वत्र स । तेन तकारोऽपि श्रूयते। अच्छ्, अत्थ्, अरिह्, इस्, ईह्, उस्, एस्, कल्, कड्ढ्, कुव्व्, कम्, खुद्द्, खुप्प्, गरह्, गस्, चर्, छिंद्, जप्, जुज्ज्, डम्, डह्, तण्, तितिक्ख्, तुस्, दल्, दव्, दिप्प्, दिस्, दुय्, देव्, देह्, दव्, द्धस्, नद्, नस्स्, पज्ज्, पास्, पुच्छ्, भास्, भुज्, मय्, मन्न्, मर्, रक्ख्, रम्, राज्, रूस्, लह्, लिंप्, लेह्, वद्, वड्ढ्, वर्, वस्, विगिंच्, विंद्, वुच्च्, वोल्, सद्द्, सम्, सय्, सर्, सास्, सुस्सूस्, सेव्, सेह्, स्सर्, हा, हो, एतेऽच्छादय ।

## अस एर्वाहेऽच्छादे ।३।१।४३॥

अच्छादे परस्यास एकारो वा हे परे । अच्छेह, अच्छह ।

अस इति—आज्ञावर्तमानयोरुभयोरादेशो भवति सामान्यात् । हप्रत्यये मध्येऽसि कृते वस्यैकारो भवति विकल्पेन ।

## हिमिमोष्वत ।३।२।३९॥

एषु परेषु अदन्तस्य दीर्घ स्यात् । अच्छामि । अच्छामो ।

हिमिमोष्विति—तदन्तविधिनाऽदन्तस्येति लाभ । अच्छ्धातोर्मिप्रत्यये मध्येऽसि प्रत्ययेऽनेन दीर्घ । स चानुवर्त्तते ।

| | एकवचनम् | बहुवचनम् |
|---|---|---|
| प्र०— | सो अच्छइ | ते अच्छति |
| म०— | तुम अच्छसि | तुम्हे अच्छह |
| उ०— | अह अच्छामि | अम्हे अच्छामो |

कृतव्ययस्थयोरेकवचनबहुवचनयोस्तादृशाना प्रथममध्यमोत्तमपुरुषाणामुदाहरणानि प्राह सो अच्छइ इत्यादिना । द्विवचनाभावान्न तदुदाहरणम् । द्वयोरथ बहुवचनं प्रयुज्येतेति नाशङ्केत । एकभिन्नस्यैव हि बहुत्वात् । अयञ्च धातुरकर्मकः । अच्छइ इत्युक्तौ कहिं इत्यधिकरणस्याकाङ्क्षोदयेऽपि कमिति कर्मण आकाङ्क्षाविरहात् । अतएव 'लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् । शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः ॥' इति न परिगणनं किन्तूदाहरणमात्रमिति सिद्धम् । अन्यथाऽच्छादेरसङ्ग्रहापत्तेः ।

## प्रवर्त्तनायामेदेज्जौ ।२।१।१२॥

### प्रवर्त्तनायामर्थे धातोरेत्एज्जश्च प्रत्ययौ भवतः ।

प्रवर्त्तनायामिति–प्रवर्त्तयतीति प्रवर्त्तना । ण्यन्ताद्युच् । प्रवृत्तिप्रयोजिकेत्यर्थः । सा च इष्टसाधनत्वमेव । तद् विज्ञायैव सर्वत्र प्रवृत्तेः । तथा च प्रवृत्तिजनकज्ञानीयप्रकारतापर्याप्त्यधिकरणमेव प्रवर्त्तना । यतो हि भोजनं मदिष्टसाधनमिति मत्युत्तरमेव प्रवृत्तिः । तत्र विज्ञाने भोजनत्वावच्छिन्नविशेष्यतानिरूपितप्रकारतापर्याप्त्यधिकरणमिष्टसाधनत्वम् ।

ननु इदं मत्कृतिसाध्यमिति ज्ञानस्यापि प्रवृत्तिजनकता आवश्यकी । अतएव काञ्चनमयसुमेरुगिरिशिखराहरणे इष्टसाधनत्वसद्भावेऽपि न प्रवृत्तिः, कृत्यसाध्यत्वात् । एवञ्च प्रवर्त्तनापदभाक् कृतिसाध्यत्वमपीति चेन्न कृतिसाध्यताज्ञानस्य प्रवर्त्तकत्वसद्भावेऽपि लोकसिद्धस्य तस्य लाभाय विधेः कृतिसाध्यत्वार्थकत्वानौचित्यात् । लोकसिद्धञ्चेत्थं मादृशोऽयं स्थूलकायप्रबलबलो भोजनं विदधाति ततश्चास्माकमपि भोजनं कृतिसाध्यमिति । एवञ्च लोकालोकितकृतिसाध्यतापरिज्ञानाय न विधिवाक्यस्यावश्यकतेति सिद्धम् । नन्वेवमपि बलवदनिष्टाननुबन्धित्वज्ञानस्य प्रवर्त्तकत्वमावश्यकम् । अतएव न प्रवर्त्तन्तेऽगम्यागमनं आस्तिकाः । अन्यथा तत्रापि मनोभवेन पावकेन सन्तप्तशरीराज्ञानलवदुर्विदग्धमानसा मूढाः कथङ्कारं न प्रवर्त्तेरन् । तत्रापि सन्तापशान्तिरूपेष्टसाधनत्वसद्भावात् । कृतिसाध्यताज्ञानस्य तु लोकसिद्धत्वात् । मन्मते चागम्यागमने नरकसाधनत्वेन बलवदनिष्टाजनकत्वज्ञानाभावान्न प्रवृत्तिरिति चेन्न । सर्वत्र कारणभावं भजता द्वेषाभावेनैवान्यथासिद्धत्वात् । प्रवृत्तिमात्रं प्रति द्वेषाभावस्य कारणत्वात् । अगम्यागमने प्रवृत्तिस्तु न । तत्र अगम्यागमनं नरकसाधनमिति द्विष्टसाधनताज्ञानेन द्वेषोदयेन द्वेषाभावस्यासत्त्वात् । किञ्च बलवदनिष्टाननुबन्धित्वज्ञानस्य प्रवृत्तिकारणत्वे आस्तिकनास्तिकस्यागम्यागमनं नरकसाधनमिति

द्विष्टसाधनताज्ञानयतोऽपि उत्कटेच्छया प्रवृत्तिप्रतिबन्धकद्वेषानुदयेन प्रवृत्तिसाधकस्य द्वेषाभावस्य सद्भावेन जायमानाया प्रवृत्तेरगम्यागमने तत्र मतेऽनुपपत्ति स्यात् । बलवदनिष्टानुबन्धित्वज्ञानस्यासत्त्वात् । आस्तिकस्तेन विपरीतज्ञानस्यैव सद्भावात् । तथाचेष्टसाधनत्वमेव प्रवर्त्तनेति सिद्धम् । उक्तञ्च—'पुंसा नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्त्तकः । प्रवृत्तिहेतु धर्मञ्च प्रवदन्ति प्रवर्त्तनाम् ॥' इति ।

## एज्जस्य ।३।२।५८॥

अस्य दीर्घो वा स्यात् । अच्छे । अच्छिज्जा, अच्छेज्जा । अच्छिज्ज, अच्छेज्ज । बहुवचनेऽप्येवमेव ।

एज्जस्येति—वा दीर्घ इत्यनुवर्त्तते । स चात्यस्य षष्ठ्या इत्यन्त्यस्य जायते । अच्छधातोः प्रवर्त्तनायामेति प्रत्यये मध्येऽसि वृद्धौ अच्छे । एज्ज प्रत्यये तस्य दीर्घे मध्येऽसि सयुक्ते ह्रस्वे अच्छिज्जा । ह्रस्वाभावे अच्छेज्जा । पक्षे दीर्घाभावे अच्छिज्ज, अच्छेज्जेति रूपद्वयम् । विशेषविहितत्वादेज्जस्य दीर्घे कृते वृद्धि । बहुवचनेऽपीत्यस्य प्रथमपुरुषबहुवचनेऽपीत्यर्थो बोध्य । मध्यमोत्तमयोर्बहुवचनस्याग्रे वक्ष्यमाणत्वात् । व्यवस्थितविभाषेयम् । तेन प्रत्यये परे सति नित्यमेव दीर्घ । अतएवाच्छिज्जमीति न भवति ।

## एज्जात्सिहमिमवो वा ।२।१।३४॥

प्रवर्त्तनार्थकैज्जप्रत्ययान्तात्सिहमिमोप्रत्यया वा स्यु । अच्छिज्जासि, अच्छेज्जासि, अच्छिज्जा, अच्छेज्जा । अच्छिज्जाह, अच्छेज्जाह, अच्छिज्जा, अच्छेज्जा । अच्छिज्जामि, अच्छेज्जामि, अच्छिज्जा, अच्छेज्जा । अच्छिज्जामो, अच्छेज्जामो, अच्छिज्जा, अच्छेज्जा । अच्छे ॥४॥

एज्जादिति—एज्जप्रत्ययोऽत्र प्रवर्त्तनार्थ एव गृह्यते व्याख्यानात् । तेन क्रदेज्जप्रत्ययान्नामी भवन्ति । अतएवाह प्रवर्त्तनेति । केवलप्रत्ययप्रयोगाभावेनाह एज्जप्रत्ययान्तादिति शब्दस्वरूपविशेष्यमादाय विशेषणेन तदन्तविधि । न धातुर्विशेष्य । तदन्तस्य धातुत्वाभावात् । अतएव सामान्येन सिद्धया विशेषत सूत्रं विहितम् । अच्छधातोरेज्जप्रत्यये मध्येऽसि वृद्धौ तदन्तात्सिप्रत्यये एज्जस्येति दीर्घे सयुक्ते ह्रस्वे अच्छिज्जासि । अत्र निशेषसूत्र एव बोध्य । सयुक्तपरकह्रस्वप्रत्ययदीर्घविकल्पात्प्रत्येक सप्त रूपाणि भवन्ति । मूले दीर्घाभावपक्षीयरूपाण्यनुक्तान्यूह्यानि । मध्यमोत्तमयोरेकवचनबहुवचनभेदेनाच्छे इति चत्वारि रूपाणि भवन्ति । अतएव मूले चतु सख्या समुदीरिता । सिमोपरयो 'एज्जस्येति'

'हिमिमोष्यत' इति वा सूत्रेण दीर्घ. । येनापि दीर्घकरणे विरोधाभावात । लक्ष्यानुपपत्त्यभावाच ।

## तिन्त्योरु' सेर्हिः ।३।१।४८॥

आज्ञार्थे तिन्तिप्रत्यययोरुकारोऽन्तादेश' स्यात् सेर्हिश्च । अच्छउ । अच्छन्तु ।

तिन्त्योरिति—आज्ञायामित्यनुवर्त्तते । वर्त्तमानयोरिति शेष । अतएव कारकविभक्तिरुदपद्यत । अन्यथा क्रियायोगाभावात्सा कथमुत्पद्येत । षष्ठीनिर्दिष्टत्वादन्त्यस्य स्थाने उकार । अच्छधातोस्तिप्रत्यये मध्येऽसि अनेनेकारस्योकारे तकारस्य यकारे लोपे प्रकृतिभावे च 'अच्छउ' बहुवचने 'अच्छन्तु' ।

## हे. ।३।४।६२॥

अतः परस्य हेर्लोपो वा स्यात् । अच्छ, अच्छाहि । अच्छेह, अच्छह । अच्छामि । अच्छामो ।

हेरिति—अतो लोपो वेति पदत्रय लभ्यतेऽनुवृत्त्या । अत किम् । करेहि । अच्छधातोराज्ञाया सिप्रत्यये मध्येऽसि सेर्ह्यादेशे लोपे तत्परत्वाभावान्न दीर्घ । सर्वविधिभ्यो लोपविधिर्बलीय नसति प्रतिबन्धे इति पूर्व लोप एव । पक्षे हिमिमोष्यत इति इति दीर्घ । अच्छेहेत्यत्र "अस एर्वाहे" इति सूत्रेणैकार ।

## भविष्यति स्सह्यौ त्यादिषु ।२।१।५॥

भविष्यदर्थे विद्यमानाद्धातो' स्सहिप्रत्ययौ भवतस्त्यादिप्रत्यये परे ।

भविष्यतीति—विद्यमानादिति शेष । धातो प्रत्यय इत्यनुवर्तते । भविष्यत्वञ्च वर्त्तमानप्रागभावप्रतियोगित्वम् । तद्द्योतकौ हिस्सहिप्रत्ययौ विकरणरूपौ । विकरणत्व तु प्रकृतिप्रत्ययोभयमध्यपतितत्वे सति प्रत्ययत्वम् । [illegible] नानद्यतनभेदेन भविष्यत्कालस्य भेदो नास्ति । एवमेव तद्भेदेन परोक्ष[illegible] भूतकालस्यापि भेदो नास्ति । अतएवैकैक एव प्रयोगो दर्शित ।

## स्सादीनामिद् ।४।२।२५॥

स्सादीनामिडागम. स्यात् । अच्छिस्सइ । अच्छिस्सन्ति । [illegible] अच्छिस्सह ।

स्सादीनामिति—अयमागमो हि टित्त्वादाद्यवयव [illegible]

स्स, हि, त्था, त्त, ए, त्था, उण, उम्, मोणू एते गृह्यन्ते। अच्छ्धातोर्भविष्यति तिप्रत्यये मध्ये स्सप्रत्यये इडागमे अच्छिस्सइ। एवमग्रेऽपि।

## अच्छादिभ्य सस्सस्य मेरम् ।३।१।५९॥

एभ्य. परस्य स्सप्रत्ययसहितस्य मिप्रत्ययस्यामादेशो वा। अच्छं। पक्षे

अच्छादिभ्य इति—स्सेन सह सस्सस्तस्य। अनेकवर्णत्वात्सर्वादेश। बहुलग्रहणाद्वेति लभ्यते। स्सप्रत्ययसहितस्यादेशे ततस्थानापन्नस्तद्धर्मं लभत इति न्यायेन स्थानीभूतसमुदायवृत्तिधर्मानयनमेव सम्भवति नतु स्सस्य प्रत्येकवृत्ति। तेन नेट सम्भावना। सकारस्यानुस्वार।

## अच्छादिभ्य स्सात् ।३।४।६५॥

अच्छादिभ्य परस्मात्स्सप्रत्ययात्परस्य मिप्रत्ययस्यान्त्यलोपो वा स्यात्। अच्छिस्सं, अच्छिस्सामि। अच्छिस्सामो। अच्छिहिति। अच्छिहिन्ति। अच्छिहिसि। अच्छिहिह।

अच्छादिभ्य इति—मे लोप वा इत्यनुवर्त्तते। मिप्रत्ययस्येकारस्य लोपेऽनुस्वार। तथा सति दीर्घस्तु न शङ्क्य। मिपरत्वाभावात्। एकदेशविकृतमनन्यवदिति न्यायस्य तु न प्राप्ति। अर्द्धाधिकविकारसद्भावात्, अर्द्धविकारेऽर्द्धाधिकविकारे तन्न्यायाप्रवृत्ते। लोपाभावे मिपरे दीर्घ। हिप्रत्ययस्योदाहरणमाह अच्छिहितीत्यादि। विकल्पस्तु बहुलग्रहणाल्लभ्यते। अच्छ्, गन्छ्, अहिड, चर्, वर्, लुच्, ढक्क्, पुच्छ्, रूव्, लज्ज्, भन्, अहियाम्, दार्, गाह्, पज्ज्, कर्, वच्च्, निवार्, माह् इत्यच्छादिराकृतिगण।

## मादौ हेर ।३।१।५५॥

धातो परस्य हेरकारोऽन्तादेश स्यान्मकारादौ प्रत्यये परे। अच्छिहामि। अच्छिहामो।

मादाविति—धातोरित्यनुवर्तते। अन्त्यस्य षष्ठ्या इत्यनेनान्तादेश। मकार आदिर्यस्य स मादिस्तस्मिन् योग्यत्वादन्यपदार्थ प्रत्यय एव। तस्मिन् परे हिकारो विकरण एव सम्भवति। अतएवोदाहृतम्—अच्छिहामीति। हकारोत्तरेकारस्याकारे कृतेऽदन्तत्वाद्दीर्घ।

## इसुर्भूते ।२।१।१७॥

भूतेऽर्थे धातोरिसुप्रत्यय स्यात्। अच्छिसु ६।

इसुरिति—भूतत्वञ्च विद्यमानध्वंसप्रतियोगित्वं तच्चाद्यतनानद्यतनसाधारणम् । सामान्येन विधानाद्वचनद्वये पुरुषत्रये चैवमेव रूपम् । 'अच्छिसु' इति ।

अछ् आकर्षणे ।२। अछइ । अट्, अट्ट, अड् भ्रमणे ।५। अटइ । अटति । अट्टइ । अट्टति । अडइ । अडामि । अडिसु । अण्, णम् श्वसने ।७। अणइ । अणन्ति । आणमइ । आणमति । पाणमइ । अप्पण्, अप्पिण् । अर्पणे ।९। अप्पणइ । अप्पणामि । पच्चप्पिणइ । अप्पाह् सन्देशकथने ।१०। अप्पाहइ । अय् गतौ ।११। अयइ ।

भ्रमणे—भ्रमणं गतिविशेषः । यदुक्तं मुक्तावल्याम् 'भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च । तिर्यग्गमनमप्यत्र, गमनादेव लभ्यते ॥' इति । प्राणने—प्राणनं श्वासाद्यनुकूलव्यापारः । श्वसितीति सर्वलोकप्रसिद्धेः । अण् प्राणने इत्यनेन नार्थः प्रस्फुटति । अर्थनिर्देशस्यापि विक्रियमाणधातुनैव कृतत्वात् । अतः प्रसिद्धार्थकशब्दनिर्देशः कृतः । तथा च प्राणनं श्वसनमभिन्नार्थकम् । स च व्यापारो जीवनयोनियत्नः । यत्नश्च त्रिविधः । प्रवृत्तिनिवृत्तिजीवनयोनिभेदात् । नम्धातुश्च प्राणनार्थः आङ्कारोपसर्गं प्रायो न विजहाति । तेन तद्विशिष्टमेवोदाजहार आणमइ इति । अर्पणञ्च दानमेव । स्थलविशेषेऽधीनीकरणस्वरूपं भवति चेद्भवतु नाम दाधातोरपि रजकाय वस्त्रं ददातीत्यादौ तथाऽर्थदर्शनात् । धातूनामनेकार्थत्वात् । अर्थनिर्देशस्तूपलक्षणम् । सन्देशकथने—सन्देशो वार्त्ता । अतएवाकर्मकः । अप्पाहइ इत्युक्तौ सन्देशं कथयतीति वृत्ते बोधे सति सन्देशस्वरूपकर्मणो धातुत एव लाभेन कर्मान्तराकाङ्क्षाया अदर्शनात् । यच्च कर्म विद्यमानमस्ति तद्धात्वर्थकुक्षिस्थमेव ।

## अयादिभ्यस्त्था ।२।१।१९॥

अयादिभ्यो भूतेऽर्थे त्थाप्रत्ययो वा । अइत्था (६) । अइसु (६) । उदयइ । पलायइ । निपलायइ । निपलाइत्था, निपलाइसु । अरह्, अरिह्, योग्यतायाम् ।१३। अस् सत्तायाम् ।१४।

अयादिभ्य इति—वा भूते इति त्वनुवर्तते । अय् धातोस्त्था प्रत्यये इडागमे यकारलोपे अइत्था । सन्धिस्तु न प्रकृतिभावात् । उदयइ इति तु उदुपसर्गकोऽय्धातुः । पलापूर्वकादय्धातोः पलायइ । सवर्णदीर्घः । सत्तायाम् । ननु सत्ताया क्रियात्वं न स्यात् । तस्या क्रमिकत्वाभावादिति चेन्न सत्ताया आत्मधारणस्वरूपाया अनेककालावस्थायित्वेन कालगतपौर्वापर्यारोपेण क्रमिकत्वस-

स्थेन क्रियात्वाश्रिते । कर्मण आत्मनो धात्वर्थोपसंग्रहादकर्मक । उक्तञ्च—
'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका
क्रिया ॥' इति । धातोरर्थान्तरे वर्तमानत्वादकर्मको यथा नदी वहति । स्यन्दत इत्यर्थ ।
स्यन्दने वर्तमानत्वादकर्मक । कर्मणो धात्वर्थेनोपसंग्रहादकर्मकस्तु प्रकृतप्रयो-
गोऽपि जीव धातुः । कर्मणः प्रसिद्धेरकर्मको मेघो वर्षति । अत्र जलस्य कर्मण
प्रसिद्धि । प्रसिद्धत्वात्तद्बोधसम्भव तस्य कृतौ यत्नो व्यर्थ इति भावः । विद्य-
मानस्यापि कर्मणोऽविवक्षातोऽकर्मक । यथा सकर्मकस्यापि करधातो कर्मणोऽ
विवक्षयाऽकर्मकत्व भवति । अय्, चर, गवेस्, जयू, दर्, धर्, धार्,
भाष्, पत्र्, मय, मनु, याम्, रम, ग्यि्, थाद्, मज्ज्, मर, सेव्, हर,
सेह्, हो, ग्लोऽग्यादयः ।

## असस्तितुमिसिहमुमोयास्वस' ।४।१।५१॥

असधातोः परस्यासो लोप' स्यात्तितुमिसिहमुमोयासु परेषु ।

अस इति—तिश्च तुश्च मिश्च सिश्च हश्च मुश्च मोश्च याश्चेति द्वन्द्व । एक-
देशविकृतमनन्यवदिति न्यायस्याप्राप्त्या स्थान्यादेशयोरुभयोरुपादानम् । लोप इति
स्वानुवृत्त्या लभ्यते ।

## तस्य सात्थ ।४।४।२२॥

सकारात्परस्य तकारस्य थकार. स्यात् । अत्थि ।

सादिति—सात् थ इति पदद्वयम् । अव्ययं विहाय प्रायो धातव एव
व्यञ्जनान्ता विभान्ति । अव्ययेऽपि धान्त्य सकारो न । ततश्च धातोरेव सकार
सम्भवत्यत्र । असधातोस्तिप्रत्यये सत्येऽसि तस्य लोपेऽनेन तकारस्य थकारे
सकारस्य तकार सावर्ण्यात् । सवर्णाकार उच्चारणार्थं ।

## ये न्तिन्तमाणपरेऽस्यतो नित्यम् ।३।४।३१॥

यापरे न्तिन्तमाणपरकेऽसि परे चासो धातोरकारस्य लोप. स्यान्नित्यम् । सन्ति ।

य इति—लोप इत्यनुवर्तते । यापरकस्यासोऽसम्भवेन पृथक्कृत्य निर्देश
कृतः । न्तिश्च न्तश्च माणश्चेति द्वन्द्व विधाय ते परा यस्मात्तस्मिन् न्तिन्तमाणपरे
इति बहुव्रीहिर्विधेयः । द्वन्द्वगर्भबहुव्रीहिमिम मन्यन्ते । बहुलग्रहणस्य निवृत्तिः
सत्र सूचयितु नित्य पदम् । असधातोर्न्तिप्रत्ययेऽसि कृतेऽनेन धातोरकारस्य ल
न्तमाणयोरुदाहरण सन्तो । समाणो । याप्रत्ययस्य त्वग्रेनैव [illegible]

## सिहमिमुमोष्वसः ।३।४।३५॥

असो लोपः स्यात्सिहमिमुमोप्रत्ययेषु परेषु । सि । ह ।

सिहमीति—लोप इत्यनुवर्त्तते । असोनुवृत्त्यैव सिद्धौ पुनरुपादानम् ... यलोपविधानार्थम । तेन अन्त्यस्य षष्ठ्या इति सूत्रस्य बाध एवात्र । अमूनाऽ सिप्रत्ययेऽसि कृते विकरणलोपेऽनेन धातोर्लोप ।

## अस्यस्सी समेरसः ।३।१।२२॥

मिप्रत्ययसहितस्यामो धातोरसि अस्सीत्यादेशौ वा स्तः । असि । अस्मि । मि । मु, मो ।

अस्यस्मीति—असिश्च अस्सिश्चेति द्वन्द्व । मिना सह ममिन्नस्य ... आदेशश्च भवति पर्यायेण । अनेकवर्णत्वात्सर्वादेश । विकल्पस्त्वनुवृत्त्या ... अस् धातोर्मिप्रत्यये मध्येऽसि तस्य लोपे प्रकृतिप्रत्यययोरुभयो पर्यायेण ... भवत । पक्षे सिहमिमुमोष्विवत्यनेन विकरणसहितस्य धातोश्च ... अन्चादित्वान्मुरवे लोपे मु । तस्य वैकल्पिकत्वान्मो ।

## असादिभ्यो या. ।२।१।१३॥

प्रवर्त्तनाऽर्थेऽसादिधातुभ्यो याप्रत्यय स्यात् । एदेञ्ञयौ ...

असादिभ्य इति—प्रवर्त्तनायामित्यनुवर्त्तते । विशेषविहित ... सामान्यविहितयोरेदेज्जयोर्बाधादाह एदेज्जयोरिति । अस्, ... जप्, इव्, ब्रू, एतेऽसादय ।

## अस्चयूजाणहणो यः ।४।२।२७॥

एभ्यः परस्य याप्रत्ययस्येडागम स्यात् । सिया । ...

अस्वयिति—इडित्यनुवर्त्तते । समाहारद्वन्द्वे ... धातोर्याप्रत्यये मध्येऽसि तस्य लोपेऽनेनेडागमे अस् ... धातोरकारलोपे सिया । नन्वत्रेडागमे सति ... तस्मिन् परेऽलोप । न च पूर्वं लोपे कृते इड ... असोऽभावेन तदसम्भवात् । नवैकदेशविकृतमनन्यवत् ... अस्धातुरन्व्यवहार स्यादिति वाच्यम् । अर्द्धविकार ... याप्रवृत्ते । अन्यथा छिन्नार्द्धशरीरे दन्ताग्रवयवस्य ... स्यात् । एकदेशे जातिव्यञ्जकत्वाभावेन न ...

रस्यार्द्धमात्रिकत्वेन रसस्य मात्रिकत्वेनार्द्धाधिकविकारमत्त्वात्कथङ्कार तद्व्यवहार स्यादिति चेन्न यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्त इति न्यायेन आगम-विशिष्टस्य याशब्देन ग्रहणसम्भवात् । परिभाषार्थश्चैव यमुद्दिश्य आगमा विहिता ये, ते तदवयवीभूता । अतस्तद्विशिष्टास्तद्ग्राहकेन शब्देन बोध्यन्ते । तथा चात्र यात्बोधकशब्देनेयाऽपि बोध्यते । एवमेव प्रथमपुरुषबहुवचने मध्यमोत्तम-योर्वचनद्वये च रूपाणि बोध्यानि । अस्थु इत्यत्राऽऽज्ञाऽर्थं तेरिकारस्योकार ।

## अस इणीणो ।२।१।२०॥

असः पराविणीणौ प्रत्ययौ भवतो भूते । इसोरपवाद' ।

अस इति—भूते इत्यनुवर्त्तते । विशेषविहितेनानेन प्रत्ययेन सामान्यविहितेसोर्बाधादाह—इसोरिति ।

## ह्रस्वोपधाया णिति ।३।२।१७॥

ह्रस्वोपधाया वृद्धि' स्याद् णिति परे । आसि । आसी ।

ह्रस्वोपधाया इति—वृद्धिरित्यनुवर्त्तते । ह्रस्वश्चोपधेति । कर्मधारय । अन्त्यात्पूर्व उपधा । अस्धातोर्भूतेऽर्थे इणि प्रत्ययेऽनेनोपधाभूतस्याकारस्य वृद्धि । प्रयुज्यते च "आसी निप्पो महानसो" उत्त० २५।१। आसीद्विप्रो महायशा इत्यर्थ ।

## उत्तमवहुत्वे मोण् ।२।१।२१॥

असो भूतेऽर्थे मोण् प्रत्यय स्यादुत्तमवहुत्वे । आसिमो ।

उत्तमेति—असो भूते इत्यनुवर्त्तते । उत्तमबहुत्वे किम् । इणीणू‌भ्या समुच्चयो माभूत् । उत्तमेति किम् । मध्यमबहुवचने माभूत् । बहुत्वे किम् । उत्तमैकवचने माभूत् । मोणि प्रत्यये स्मादिगणपठितत्वेन इडागमे उपधावृद्धि । प्रयुज्यते च "आसिमो भायरा दोवि" उत्त० १३।५॥ आस्म भ्रातरौ द्वावपीति तदर्थ ।

अस् भक्षणक्षेपणयो' ।१५। असइ । असामि । असामो । इत्यादि अच्छनत् ।

भक्षणक्षेपणयो । गलविलाध सयोगानुकूलव्यापारो भक्षणम् । न न्वेव जलपानकालेऽपि असइ इति स्यात् । तत्रापि जलप्रतियोगिकगलाध सयोगानुकूल व्यापारसत्त्वादिति चेत्सत्यम् । सयोगे द्रवेतरद्रव्यप्रतियोगिकत्वस्योपलक्षणविधया प्रवेशात् । अतएव नाकर्मकत्वम् । तस्य धात्वर्थाप्रवेशात् । द्रव्ये द्रवेतरत्वदानेन न पुनस्तयापत्तिस्तदवस्था । तदापत्तितादवस्थ्येन

विशेषणप्रवेशस्य वैयर्थ्यापत्तेः । क्षेपणञ्चोत्तरदेशसंयोगानुकूलो व्यापारविशेषः । क्षेपणस्यापि गतिविशेषत्वात् । अतएव अधोदेशादौ प्रक्षिप्ते लोष्टादौ अधो गच्छति लोष्ट इत्यादि प्रतीतिर्भवति । अतएव 'उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा । प्रसारणञ्च गमनं कर्माण्येतानि पञ्च च ॥' इति कारिकाव्याख्यानावसरे मुक्तावलीदिनकरीटीकायाम् 'गमनादेवोत्क्षेपणादीनामपि लाभसम्भवात्किमर्थं तेषां पृथक्कृत्योपादान'मित्याशङ्क्य स्वतन्त्रेच्छस्य मुनेर्नियोगपर्यनुयोगानर्हत्वादिति समाहितम् । अन्यथोत्क्षेपणादेर्गमनान्तर्भावो भाव्यभावात्तच्छङ्कासमाधानयोरुभयोरपि निर्दलत्वं स्यात् । समभिव्याहृतसत्तार्थकासुधातुसादृश्यभ्रममपाकर्तुमाह अच्छनादिति । अतएव पृथक्कृत्य निर्देशोऽपि समर्थितः ।

इङ्ग चेष्टायाम् ।१६। इगइ । इगति । इगिस्सइ । इगिंसु । इच्छु, इस, ईह्, इच्छायाम् ।१९। इच्छइ । इसइ । ईहए, ईहइ । इध् वृद्धौ ।२०। इधइ । इरिय् गतौ ।२१। इरियइ । ईस् ऐश्वर्ये ।२२। ईसइ । उच् कौटिल्ये ।२३।

चेष्टायाम्—चेष्टा हि शरीरव्यापारस्तदनुकूलव्यापारो धात्वर्थः । स च प्रयत्नः । इच्छायाम्—इच्छानुकूलव्यापारो धात्वर्थः । स च व्यापारो ज्ञानम् । विना ज्ञानमिच्छाया अनुत्पत्तेः । फलञ्चेच्छा । फलतावच्छेदकसम्बन्धो विषयता । अतएव 'जाणइ' 'इच्छइ' इति प्रतीतिः । नचातीतानागतयोर्विषयतया फलशालित्वाभावेन कर्मत्वं न स्यादिति वाच्यम् । तयोरपि बुद्ध्युपारोहात्फलशालित्वाक्षतेः । धातुपाठे प्रायः फलमात्रस्यैव निर्देशः । तेन तावन्मात्रार्थकत्वं धातोरिति न भ्रमितव्यम् । तथा च स्वार्थफलव्यधिकरणसमानाधिकरणव्यापारवाचकत्वरूपसकर्मकत्वाकर्मकत्वयोर्व्याघातापत्तेः । नन्वस्तु फलमात्रं धात्वर्थः । व्यापारप्रतीतेस्त्वाख्यातार्थतयाप्युपपत्तेः । न च व्यापारस्याख्यातार्थत्वे कर्तृप्रतीतिर्न स्यादिति वाच्यम् । लक्षणयाऽपि तत्प्रतीतिसम्भवात् । तथाच धातोर्व्यापारार्थकत्वं विफलमिति चेन्न । फलमात्रस्य धात्वर्थत्वे गामो गमनवन्तो इत्याद्यापत्तेः । एतेन व्यापारार्थकत्वाभावेऽपि व्यापारव्यधिकरणसमानाधिकरणफलवाचकत्वरूपसकर्मकत्वाकर्मकत्वस्वीकारेणैव तद्व्यवहारसिद्धौ फलमात्रं धात्वर्थ इत्यपास्तम् ।

## उंचादिभ्योऽय इडेडादौ च ।२।१।८३॥

एभ्योऽयः प्रत्ययो वा स्यादाज्ञाप्रवर्तनावर्तमानेष्विडेडादौ च प्रत्यये । उचयइ, उचइ । उचयन्ति, उचन्ति । उचइस्सइ ।

उचादिभ्य इति—ना आज्ञाप्रवर्त्तनावर्तमानेष्विस्यनुवर्तते। इट् च एट् च इडेडौ तावादौ यस्य स इडेडादिस्तस्मिन्। द्वन्द्वे सति बहुव्रीहि। अन्यपदार्थं प्रत्यय। स च विशेषणबलादाकृष्यते। तादृशप्रत्यया स्स, हि, त्ता त्तए ऊण्, ऊम् प्रभृतय। अनिर्दिष्टार्था हि प्रत्यया स्वार्थे भवन्तीति न्यायादय प्रत्यय स्वार्थिक, अनिर्दिष्टार्थत्वात्। अयप्रत्ययेऽकार उच्चारणार्थ। उच् धातोर्न्तिप्रत्ययेऽनेनायप्रत्यये धातुसञ्ज्ञायामसि उचयन्ति। अयाभावे उचन्ति। भविष्यत्काले उच्+इस्सइ इत्यत्रानेनायप्रत्यये यकारलोपे प्रकृतिभावे उचइस्सइ। अयाभावे उचिस्सइ। एव उचइत्ता। उचित्ता। उचइत्तए उचित्तए इत्यादि। उच्, अत्थ्, आस्, उद्-ईर, कप्प्, खिस, खुभ, खोभ्, चोय्, छाद्, जण्, ठव्, णुल्ल्, तज्ज्, दल्, धाट्, धार्, भज्, पाल्, पूज्, मत, माण्, मिल्, राह्, वज्ज्, वर्, वेद्, साह्, स्सय् इत्युचादिराकृतिगण।

उछ् सेवने।२४। उछइ। उज् योजनेऽग्न्युद्दीपने च।२५। उजइ। उनउजइ। निउजइ। उद् सङ्कोचने।२६। उटइ। उज्झ् उत्सर्गे।२७। उज्झइ। ऊह् नितर्के।२८। ऊहइ, ऊहए। ऊहति। एय् कम्पने।२९। एयइ। एयति। कडार् खनने।३०। कडारइ। कड्डय्, कड्डय् गात्रविघर्षणे।३२। कड्डयए। कड्डयइ। कड्डयए, कड्डयइ। कत् छेदने।३३। कतइ। कद् आक्रन्दने।३४। कदइ। कप् कम्पने।३५। कंपइ। कपन्ति। कज्जल् ब्रुडने।३६। कज्जलइ। कज्जलति। कड्ढ् व्यक्तायां वाचि आकर्षणे च।३७। कड्ढइ। कड्ढति। कढ् निष्पाके।३८। कढइ। कढति। कण् शब्दे।३९। कणइ। कणति। कन्न् भेदने।४०। आकण्णइ। आकण्णति। आयन्नइ। आयन्नति। प्रायेणायमाङ्पूर्व। कत्त् छेदनतन्तुसन्तानयो।४१। कत्तइ। कत्तति। कत्थ् श्लाघायां व्यक्तायां वाचि च।४२। कत्थइ। कत्थति। कस् प्राप्तौ तनूकरणे आकर्षणे च।४३। कसइ। कसति।

अग्न्युद्दीपने—अग्निरिति न धात्वर्थस्य कुक्षौ प्रविशति। किन्तु वह्नेरुद्दीपने एवाय प्रयुज्यते धातुरिति विज्ञानाय तदुपादानम्। उत्सर्गे। उत्सर्गो नाम स्वस्वत्वनिवृत्त्यनुकूलो व्यापार। नह्यत्रार्थकुक्षौ परस्वत्वोत्पत्तेरपि प्रवेश। दानार्थकेन धातुना पर्यायतापत्ते एतावानेव ततोऽस्य विशेष। गात्रविघर्षणे। तच्च गात्रमज्जनम्। आक्रन्दने। आक्रन्दन नाम दु खजन्यशब्दस्तदनुकूलव्यापारो धात्वर्थ। ब्रुडने। ब्रुडन संवरण मज्जनमप्येके। खनने। खनन

खनित्रादिना मृदादिनि सारणम् । भेदने । भेदन छिद्रकरणम् । स एव धातुरा-पूर्वक श्रवणार्थे । प्रायोऽयमापूर्वक एव प्रयुज्यते । अतएव सर्थवोदाहृत । आकण्णइ इत्यत्र णत्वमुभयोर्नकारयो । आयन्नइ इत्यत्र ककारस्य यकार । णत्वस्य वैकल्पिकत्वादत्र न णत्वम् । तन्तुसन्तानयोः । तन्यत इति तन्तु । तन्धातो-रौणादिकस्तुन्प्रत्यय । सन्तान इत्यपि सम्पूर्वकतन्धातोर्घञ्प्रत्ययेन । तथा च समीचीन विस्तारकरण सन्तानशब्दार्थ । तन्तो सन्तानमिति विग्रह । तन्तू-त्पादनमिति यावत् । कप्पास कत्तइ इत्यादौ समवायेन तन्तुवृत्तिजनेरवच्छेदक-तासम्बन्धेन कार्पासे सत्त्वेन तादृशफलवत्त्वमादाय कर्मत्वम् । तन्तु कत्तइ इत्यादौ तु कत्तधातुर्निष्पादनमात्रार्थ । तथाच तन्तु निष्पादयतीत्यर्थ । श्लाघायाम् । अविद्यमानगुणसम्बन्धज्ञापन श्लाघा । तनूकरणे । तनूकरण कृशकरणम् । आकर्षणे । आकर्षण बलादानयनम् ।

## ओदुदोभ्यां कस आकर्षणे ।२।४।१०२॥

उद्ओपूर्वकस्य कस्धातोरुपधाया ओकारो ना स्यात् । उक्कोसइ, उक्कसइ । ओक्कोसइ, ओक्कसइ । करिस् आकर्षणे तनूकरणे च ।४४। करिसइ । काय् बन्धने ।४५। कायइ । कास् कुत्सिते शब्दे प्रकाशनायाञ्च ।४६। कासइ । पका-सइ । किड्ड् क्रीडायाम् ।४७। किड्डइ । किलिद् आर्द्रीभावे ।४८। किलिदइ । किलिस्स्, किलेस् उपतापे ।५०। किलिस्सइ । किलेसइ । किस् तनूकरणे ।५१। किसइ ।

ओदुदोभ्यामिति—वेत्यनुवर्त्तते ओत् उदोभ्यामिति पदद्वयम् । आकर्षणे वर्तमानस्य कस्धातोरुपधाया ओकारविधानेन प्राप्तौ तनूकरणे च तस्योपधाया नौकार । तेन तत्र उक्कसइ इत्येव । उदोभ्यामिति कम् । पकसइ, कसइ इत्यादौ माभूत् । बन्धने । देशान्तरसयोगविरोधिसयोगानुकूलव्यापारो बन्धनम् । कुत्सिते शब्दे । कासव्याधिप्रपीडिता मनुजा यदा कफनिर्गमनाय शब्दयन्ति तदा एप प्रयोगो जायते । कुत्सितशब्दानुकूलव्यापारो धात्वर्थ । अस्मिन्नर्थे चाकर्मकोऽय विभाति । शब्दक्रियत्वात् । प्रकाशनायाम् । प्रकाशनेत्यत्र हेतुमण्ण्यन्ताद्युच् । तथाच प्रकाशानुकूलव्यापारोऽर्थ सिध्यति । एवञ्चास्मिन्नर्थेऽय सकर्मक । प्रकाशयतीत्येतत्समानार्थत्वात् । न तु प्रकाशमात्रमर्थ । प्रकाशे इत्यपहाय प्रका-शनायामिति ण्यन्तप्रकृतिक्युचो निर्देशस्य वैयर्थ्यापत्ते । क्रीडायाम् । क्रीडा नाम मनोविनोदजनको व्यापारविशेष । उपतापे । उपतापो विषाद ।

कुच् सङ्कोचने ।५२। कुचइ । कुच्छ् निन्दायां सेवने च ।५३। कुच्छइ । कुज्झ् क्रोधे ।५४। कुज्झइ । कुड्ड् कुड्डने ।५५। कुड्डइ । कुड् दाहे ।५६। कुडइ । कुण् करणे ।५७। कुणइ ।

सङ्कोचने । सङ्कोचो नाम कौटिल्यकरणम् । अल्पीभावकरणञ्च । उभयो सकर्मक । अङ्गानि सकुचइ, धर्णानि सकुचइ इत्युभयो प्रयोगात् । क्रोधे । क्रोधो नाम नेत्रलौहित्यादिहेतुपरिणामविशेष । तदनुकूलव्यापारो धात्वर्थ । दाहे । दाहो नाम भस्मजनकाग्निसंयोगानुकूलो व्यापारः । भस्मजनकत्वनिवेशाच्च भर्जनार्थे कुडप्रयोग । भर्जन नाम विना तैलादिक विक्लित्त्यनुकूलव्यापार । करण नाम उत्पत्त्यनुकूलव्यापार ।

## कुणादिभ्य सेः सुर्वा ।३।१।४९॥

एभ्य आज्ञाया विहितस्य से सुरित्यादेशो वा स्यात् । कुणसु, कुण, कुणाहि ।

कुणादिभ्य इति—आज्ञायामिति किम् । कुणसि इति वर्त्तमाने माभूत् । कुणसु । आदेशविधानाच्च सौ कृते ह्यादेश । सौ कृते प्राप्त्यभावान्नेति तु न वाच्यम् । एकदेशविकृतमनन्यवदिति न्यायेन सोरपि सित्वसम्भवात् । तदभावे हि । कुणादीसत्र हिमिमोष्वतो दीर्घ इति दीर्घ । कुण्, अप्प्, कड्, चड्, क्खिव्, ग्वाम्, गिण्ह्, चिण्, छिंद्, जत्, जय्, जाण्, जाय्, डह्, दड्, दह्, भव्, पाल्, फाल्, भमाड्, भास्, भुज्, मन्न, मिल्लाव्, मुच्, लुच्, वन्च्, वज्ज्, सुण्, हव्, एते कुणादय ।

## एणयोरेज्जकुणो ।३।४।६३॥

कुण्धातोर्णस्यैज्जप्रत्ययैकारस्य च लोपो वा । कुज्जा, कुणिज्जा । कुणे । कुत्थ् दौर्गन्ध्ये कुत्सायाञ्च ।५८। कुत्थइ । कुद् कूर्दने ।५९। कुदइ । कुप्प् क्रोधे ।६०। कुप्पइ । कुव्व् करणे ।६१। कुव्वइ । कुह् दौर्गन्ध्ये ।६२। कुहइ । कूड् मत्याघाते ।६३। कूडइ । कूण् अव्यक्ते शब्दे ।६४। कूनइ । कम् पादविक्षेपे ।६५। कमइ ।

एणयोरिति—लोपो वेत्यनुवर्त्तते । अत्र यथासङ्ख्यान्वयादाह कुण्धातो र्णस्येति । एज्जे तदसम्भवाच्च । ननु सूत्रे एज्जग्रहण व्यर्थम् । सम्बन्धसामान्यषष्ठ्या कुणसम्बन्धिनोरेकारणकारयोरित्यर्थकरणेऽपि कुण्धातोर्विहितैज्जप्रत्ययघटकैकारस्य तत्सम्बन्धित्वानपायात एज्जे तत्सम्बन्धित्वसत्त्वे तदवयवेनेत्यस्य तु

जल्पनमात्रत्वादिति चेन्न । कृणुधातोर्विहितैत्प्रत्ययस्य लोपो माभूदतस्तद्ग्रहण-स्यावश्यकत्वात् । अनेन लोपः पर्यायेण न भवति किन्तु सहैव । तेन केवल णकारस्यैकारस्य वा लोपं विधाय न रूपाधिक्यं शङ्क्यम् । कूर्दने । उत्प्लवनं कूर्दनम् ।

## अत्यप्यवानां च ।४।१।२३॥

एषामादेर्लोपो वा स्यात् । वक्कमइ, अवक्कमइ ।

अत्यप्येति—आदेर्लोपो वेत्यनुवर्त्तते । उपसर्गस्य धातुभिरेव सम्बन्धादत्रोदाहरणोपक्रममाश्रित्य निजगाद । वक्कमइ इत्यत्राकारलोपः ।

## निरः क्रमः ।४।१।९॥

निरः परस्य क्रमुधातोरादेर्लोपः स्यात् ।

निर इति—आदेर्लोप इत्यनुवर्त्तते ।

## क्रमुचिणुतरूपज्ञां द्वितीयः ।२।४।८४॥

एषामादेर्द्वितीयः स्यात् । निक्खमइ ।

क्रमुचिणिति—आदेरित्यनुवर्त्तते । निर्+क्रमइ इत्यत्र निरः क्रमः इति सूत्रेणादेर्लोपेऽवशिष्टकस्यानेन खकारे रेफस्य परसवर्णे निक्खमइ ।

## समः ।४।१।१४॥

समः परस्य संयुक्तादेर्लोपः स्यात् । सकमइ ।

सम इति—संयुक्तस्यादेर्लोप इत्यनुवर्त्तते । अपूर्वत्वाभावात् संयुक्तादेर्लोपाप्राप्तौ वचनम् । एवं पूर्वमपि सकमइ इत्यत्र धातोरादेर्लोपे सकमइ ।

## ईर्वेरतौ वा ।३।२।२८॥

वेरिकारस्यातौ परे पूर्वपरयोरीकारादेशो बहुलं स्यात् । वीइक्कमइ ।

ईरिति—पूर्वपरयोरित्यनुवर्त्तते । षष्ठीनिर्देशेनान्त्यस्यैव सम्भवीत्याहेकारस्येति । वि अति क्कमइ इत्यत्रोभयोः स्थाने ईकारे वीइक्कमइ । तस्य यकारे लोपः ।

किस्स्, किस् क्लेशे ।६७। किस्सइ । किसइ । कोस् आक्रोशे ।६८। कोसइ । अक्कोसइ ।

आक्रोशे—आक्रोशो निन्दा । अक्कोसइ । संयुक्ते ह्रस्वः । सिरसादित्वात् संयुक्तादेर्लोपे दीर्घे आकोसइ ।

क्वद् गतौ ।६९। क्वदइ । क्खभ् रोधने ।७०। खमइ । खभेज्जा । क्खल् पतने ।७१। खलइ । पक्खलइ । क्खोड् प्रस्फोटने ।७२। खोडइ । पक्खोडइ । खन् खनने ।७३। खनइ । निक्खणइ, निक्खणति ।

रोधने । रोधन नाम देशान्तरसयोगविरोधिव्यापार । पतने । पतन यदि अध सयोगानुकूलव्यापारस्तदा सकर्मक । अत एव नरक पतितो इति भवति । तथा च गम्धृवत्सकर्मक । विभागजन्यसयोगमात्रार्थकत्वे त्वकर्मक । प्रस्फोटने । प्रस्फुटन नाम अवयवविभागानुकूलव्यापार । निक्खणइ इत्यत्र परसवर्णेन रेफस्य ककार ।

## निरः खन इडेडादौ ।४।१।३०॥

निर. परस्य खन्धातोष्टेर्लोपो वा स्यादिडेडागमादिप्रत्यये परे । निक्खिस्सइ । निक्खणिस्सइ । निक्खहिइ, निक्खिणिहिइ । उन्निक्खिस्सामि, उन्निक्खणिस्सामि । एडागमस्य तु उन्निक्खेयव्व ।

निर इति—टेरिति लोपो वेति चानुवर्त्तते । इडेडौ आदी यस्य स इडडादिस्तस्मिन्निडेडादौ । अन्यपदार्थस्तु प्रत्यय एव । इडेडोरन्यस्याविधानादाह प्रत्यय इति । निर् + खन् + इस्सइ इति स्थितेऽनेन टिलोपे परसवर्णे । परसवर्णोत्तर लोपेऽपि न क्षति । अपूर्वकनिर परस्यैव लोपो भवतीति विभ्रममपाकर्तुमाह उन्निक्खिस्सामि । एडागमोदाहरणाकाङ्क्षाशमनाय निर्दिशति एडागमस्येति ।

खम् सहने ।७४। खमइ ।

## खमादेर्हे ।३।१।७०॥

अस्मात्परस्मादम परस्य हेरेसादेशो वा स्यात् । खमे, खम, खमाहि ।

खमादेरिति—असो वेत्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । खम + हि इत्यवस्थाया हेरेसादेशे वृद्धि । पक्षे लोप । तदभावे दीर्घ । क्षमस्वेत्यर्थ । अतएव 'भगव एत्थ मे खमे' उत्त० ।१८।८॥ एव मग्गे, मग्ग, मग्गाहीत्याद्यूह्यम् ।

## आज्ञायां खमादेरसो हे ।३।२।५७॥

अस्मात्परस्यासो दीर्घो वा हे परे आज्ञायाम् । खमाह, खमह ।

आज्ञायामिति—दीर्घो वेत्यनुवर्त्तते । आज्ञाया किम् । वर्त्तमानादौ खमाहेति माभूत् । एव दलाह, भणाह इत्यादि बोध्यम् । तथा चोदाहरन्ति 'अ हीलिया

तस्स समाहइ भन्ते' उत्त० ।१२।३१॥ खम्, दल्, इत्यादय' खमादय ॥

खर् क्षरणे ।७५। खरइ । खल् सचलने ।७६। खलइ । खिंस् निन्दायाम् ।७७। खिंसइ । खिंसति । खिज्ज् दैन्ये ।७८। खिज्जइ । खुड् तोडने ।७९। खुड्डइ । खुद् आयुर्हानौ ।८०। खुद्दइ । खुध् बुभुक्षायाम् ।८१। खुधइ । खुभ्, खुभ् क्षोभे ।८३। खुब्भेइ । खुभेइ । खेल् क्रीडायाम् ।८४। खेलइ । खेलति । गच्छ् गतौ ।८५। गच्छइ । गच्छति । गच्छेह । गच्छह । गच्छ, गच्छिस्स, गच्छिस्सामि, गच्छिस्सामो । गज्ज् गर्जने ।८६। गज्जइ । गण् सख्याने ।८७। गणइ । गब्भ् प्रागल्भ्ये ।८८। गब्भइ । गम् गतौ ।८९ गमइ । गमति ।

दैन्ये । दैन्य परिदेवनम् । खेद इति यावत् । तोडने । तोडन द्विधाभवनानुकूलो व्यापार । अत्रायमकर्मक । सकर्मकत्वन्तु प्रेरणामन्तर्भाव्य भवति । आयुर्हानौ । हानिर्नाश । आयुषो नाश इत्यर्थ । आयुषो हानिरिति विग्रह । आयुषो न धात्वर्थकुक्षौ प्रवेश । हानिमात्रस्यैव धात्वर्थत्वात् । आयुषो हानावेव प्रायः प्रवर्त्ततेऽय धातुरिति बोधनाय तदुपादानम् । बुभुक्षायाम् । भोक्तुमिच्छाऽर्थ । इच्छाया न साक्षात्कार किन्त्वनुमानाद्बोद्धव्यः । खुब्भइ । तुसादित्वाद् द्वित्वम् । गच्छ । अत्र रसम्योरुभयो स्थानेऽमादेश । पक्षेऽन्त्यलोपेऽनुस्वारे गच्छिस्स । गर्जने । गर्जन शब्दानुकूलव्यापार । यत्र च दीर्घतरदीर्घतमा शब्दा जायन्ते तत्रैवाय प्रयुज्यते । तेन न सामान्यशब्दानुकूलव्यापारदशायामेतस्य प्रवृत्ति । प्रागल्भ्ये । प्रागल्भ्य धाष्टर्यम् ।

## आगमस्तावे' ।२।१।८८॥

आपूर्वकगम्धातोरेम् प्रत्ययो वा स्याचौ परे । आगमेइ, आगमइ । गरह्, गरिह् निन्दायाम् ।९१। गरहइ । गरिहइ । गल् स्रवणे ।९२। गलइ । गलच्छ् चेष्टायाम् ।९३। गलच्छइ । गलच्छति । गवच्छ् आच्छादने ।९४। गवच्छइ । गवच्छंति । गवेस् अन्वेषणे ।९५। गवेसइ । गवेसति । गवेसित्था, गवेसिंसु । गस् भक्षणे ।९६। गसइ । गसति । गसिंसु । गिज्झ् आसक्तौ ।९७। गिज्झइ । गिज्झति ।

आगम इति—आपूर्वको गम्—आगम् तस्मादागम । मध्यमपदलोपी समास । विशेषविहितत्वात्पूर्वमेशिप्रत्यये आगमेइ । पक्षे अस् प्रत्यय ।

आच्छादने । आच्छादनमपवारणम् । अन्वेषणे । अनुपूर्वकादिषूधातोर्न्युटि अन्वेषणम् । गवेषणमित्यर्थः । अपादिभ्यस्तथा चेति सूत्रेण स्थात्यये इडागम । पक्षे इमु । आमर्शे । आसक्तिरभिकाङ्क्षा । आत्यन्तिकीच्छेति यावत् । तदनुकूलव्यापारो धात्वर्थः ।

## गिज्झादा च ।२।१।१४॥

गिज्झधातोः प्रवर्त्तनायामाप्रत्ययश्च स्यात् । गिज्झा, गिज्झे, गिज्झिआ, गिज्झेआ । गीर् निगरणे ।९७। गीरइ । गीरति । गीरिंसु । गुञ् अव्यक्ते शब्दे ।९९। गुञइ । गुञति । गुञिंसु । गुड् रजःसमर्गे ।१००। गुडइ । गुडति । गुडिंसु । गुर् उद्यमने ।१०१। गुरइ । गुरति । गुरिआ । गुरिंसु ।

गिज्झादिति—प्रवर्त्तनायामित्यनुवर्त्तते । समुच्चयार्थोऽत्र चकारः । तेनाने नैदेश्रयो सामान्यविहितयोरपवादे न आप्रत्यये दीर्घ । एति कृते वृद्धि । निगरणे । निगरणमपि भक्षणमेव यथाम्लादिरसमननुभवन्तो भुञ्जते मनुजास्तत्रायम्प्रयोगो विशेषेण । अस्यैवोदुपसर्गसंसर्गे सति उद्गमनमप्यर्थः । अव्यक्ते शब्दे । अव्यक्त शब्दो नाम अप्रतीयमानकत्वादिधर्मः । अयञ्च चञ्चरीककृतावेव प्रवर्त्तते । अतएव भेर्याद्यव्यक्तशब्दे नास्य प्रवृत्तिः । रजःसंसर्गे । रजसा संसर्गो रजो धूलिस्तेन सम्बन्ध इत्यर्थः । तदनुकूलव्यापारो धात्वर्थः । दुकूलं गुडइ इत्यत्र दुकूलस्य रजःसंयोगानुयोगितया फलाश्रयत्वे कर्मत्वम् । सम्बन्धस्य प्रतियोग्यनुयोगिनोरुभयोः सत्त्वात् । द्विष्ठत्वे सति सम्बन्धिद्वयभिन्नत्वे सति विशिष्टबुद्धिनियामकत्वस्यैव सम्बन्धपदार्थत्वात् । उद्यमने । उद्यमनमुद्यम उद्योग । प्रयत्न इति यावत् ।

## अवादपस्य गुरुगुणो ।४।१।८॥

अवात्परस्यापोपसर्गस्यादेर्लोपो मगागमश्च गुरगुण्धात्वोः परयो । अवप गुरइ । अवपगुरति । अवपगुरे । अवपगुरिंसु ।

अवादिति—आदेर्लोप इत्यनुवर्त्तते । संयोगविशिष्टस्वात्सहैव प्रवृत्तिनिवृत्त्या न पर्यायता द्वयोर्विधेययोः । अत्र कार्यनिमित्तयोर्न यथासंख्यम् । तेन प्रत्येक परे सति कार्ययुग संयुज्यते । गुणात्तु अवपगुणे । अपाकारस्य लोप । आगमेऽकार उच्चारणार्थ ।

गुर् व्याकुलत्वे ।१०२। गुरइ । गुवति । गुविंसु । गुह् संवरणे ।१०३। गुहइ । गुहिंसु । गूह् आलिङ्गने संवरणे च ।१०४। गूहइ । गूहति । गूहिंसु । घस् सघर्षणे ।१०५। घसइ । घत्त् गवेषणे प्रयत्ने च ।१०६। घत्तइ । घत्तिंसु । घस् सघर्षे अदने च ।१०७। घसइ । घास् सघर्षे ।१०८। घासइ । घुट्ट् पाने ।१०९। घुट्टइ । घुम्म् घूण् भ्रमणे ।१११। घुम्मइ । घूणइ । घुस् शब्दे ।११२। घुसइ । घोल् सघर्षे ।११३। घोलइ । चक्क् भये ।११४। चक्कइ । चक्ख् आस्वादने ।११५। चक्खइ । चक्खति । चच्च् विलेपने ।११६। चच्चइ । चम् आर्द्रीकरणे ।११७। चमइ । चमढ् मर्दने ।११८। चमढइ । चर् गतिभक्षणयो. ।११९। चरइ । चय् पतनचयनयोः ।१२०। चयइ, चवइ । चयति, चवति । चिगिन्छ् चिकित्सायाम् * ।१२२। चिगिच्छइ ।

भ्रमणे—भ्रमणमपि गमनमेव । परञ्च यत्र नियतदेशसयोगानुकूलो व्यापारस्तत्र गच्छइ इति भवति । यत्र चानियतदेशसयोगानुकूलव्यापारस्तत्र घुम्मइ इति भवति । घुस् शब्दे । शब्दानुकूलव्यापारो धात्वर्थः । यत्र सजातीयशब्दानुकूल एव व्यापारो नतु निजातीयशब्दानुकूलस्तत्रैवाय धातु प्रयुज्यते । घोल् सघर्षे । चूर्णप्रतियोगिकद्रवद्रव्यसयोगानुकूलव्यापारोऽत्र सघर्षः । सत्तु घोलइ इत्येव प्रयोगात् । आस्वादने । आस्वादनमित्यत्रैपदर्थे आकारो न किन्तु सम्यगर्थे । तथा च सम्यगास्वादनमर्थः । रसज्ञानानुकूलव्यापार आस्वादनम् । विलेपने । आर्द्रीकृतचूर्णद्रव्यसयोगानुकूलव्यापारो विलेपनम् । चिकित्सायाम् । व्याधिप्रतीकार, निग्रह, अपनयनम्, नाशनम्, सशयश्च चिकित्सापदार्थः ।

चिण् चयने ।१२३। चिणइ । चिणति ।

चयन इति—चयन राशीकरणम् ।

## चिणो डु ।३।१।७१॥

चिणोऽमः परस्य हेर्डुमादेशो वा स्यात् । चिणु, चिण, चिणाहि, चिणसु । चिणिंसु । चिल्ल् दीप्तौ ।१२४। चिल्लइ । चुम्ब् चुम्बने ।१२५। चुम्बइ । चुक्क् भ्रशने ।१२६। चुक्कइ । चुण्ण् दलने ।१२७। चुण्णइ । चेट्ट् चेष्टायाम् ।१२८। चेट्टइ । चव् मरणे ।१२९। चवइ । च्चुय् पतने ।१३०। चुयइ । च्छड् त्यागे ।१३१। छडइ । च्छद् निमन्त्रणे वाञ्छायाञ्च ।१३२। छदइ ।

* इत आरभ्य प्रथमगणपर्यन्त प्रत्यक सख्यायामकाङ्को न्यूनो बोध्यम ।

च्छज्ज् दीप्तौ ।१३३। छज्जइ । च्छड् वितुषीकरणे ।१३४। छडइ । च्छण् हिंसायाम् ।१३५। छणइ । च्छिक्क् छीअ छिक्कायाम् ।१३७। छिक्कइ । च्छिव् स्पर्शे ।१३८। छिवइ । च्छुभ् छुब्भ् प्रक्षेपणे ।१४०। छुभइ, छुब्भइ । च्छुह् स्पर्शे प्रक्षेपे च ।१४१। छुहइ । च्छोल् च्छोलल् छेदने ।१४३। छोलइ । छोल्लइ । जत् वशीकरणबन्धनयो ।१४४। जतइ । जंप् जप्प् व्यक्ताया वाचि ।१४६। जपए, जपइ । जप्पए, जप्पइ । जभ् गात्रविस्तारे ।१४७। जभायइ । जभइ । वियभइ । जग्ग् जागर् निद्राक्षये ।१४९। जग्गइ । जागरइ । जत् प्रयत्ने ।१५०। जयइ, जतइ । कुणादित्वात् जयसु, जय, जयाहि ।

चिण इति—हे असो चेत्यनुवर्त्तते । सित्वात्सर्वादेश । डित्वाट्टिलोप ह्यादेशेऽनेन डुसादेशे चिणु । तदभावे हिलोपे चिण । तदभावे दीर्घे चिणाहि । कुणादित्वात्तु चिणसु । चुबने । चुम्बनमोष्ठद्वयप्रतियोगिकसयोगानुकूलव्यापार-विशेष । ननु बाल चुबइ इत्यसङ्गतम् । सकलावयवमिलितस्यैव धात्वेन तादृशसयोगस्य त्वेकदेश एव वृत्तित्वादिति चेत्सत्यम् । हस्तपुस्तकसयोगात् शरीरपुस्तकसयोग इति सयोगजसयोगस्य न्यायशास्त्रे प्रसिद्धत्वात् मुखमात्रबालेपि सयोगजसयोगसत्त्वात् । अशने । अशनम् अध पतनम् । दलने । दलनमत्र चूर्णीकरणम् । मरणे । मरणमत्र प्राणवियोगानुकूलव्यापार । वितुषीकरणे । वितुषीकरण तुषनिरसनम् । तुषाभावरूपफलाश्रयत्वाद् अन्न छडइ इत्यादावन्नस्य कर्मता । छिक्कायाम् । छिक्काशब्दो दैशिक । नासाया शब्दविशेषश्छिक्का । तद-नुकूलव्यापारो धात्वर्थ । जपए । अच्छादित्वादेकार । एवमग्रेऽपि । गात्र-विस्तारे । प्रायो मुखविस्तारविशेषानुकूलव्यापार एवायम्प्रयुज्यते । जभायइ । पचल्जभ इति वक्ष्यमाणसूत्रेणायप्रत्यय ।

जय् जये यागे च ।१५१। जयइ । जह् त्यागे ।१५२। जहइ । जाण् अव-बोधने ।१५३।

## जाणादेस्तिस्यो ।३।२।४९॥

अस्मात्परस्यासो दीर्घो वा तिस्यो परयो । जाणाइ । जाणइ । जाणासि । जाणसि ।

जाणादेरिति—अस् इत्यनुवर्त्तते दीर्घो वेति च । जाण्धातोस्तिप्रत्यये

मध्येऽसि दीर्घे जाणाइ । दीर्घाभावे जाणइ । सिप्रत्यये जाणासि, जाणसि । जाण्, किण्, जूर्, तिप्प्, दल्, धूण्, विह्, पीड्, सद्, दह् एते जाणादय ।

## जाणो यः ।२।४।८०॥

अस्य धातोरादेर्यकारो वा । याणइ । याणइ ।

जाण इति—वा आदेरिति चानुवर्त्तते । आदेर्जकारस्य यकारार्थमिदं सूत्रम् । अनादेस्तु तस्य सन्धिस्थसूत्रेणैव सिद्धे ।

## जाणादेस्सिम्योर्वा ।२।४।६४॥

अस्महितजाणधातोः परयोः सिम्योरेसादेशो वा स्यात् । जाणे । जाणामि । जाणसि । जाणे । जाणामि ।

जाणादिति—असूप्रत्ययविशिष्टनाज्जाणेत्यस्याकारान्तत्वम् । सिश्च मिश्च सिमी तयो । मध्यमोत्तमपुरुषैकवचनयोरित्यर्थ । एसित्यस्य सित्त्वात्सर्वादेशः । जाण् अ सि इति स्थितेऽनेन सिप्रत्ययस्यैसादेशे वृद्धौ जाणे । न तुम जाणे अणाहसं' उत्त० ।२०।१६॥ त्वं न जानासीत्यर्थ । मिप्रत्ययेपि जाणे । जाणामीति—'आउ जाणे जहा तहा' उत्त० ।१८।२९॥ अत्र जाणे इत्यस्य जानामि इत्यर्थ । कुणादित्वाज्जाणसु ।

## जाणुइणो वा ।२।१।१५॥

आभ्यां या प्रत्ययो वा स्यात् प्रवर्त्तनायाम् । जाणिया । जाणे । जाणेज्जा । जाणसु । जाण । जाणाहि । जाणिस्सइ । जाणिसु ।

जाणिति—प्रवर्त्तनाया येत्यनुवर्त्तते । जाण्धातोर्याप्रत्यये अस् चय् जाणिति सूत्रेणेडागमे जाणिया । याप्रत्ययाभावे एदादौ जाणे जाणेज्जा इत्यादि । कुणाग्नित्वात् जाणसु ।

जिंघ् जिग्घ् आघ्राणे ।१५५। जिंघइ । जिग्घइ । जिण् जये ।१५६। जिणइ । जीव् प्राणधारणे ।१५७। जीवइ । जुज् भोजनेच्छाया योगे च ।१५८। जुजइ । जुज्भ् सम्प्रहारे ।१५९। जुज्भइ । जुहुण् दाने ।१६०। जुहुणइ । जुहुणामि । जूर् रोगे वयोहानौ च ।१६१। जूरइ । जूह् मिश्रणे ।१६२। जूहइ । निज्जूहति । जोय् दर्शने ।१६३। जोयइ । जोस् नाशने सेवायाञ्च ।१६४। जोसइ । उज्जल् झलहल् ज्वलने ।१६६। उज्जलइ । झलहलइ । झम् झुस्

अदनेच्छायाम् ।१६८। झझइ, झुझइ । झप् आच्छादने भ्रमणे च ।१६९। झपइ । झर् क्षरणे ।१७०। झरइ । झन् क्षपणायाम् ।१७१। झवइ । झिझ् क्षये ।१७२। झिझइ । झुर् अश्रुनिमोचने ।१७३। झुरइ । ढुह् निरसने ।१७४। ढुहइ । निढुहइ । डभ् दम्भने ।१७५। डभइ । डस् दशने ।१७६।

आघ्राणे । आघ्राण घ्राणेन प्रत्यक्षम् । तदनुकूलव्यापारो धात्वर्थ । गन्धोपादानमिति यावत् । प्राणधारणे । प्राणधारणानुकूलव्यापार । स च व्यापारो जीवनयोनिनामा यत्न । धात्वर्थगृहीतकर्मकत्वादकर्मक । भोजनेच्छायां योगे च । बुभुक्षा भोजनेच्छा । अत्रार्थे सकर्मकः । योग सम्बन्धस्तदनुकूलव्यापारोऽर्थ । अत्रार्थेऽकर्मक । ण्यन्तत्वे तु सकर्मक । क्षपणायाम् । क्षपणा प्रेरणा । निरसने । निरसन प्रक्षेप । दम्भने । दम्भनश्च कपटेन धार्मिकत्वादिना स्वोत्कर्षख्यापनेच्छा । दशने । दशन दंष्ट्राव्यापार । दंष्ट्रया व्यापार इति विग्रह ।

## डंसो वाऽसि ।४।१।४६॥

डसधातोरनुस्वारस्य लोपो वाऽसि परे । डसइ, डसइ । डसंति, डंसति ।

डंस इति—अनुस्वारस्य लोप इति पदद्वयमनुवर्त्तते । डसइ इत्यत्रासि परेऽनुस्वारलोपः ।

ढोय् गतौ ।१७७। ढोयइ । णाम् अर्पणे ।१७८। णामइ । णुम् णूम् आवरणे ।१८०। णुमइ । णूमइ । तच् सकोचने ।१८१। तचइ । तक्ख् तच्छ् तनूकरणे ।१८३। तक्खइ । तच्छइ । तन् विस्तारे ।१८४। तनइ । तप्प् तर्पणे ।१८५। तप्पइ । तम् म्लानौ ।१८६। तमइ । तिउट्ट् तुट्ट् त्रोटने ।१८८। तिउट्टइ । तुट्टइ । तिगिच्छ् तिगिंछ् चिकित्सायाम् ।१९०। तिगिच्छइ, तिगिंछइ । तितिक्ख् सहने ।१९१। तितिक्खइ । तिप्प् दुःखदाने तर्पणे तृप्तौ च ।१९२। तिप्पाइ, तिप्पइ । तिप्पति । तुद् व्यथने ।१९३। तुदइ । तुर् तूर् त्वरायाम् ।१९५। तुरइ । तूरइ । तुस् तूस् सन्तोषे ।१९७।

अर्पणे । अर्पण दानम् । तर्पणे तृप्तौ । तृप्त्यनुकूलस्तन्निन्यधिकरणो व्यापारस्तर्पणम् । एवञ्चात्रार्थे सकर्मक । तृप्तिश्च तृप्त्यनुकूलस्तृप्तिसमानाधिकरणो व्यापारः । तथाचात्रार्थेऽकर्मक । अतएवोभयोरुपादान सङ्गतम् । तिप्पाइ इति आणादित्वाद्दीर्घ । सन्तोषे । सन्तोषस्तृप्ति । तदनुकूलो व्यापार ।

## तुसादीनामसेसो ।३।३।३१॥

एषां धातूनामन्त्यस्य द्वित्वं वा स्यादसेसो परयोः । तुस्सए, तुसए । तुस्सइ, तुसइ । तुस्से, तुसे । तुस्सिज्जा, तुसिज्जा । तूसए, तूसइ । तूसति ।

तुसादीनामिति—षष्ठीनिर्दिष्टत्वादन्त्यस्यैव सम्भवादाहान्त्यस्येति । वेत्यनुवर्त्तते । तुस्सए इत्यत्राऽसि परे द्वित्वम् । अच्छादित्वात्सेरिकारस्यैकारः । तुस्से इत्यत्रैति प्रत्ययेऽसि द्वित्वम् । एवं तुस्सिज्जा ।

तस् उद्वेगे ।१९८। तस्सइ, तसइ । त्थण् शब्दे ।१९९। थणइ । थम्भ् अहङ्कारे स्तम्भने च ।२००। थम्भइ । थम्भति । त्थुण् स्तुतौ ।२०१। थुणइ । सथुणइ । मथुणे । थभ् स्तम्भने ।२०२। थभइ । थोभ् भ्रमणे ।२०३। थोभइ । दद् दाने ।२०४। ददइ । दम् उपशमे ।२०५। दमइ । दय् दयादानेच्छासु ।२०६। दयइ । दर् विदारणे ।२०७। दरइ । दरस् दरिस् दर्शनायाम् ।२०९। दरसइ । दरिसइ । दल्, दिय् दाने ।२११। दलयइ । दलइ । दलाइ । दियइ । दस् दशने ।२१२। दसइ । दह् धारणे ।२१३। दहइ । दहसु, दह, दहाहि । दहिस्सइ ।

उद्वेगे । उद्वेगो भयम् । तच्च भावित्वेन स्वानिष्टचिन्तनम् । तस्सइ । अत्र तुसादित्वाद् द्वित्वम् । स्तम्भने । स्तम्भनं रोधनम् । सथुणइ । सम परस्य त्थुण् धातोस्तकारलोपे सथुणइ । दर्शनायाम् । दर्शनं चाक्षुषज्ञानानुकूलव्यापारः । तदनुकूलव्यापारो दर्शना । दृश्धातोर्ण्यन्तात्युच्प्रत्ययात् । अनेन प्रेरणार्थकप्रत्ययेऽपि न तृतीयव्यापारप्रतीतिः । प्रेरणार्थाविवक्षणात् । एवमेवान्यत्राप्येतादृशस्थले बोध्यम् । दहसु । कुणादित्वात्सु ।

## आतो दह ।२।४।९६॥

आतः परस्य दह्धातोरादेर्डकारो वा स्यात् । आडहइ, आदहइ । जाणादित्वात् सद्दहाइ । सद्दहइ । कुणादित्वात् सद्दहसु, सद्दह, सद्दहाहि । दिक्ख् दीक्षायाम् ।२१४। दिक्खइ । दिप्प् दीप्तौ ।२१५। दिप्पइ । दिस् प्रेक्षणे दाने च ।२१६।

आत इति—आदेर्वेत्यनुवर्त्तते डश्च । आत किम् । दहइ । पदहइ । दीक्षायाम् । दीक्षा प्रव्रजनं महाव्रतस्वीकरणं वा । प्रेक्षणे । प्रेक्षणं दर्शनम् ।

## दिसो हश्च प्रेक्षणे ।३।२।१४॥

प्रेक्षणार्थकदिस्धातोरन्त्यस्य हकार, स्वरस्य वृद्धिश्च वा स्यात् । देहए, देहइ । दिसए, दिसइ । देहति, दिसति ।

दिस इति—षष्ठीनिर्दिष्टत्वादन्त्यस्य ह । स्वरस्य च वृद्धि । देहए अच्छादित्वादेकार । ननु एकत्र वृद्धिरपरत्र हकार इति श्रुतो नेति चेन्न एकयोग निर्दिष्टाना सह वा प्रवृत्ति सह वा निवृत्तिरिति न्यायेन एकयोगनिर्दिष्टकार्याणा सहैव प्रवृत्तिनिवृत्तिसम्भवेन पर्यायवाया असम्भवात् । वृद्धिर्वेति त्वनुवृत्त्या लभ्यते ।

## दिस प्रेक्षणे सस्सहेर्दच्छि ।३।१।३४॥

प्रेक्षणार्थकदिस्धातो स्सहिसहितस्य दच्छि इत्यादेशो वा स्यात् । दच्छिति, दच्छिन्ति । देहिस्सइ, देहिस्सति । दिसिस्सइ, दिसिस्सति । देहिहिइ, देहिहिंति । दिसिहिइ, दिसिहिंति ।

दिस इति—वा इत्यनुवर्त्तते । स्सहिभ्या सह ससहितस्य सस्सहे । अनेकवर्णत्वात्सर्वादेश । वृद्धिहकारौ भवता मा वा भवतामुभयथाऽऽदेश । पक्षे आदेशश्रवणात् ।

## डक्खुर्दिस ।२।१।२३॥

दिस्धातोर्भूतेऽर्थे डक्खुप्रत्ययो वा स्यात् । अदक्खु । दिसिंसु । दाने तु दिसइ । दिसउ । दिसे । दिसिस्सइ । दिसिहिइ । दिसिंसु ।

डक्खुरिति—भूते चेत्यनुवर्त्तते । डक्खुप्रत्यये डित्वाट्टिलोपेऽडागमे अदक्खु । दाने उदाहरणमाह दिसइ इत्यादि । भूते अदक्खु इति विशेष ।

दिह् वृद्धौ ।२१७। दिहइ । दिहिस्सइ । दिहिंसु । दुगुछ् जुगुप्सायाम् ।२१८। दुगुछइ । दुम् श्वेतकरणे ।२१९। दुमइ । दुमिंसु । दुस् दूस् वैकृत्ये अप्रीतौ च ।२२१। दुसइ । दुमइ । पउस्सइ । पउस्सति । दूसइ । दूसति । दुह् द्रोहे प्रपूरणे च ।२२२। दुहइ । दुहिस्सइ । दुहिहिसि । वेव् विलापे ।२२३।

वृद्धौ । वृद्धिरवयवोपचय । तदनुकूलव्यापारो धात्वर्थ । दुस्सइ । तुसादित्वाद्द्वित्वम् । द्रोहे । द्रोहोऽपकार । विलापे । विलाप परिदेवनम् ।

## असो देवादिभ्यस्ते ।३।२।४८॥

एभ्योऽसः परस्य तिप्रत्ययस्य दीर्घो वा स्यात् । देवती, देवए, देवति । देवएज्जा । दोज्झ् दोहने ।२२४। दोज्झइ । धम् शब्दे ।२२५। धमइ । धय पाने ।२२६। धयइ । धस् धस् पतने ।२२८। धसइ, धसइ ।

असो देवादिभ्य इति—दीर्घ वा इति पदद्वयमनुवर्त्तते । दीर्घाभावेऽच्छादित्वादेकारः । देव्, थण्, देह्, सधया, सोय् एते देवादय । आकृतिगणोऽयम् । दोहने । अन्तस्थितद्रवद्रव्यविभागानुकूलव्यापारो धात्वर्थ । विभागरूपफलाश्रयत्वात्कर्मसंज्ञाया गा दोज्झइ इत्यत्र द्वितीया ।

धुण् कम्पने ।२२९। जाणादित्वात् धुणाइ, धुणइ । धुत्तार् वञ्चने ।२३०। धुत्तारसि । धूव् सतापे ।२३१। धूवति । नद् नन्दने ।२३२। नन्दइ । नच्च् गात्रविक्षेपे ।२३३। नचइ । नड् नृत्तौ व्याकुलत्वे च ।२३४। नडइ । नद् अव्यक्ते शब्दे ।२३५। नदइ । नदति ।

धावए । अच्छादित्वादेकार । धावित्था । त्थाप्रत्यये सति इडागम । नृत्तौ । नृत्ति नाट्यम् । वाक्यर्थाभिनयो नाट्यम् । एतदेव पूर्वस्मादधिकम् ।

नम् नम्रीभावे ।२३६। नमइ । णमइ ।

## नमादेरस्स इन्मवि वा ।३।१।१॥

नमादेः परस्यास इदादेशो वा मोपरे । नमिमो, नमामो । णमिस्सइ । पच्चुण्णमइ ।

नमादेरिति—मोपरेऽनेनास इकारो विधीयते विकल्पेन । नम्, इक्ख्, अर्, भण्, भव्, वच्च्, सुण्, हर्, एते नमादय ।

## विप्पान्नमो वो न्तिपरे ।३।१।८॥

विप्पोपसर्गपूर्वकस्य नम्धातोरन्त्यस्य वकारो वा स्याद् न्तिपरेऽमि परे । विप्पणवति । निप्पणमति ।

विप्पादिति—एकवचननिर्देशात्समुदाय एव गृह्यते । तेन न प्रत्येकपूर्वकस्यान्त्यस्य वकारोऽनेन । असीत्यनुवर्त्तते । तद्विशेषण न्तिपरे इति । तेन न विपण्णवइ इति भवति न वा विप्पणवेन्तीति च ।

नमस् नमस्कारे ।२३७। नमसइ । णमंसइ । णमसिस्सइ । णमसिहिति ।

नस्स् नाशे ।२३८। नस्सइ, नासइ । निद् निन्दायाम् ।२३९। निन्दइ । निह् प्रीतौ ।२४०। निहइ । न्हव् गोपने ।२४१। न्हवइ । पउल् पाके ।२४२। पउलइ । पउलति । पक्क् मिश्रणे ।२४३। पक्कइ । पय् पाके ।२४४। पयइ । पज्ज गतौ ।२४५। पज्जइ । पज्जति । पज्जिस्स, पज्जिस्सामि । पज्जित्था । पज्जिसु । पज्जिज्जइ । पज्जिज्जति ।

नमस्कारे । नमस्कारो नाम स्वापेक्षितोत्कर्षप्रकारकज्ञापनानुकूलव्यापार । स च नमस्कर्ता । तदपेक्षितोत्कर्षप्रकारक ज्ञान नमस्कार्यनिष्ठम् । तदनुकूलव्यापार करशिर संयोगविशेष । विषयिता फलताबच्छेदकसम्बन्ध । पज्जिस्स । अच्चादिभ्य स्मात् इति सूत्रेणैकारलोपेऽनुस्वार । स्मप्रत्ययसहितमिप्रत्ययस्यादेशे पज्जामित्यपि बोध्यम् । पज्जित्था । अयादिभ्यस्था इति सूत्रेण स्थाप्रत्यये इडागम । पज्जिसु । पज्जिज्जइ इति तु स्वार्थिकेज्जप्रत्यये सति ।

## पज्जादीना पो व ।३।३।६२॥

एषा धातूनामनादिभूतामयुक्तपकारस्य वकारो वा स्यात् । जाणइ । आपज्जइ । उप्पज्जइ ।

पज्जादीनामिति—अनादिभूतामयुक्तेति स्वरूपवृत्त्या लभ्यते । असयुक्तोपादानफलमाह उप्पज्जइ इति । अनादिभूतेति किम् । पज्जइ । पज्ज्, पट्, पय्, पिव्, पील्, एते पज्जादय ।

पड् पत् पतने ।२४७। पडइ, पयइ । पढ् पठने ।२४८। पढइ । पव् पिल पतनप्लवनयो ।२५०। पवइ । पिलइ । पस्स् दर्शने ।२५१। पस्सइ । पाउण् प्राप्तौ ।२५२। पाउणइ । पाउणति । पाउणिज्जा । पाउणिंसु । पिट्ट पीडने ।२५३। पिट्टइ । पीण् तर्पणे ।२५४। पीणइ । पीस् चूर्णने ।२५५। पीसइ । पुच्छ् प्रश्ने ।२५६। पुच्छए, पुच्छइ । पुच्छ, पुच्छिस्स, पुच्छिस्सामो ।

पुच्छए—अच्चादिस्वात्तिरिकारस्यैकारः । स्सप्रत्ययसहितमिप्रत्ययस्यामादेशे पुच्छ । मेरिकारलोपेऽनुस्वारे पुच्छिस्स ।

## पुच्छ एर्वा ।२।१।२२॥

पुच्छधातोर्भूतेऽर्थे एप्रत्ययो वा स्यात् । पुच्छे पुच्छिसु । पूज् पूजायाम् ।२५७। पूयइ, पूजइ । पूअयइ । पेयाल् समालोचने ।२५८। पेयालइ ।

पुच्छ इति—भूते इत्यनुवर्त्तते । एप्रत्यये पुच्छे । पक्षे इसु । पूयइ । जकारस्य यकारो वा । पूअयइ । उचादित्वादयप्रत्ययः । जकारस्य यकारे लोपः ।

फस् कलङ्कारोपणे ।२५९। फसइ । फण् गतौ ।२६०। फणइ । फिड्, फुट्ट्, फुड् स्फुटने ।२६३। फिडइ । फुट्टइ । फुडइ । फुडिही । फुम् फूत्कारे ।२६४। फुमइ । फुस् स्पर्शे, शुद्धौ च ।२६५। फुसइ । फेड् गतौ ।२६६। फेडइ । बध् बन्धने ।२६७। बधइ । बध, बधाहि । बधे । बधेज्जा ।

कलङ्कारोपणे । आरोपणं नाम बाधकालिकेच्छाजन्यज्ञानम् । यथा पर्वतो वह्निमानिति निश्चयेऽपि पर्वते वह्न्यभावज्ञानं जायतामिति मतिजन्यः पर्वतो वह्न्यभाववानिति ज्ञानम् । ननु तदभाववत्ताबुद्धौ तद्वत्तानिश्चयस्य विरोधित्वेन कथं वह्निमानिति निश्चये सति वह्न्यभाववानिति बुद्धिरिति चेन्न तदभाववत्ताबुध्धीच्छाविरहविशिष्टतद्वत्तानिश्चयस्यैव तदभाववत्ताबुद्धिनिरोधित्वात् । अत्रेच्छाया सत्त्वेन तद्विरहविशिष्टतद्वत्तानिश्चयस्यैवाभावेन न विरोधित्वशङ्काकलङ्ककणिकापि । तथा च कलङ्काभावेऽपि कलङ्कज्ञानकरणं कलङ्कारोपः । स्फुटने । स्फुटनं नाम अवयवविभागानुकूलो व्यापारः । फुडिही । फुडिहि इ इत्यत्र दीर्घे फुडिही । प्रकृतिभावे फुडिहिइ । बध । अतः परस्य हेर्लोपः । तदभावे दीर्घः ।

## बधादिभ्यो हेरेद् ।४।२।४४॥

एभ्यः परस्य हेरेडागमः स्यात् । बधेहिइ । बधिस्सइ ।

बधादिभ्य इति—इटोपवादः । बध्धातोर्हिप्रत्यये तस्यैडागमे बधेहिइ । स्सप्रत्यये तु नैट् तेनेडागमे बधिस्सइ । बध्, प+आर्, आ+उस्, कर्, गाह्, ग्गह्, च्छोड्, उद्+ट्ठा, उद्+दव्, वि+ध्धस्, वि+भत्थ्, आ+भोग्, णि+मत्, स+माण्, णि+रुभ्, वर्, सज्ज्, अभि+सिंच् एते बधादयः ।

## बध ई ।२।१।२४॥

बधधातोर्भूतेऽर्थे ईप्रत्ययो वा स्यात् । बधी, बधिंसु । बाध् बाह् प्रतिघाते ।२६९। बाधइ । बाहइ । बीह भये ।२७०।

बध इति—भूते चेत्यनुवर्त्तते । बध्धातोर्भूते ईप्रत्ययः । पक्ष इंसु । भये । भयं नाम भावित्वेन स्वानिष्टचिन्तनम् । तथा च सप्पेहिंतो बीहइ इत्यादौ सर्पहेतुकस्य स्वानिष्टस्य भावित्वेन चिन्तनं यत् तदनुकूलो व्यापारः कर्तृवृत्तिरित्यर्थः । तस्माद्विधातोरप्येवमेवार्थः ।

## भायभीयौ तौ ।२।३।१०३॥

बीह्धातोर्भायभीयावादेशौ पर्यायेण वा स्लन्तौ परे। भायए, भायइ। भीयए, भीयइ। बीहए, बीहइ। बुज्झ् अवगमने ।२७१। बुज्झइ। बुड्ड निमज्जने ।२७२। बुड्डइ। बूह् ग्रहणे ।२७३। बूहइ। भक्ख् अदने ।२७४। भक्खइ। भन् सेवायाम् ।२७५। भनइ। भयइ। भज्ज् भर्जने ।२७६। भज्जइ। भण् कथने ।२७७। भणइ।

भायेति—बीह इत्यनुवर्तते। यकारस्य स्थाने आदेशद्वयासम्भवादाह पर्यायेणेति। आदेशयोरकार उच्चारणार्थः। अन्यत्रापि बीहः तदादिष्टभायभीययोश्च पाठादुभयप्रकारो वा। अनेकवर्णत्वात् सर्वादेशः। स्लन्तावित्येवोक्त्वा किं विभक्त्येति चेन्न आज्ञाभविष्यद्वर्तमानेषु सर्वत्र साधुत्विति तस्यावश्यकत्वात्। तथा च पूर्वसादेश। तयो विकरणप्रत्यय। सामर्थ्यात्। एतेन पूर्वमपि निरस्यामावादादेशो न स्यादित्यपास्तम्। अवगमने। ज्ञानानुकूलव्यापारोऽवगमनम्। अदने। अदनं भक्षणम्। भर्जने। विना जलं भ्राष्ट्राग्निसंयोगानुकूलव्यापारो भर्जनम्। जलसम्बन्धे सति पचइ इत्येव प्रयोगो भवतीति तन्निवारणाय जलं विनेति भ्राष्ट्रेत्युपलक्षणं भर्जनाधारपात्रमात्रस्य।

भम् भ्रमणे ।२७८। भमइ। भमिस्सइ। भमिही, भमिहिइ। भमिहिंति। भव् सत्तायाम् ।२७९। भवइ। भव, भविस्स, भविस्सामि। भविस्सामो। भविही। अत्र सवर्णदीर्घः। पक्षे प्रकृतिभावे भविहिइ। स्सामिसस्य मे स्मादेशे भव। मेरेकारलोपे भविस्स। लोपाभावे भविस्सामि।

## भवईहुम ।२।१।२५॥

भव्धातोर्भूते ई हु हुम प्रत्यया वा स्युः।

भव इति—ईश्च हुश्च हुम् चेति द्वन्द्वे कृते ईहुम। भूते चेत्यनुवर्तते।

## इम्योर्भव ।४।१।६०॥

भव्धातोरडागमो न स्यादिमूईप्रत्यययोः परयोः।

इम्योरिति—इमीशब्दस्य द्विवचने रूपम्। नेति अडिति चानुवर्तते।

## इम्योर्भुवः ।२।४।४२॥

भव्धातोरत उकारः स्यादिम् ई प्रत्यययोः परयोः। भुवी। भुविं। अभू। अभविंसु।

इम्योरिति—भन्धातोर्भूतेऽर्थे ईम्प्रत्यये प्राप्तस्याडागमस्य निषेधे भकारोत्तराकारस्योकारे भुवी । इमि प्रत्यये मकारस्यानुस्वारे इम्प्रत्ययेऽडागमे टेरवस्य लोपे अभू ।

भम् ध्वशब्दे ।२८०। भमइ । भिंदु विदारणे ।२८१। भिंदइ । भिंदे ।

## आतो भिंदोऽब्भ एति ।३।१।३७॥

आतः परस्य भिंदुधातोर्ब्भ इत्यादेशो वा स्यादेति प्रत्यये विवक्षिते सति ।
अब्भे, आभिंदे ।

आत इति—वेत्यनुवर्त्तते । एति प्रत्यये विवक्षितेऽनेनादेशविधानात्पूर्वमादेशस्तत प्रत्यय । अतएवासो न व्यवधानशङ्का । आदेशे चाकार उच्चारणार्थ । आपूर्वकभिंदुधातोरनेन ब्भादेशे एति प्रत्यये मध्येऽसि सयुक्ते ह्रस्वे वृद्धि ।

भिक्ख् भिक्षायाम् ।२८२। भिक्खइ । भिलिंग्, भिलिंज् अभ्यङ्गने ।२८४। भिलिंगइ । भिलिंजइ । भिस्, भास् दीप्तौ ।२८६। भिसइ । भासइ । भुज् भक्षणे भोगे च ।२८७। भुजए । भुजइ । भुजसु । भुज, भुजाहि । भुजे । भुजेज्जा ।

भिक्षायाम् । विनयादिपूर्वकपरस्वत्वनिवृत्तिपूर्वकस्वस्वत्वोत्पत्त्यनुकूलव्यापार । एष एव याचनापदेनोच्यते । अभ्यङ्गने । तैलादिप्रतियोगिकसयोगानुकूलव्यापारविशेषोऽभ्यङ्गनम् । विदारण भेदनम् । भोग इति । भोगश्च सुखदु खसाक्षात्कार । भुजए । अच्छादित्वादेकार । कुणादित्वात्स्वादेशे भुजसु । ह्यादेशे लोपे भुज ।

## भुजः ख ।२।१।६॥

अस्मात्खः स्याद्भविष्यति त्यादौ ।

भुज इति—भविष्यति त्यादावित्यनुवर्त्तते । सामान्यप्रत्ययापवाद ।

## भुजः खे ।३।२।३॥

भुजः स्वरस्य वृद्धिः स्यात्खे परे । भोक्खइ । भोक्खामि । भूस् अलङ्करणे ।२८८। भूसयइ । भूसइ । मेर् विस्तारे ।२८९। मेरइ । मथ् निलोडने ।२९०। मथइ । मक्ख् म्रक्षणे ।२९१। मक्खइ । मग्ग् अन्वेषणे ।२९२। मग्गइ ।

भुज इति—वृद्धिरित्यनुवर्तते । तद्बलात्स्वरस्येत्युपतिष्ठते । भोक्खइ ।

भुजूधातोस्तिप्रत्यये मध्ये स्सादि प्रभाध्य म्प्रत्यये स्मरस्य वृद्धौ सयुक्तेऽनुस्वारलोपे भोक्खामि । सयुक्त ह्रस्वे तु भुक्खामि ।

## मग्गादेरसो ह्रस्य ।३।२।५६॥

मग्गादिधातो' परम्मादमः परस्य आजाया ह्रप्रत्ययस्य दीर्घो वा स्यात् । मग्गहा, मग्गह । मज्ज् शुद्धौ ।२९३। मज्जइ । मथ् मन्थने ।२९४। मथइ । मद् प्रमादे ।२९५। मदइ । मद् मर्दने ।२९६। मद्दइ । मर् प्राणत्यागे ।२९७। मरए । मरइ । मरिस्मइ ।

मग्गादेरिति—आजायामित्यनुवर्त्तते । वर्तमानादौ ह्रस्य दीर्घवारणायाज्ञाग्रहणम् । वा दीर्घ इति चानुवर्तते । मग्ग्धातोर्ह्रप्रत्ययेऽनेन दीर्घे मग्गहा । अत एव "ज मग्गहा वाहिरिय विसोहिं" इत्युक्त० ।१२।३८॥ मन्थने । मन्था नाम उत्थानानुकूलव्यापार । यथा सुह समुद मद्देइ देवदत्तो इत्यादौ सुधोत्था नानुकूलव्यापार समुद्रस्थस्तदनुकूलश्च व्यापारो देवदत्तस्थ । अतएव चाय द्विकर्मक । एवकर्मकत्वे सुधानानुकूलव्यापारोऽर्थ । एवमन्यत्रापि द्विकर्मकैक-कर्मकत्व समालोचनीयम् । अच्छादिरवान्मरण ।

## मरादेरीय ।२।१।२६॥

एभ्यो धातुभ्य ईयः प्रत्ययो वा स्याद् भूते ।

मरादेरिति—भूते वेत्यनुवर्तते । आदिपदेन चसादेर्ग्रहणम् ।

## मरोऽहीश्च ।२।१।२७॥

मरधातोरहीप्रत्ययो वा भूते । मरही, मरीअ । मरिंसु ।

मर इति—भूते वेत्यनुवर्त्तते । मर्धातोरहीप्रत्यये मरही । ईयप्रत्यये मरीअ । मरह् मरिस् तितिक्षायाम् ।२९९। मरहइ । मरिसइ । मल् मर्दने ।३००। मलइ । मह् इच्छायाम् ।३०१। महइ । माद् प्रमादे ।३०२। मायइ । प्रवर्त्तनाया मायए, माए । मिज्ज् मरणे ।३०३। मिज्जइ । मिल् संगमे ।३०४।

तितिक्षायाम् । क्षमा तितिक्षा । वर्त्तमानत्वभ्रममपाकर्तुमाह प्रवर्त्तनाया मिति । प्रकृतिभावान्न वृद्धि । वृद्धौ तु माए । दकारस्य यकारे लोपः ।

## मिलो ये ।३।२।४०॥

मिलो दीर्घोऽन्तादेश स्याद्यकारे परे । मिलायइ, मिलइ । मिलायति,

मिलंति । मिल्ल् त्यागे ।२०५। मिल्लइ । मिस् स्पर्द्धायाम् ।२०६। मिसइ । मील सकोचे ।२०७। मीलइ । मुच् मोचने ।२०८। मुचइ । मुड् मुण्डने ।२०९। मुंडइ । मुच्छ् मूर्च्छायाम् ।२१०। मुच्छइ ।

मिल इति—दीर्घे इत्यनुवर्त्तते । उचादित्वान्मिल्धातोरयप्रत्यये मिल्यइ इति स्थितौ मिल्शब्दाकारस्य दीर्घ मिलायइ । विकरणविशिष्टस्याकारान्तत्वात् । स्पर्द्धा । सा च सङ्घर्ष । स च पराभिभवेच्छा । अतएव अकर्मक । कर्मणो धात्वर्थेन सङ्ग्रहात् । अन्ये त्वभिभवेच्छैव धात्वर्थ । अतएव स्पर्द्धार्थस्य सकर्मकत्व दृश्यते । मुण्डने । मुण्डनञ्च खण्डनमिति । मूर्च्छायाम् । मूर्च्छा मोह । समुच्छ्रायश्च । वृद्धि ।

## समो मुच्छारंभूरप्सु ।३।४।६०॥

समो मस्य लोपो वा स्यान्मुच्छ्धातौ परे आपूर्वकयो रभ्रभोश्च । समुच्छइ । समुच्छति । सम्मुच्छइ । सम्मुच्छति । मुज्झ् मोहे ।२११। मुज्झइ । मुण् ज्ञाने ।२१२। मुणइ । मुस् स्पर्शे ।२१३। मुसइ । मूर् भञ्जने ।२१४। मूरइ । मेड् उन्मादे ।२१५। मेडइ । मेल् सङ्गमे ।२१६। मेलइ । मोद् हर्षे ।२१७। मोदइ । यच् गतौ ।२१८। यचइ । यचति । यत् सकोचे ।२१९। यतइ । यतति । रग् गतौ ।२२०। रगइ । रच् पृथक्त्वे ।२२१। रचइ । रध् पाके ।२२२। रधइ । रभ् रभ् आरम्भे ।२२४। रभइ । आरभइ ।

समो इति—लोपो वेत्यनुवर्त्तते । रभ् च रभ् च रभ्रभौ । आपूर्वकौ रभ्रभौ आरभ्रभौ । मुच्छश्चारभ्रभौ च मुच्छारभ्रभस्तेषु मुच्छारभ्रप्सु । द्वन्द्वगर्भमध्यमपदलोपिकर्मधारयसमासोत्तर द्वन्द्व । अतएव रभ्रभ्या सह आकारस्य सम्बन्धेऽपि न मुच्छा । अतएवाह आपूर्वकयोरिति । सम्+मुच्छइ इत्यवस्थाया मकारलोप । वा धातूपसर्गयो सम्बन्धे सति सर्वत्र पूर्वमेव मकारलोपो ज्यायान् । धातूपसर्गकार्ययोरन्तरङ्गत्वात् । स्पर्शे । नोदनसयोगानुकूलव्यापारः स्पर्श । नोदनो नाम शब्दाजनक सयोग । अभिघातसयोगानुकूलव्यापारस्तु ताडनम् । अभिघात शब्दजनक सयोग । एतद्भेदात्सयोगो द्विविध । सयोग एव किमिति चेच्छृणु । अप्राप्तयोस्तु या प्राप्ति सैव सयोग ईरित इति मुक्तावलीकारिकयाऽप्राप्तयो प्राप्तेरेव सयोगत्वावधारणात् । आरम्भे । आरम्भ आद्यकृति । तदनुकूलव्यापारो धात्वर्थ । स चेच्छा । आद्यकृतित्वञ्च

कृतिविशिष्टान्यकृतित्वम् । वैशिष्ट्यञ्च स्वसमवायिसमवेतत्वस्वनक्षणध्वसाधिकरणक्षणवृत्तित्वोभयसम्बन्धेन ।

## न्तेरारभ ।३।१।६९॥

आपूर्वकरभ्धातोः परस्मादसः परस्य न्तिप्रत्ययस्यैसादेशो वा स्यात् । आरभे, आरभति । सारभइ, समारभइ । सारभे, समारभे । सारभति । समारभति । रक्ख् रक्षायाम् ।३२५। रक्खइ ।

न्तेरारभ इति—अस एसिति वेति चानुवर्त्तते । सित्वात्सर्वादेश । आपूर्वकरभ्धातोर्न्तिप्रत्यये मध्येऽसि न्तेरेसादेशे वृद्धौ आरभे । सारभइ इत्यत्र मकारलोपे दीर्घ । पक्षे समारभइ ।

## रक्खहणुहप्पु सम सा· ।२।४।१०३॥

एषु परेषु सम· सादेशो वा स्यात् । सारक्खइ । सरक्खइ ।

रक्खहणिति—अनुवृत्त्या विकल्पलाभ । अनेकवर्णत्वात्सर्वादेश । सम्पूर्वकरक्ख्धातोस्तिप्रत्यये सम सादेशे सारक्खइ ।

रज्ज् रागे । रज्जइ ।३२६।

## एज्जपरकेऽसि रज्जो वा ।३।४।५८॥

रज्ज्धातोरन्त्यस्य लोपो वा स्यादेज्जपरकेऽसि परे । रएज्ज । रइज्ज । रज्जेज्ज । रज्जेज्जा । रज्जिज्जा । रज्जे ।

एज्जेति—लोप इत्यनुवर्त्तते । एज्ज परो यस्मात्सः एज्जपरकस्तस्मिन्—षष्ठी निर्देशादन्त्यस्य लोप । रज्ज्+एज्ज इति स्थिते मध्येऽसि अन्त्यजकारस्यानेन लोपेऽवशिष्टजकारस्य यकारे लोपे वृद्धौ प्रकृतिभावे रएज्ज । सयुक्ते ह्रस्वे रइज्ज । लोपाभावे रज्जेज्ज ।

रञ्ज् पाके ।३२७। रञ्झइ । रड् परिभाषणे ।३२८। रडइ । रण् अव्यक्ते शब्दे ।३२९। रणइ । रम् क्रीडायाम् ।३३०। रमइ। रव् शब्दे ।३३१। रवइ। राज् रिज् दीप्तौ ।३३३। राजइ । रिजइ । राजति । रिजति । रिच् पृथक्करणे ।३३४। रिचइ । रिचति । रिध् वृद्धौ ।३३५। रिधइ । रिधति । रिधिंसु । रिय् रीय् गतौ ।३३७। रियइ । रीयइ । रियति । रीयति । रिइत्था । रीइत्था । रिइसु । रीइसु । रुद् गुञ्जितध्वनौ ।३३८। रुटइ । रुद् शब्दे ।३३९। रुदइ । रुध् रुभ्

आवरणे ।३४१। रुम्भइ । रुम्भिस्सइ । रुम्भिहिइ । रुज्झइ । रुज्झति । रुमइ । रुभिस्सइ । रुमेहिइ । रुभिहिइ । रुब्भइ । रुब्भति । रुह् रोपे ।३४२। रुहइ । रुहति । रुहिंसु । रुद् अश्रुविमोचने ।३४३।

पृथक्करणे । पार्थक्य विभागस्तदनुकूलव्यापारो धात्वर्थः । वृद्धिः अवयवोपचयः । रिद्दत्था । अयादित्वात् त्थाप्रत्यये इडागम । रुज्झेस्सइ । वधादिभ्य एडिति सूत्रेणैडागमः । पक्षे सयुक्ते ह्रस्वे च रुझिस्सइ । परसवर्णस्य वैकल्पिकत्वेनानुस्वारघटितप्रयोगमुदीर्य परसवर्णघटितप्रयोगमाह रुज्झइ इति । अश्रुविमोचने । नेत्रजलत्यागमात्र न रोदनम् । तथा सति मुग्धकपायनिस्सारणाधीननेत्रजलत्यागेऽपि रोवइ इति प्रयोग स्यात् । न चेष्टापत्ति । अनुभवविरोधात् । किन्तु नेत्रजलवृत्तिरस्त्वध्वसानुकूलो व्यापारविशेष । व्यापारे विशेषत्वञ्चेष्टसयोगवियोगजन्यहर्षशोकस्वरूपत्वम् ।

## रुदोऽसि ।३।२।१३॥

अस्य स्वरस्य वृद्धिर्वा स्यादसि परे ।

रुद इति—वृद्धिरित्यनुवर्त्तते ।

## रुदो व ।३।१।७॥

रुद्धातोर्दकारस्य वकारो वाऽसि परे । रोवइ, रुवइ । रोयइ, रुयइ । रोदइ रुदइ । रुस् रूस् रोपे ।३४५। रुसइ । रुमए, रूमइ । रेह् दीप्तौ ।३४६। रेहइ । लघ् लङ्घने ।३४७। लघइ । लछ् लाञ्छने ।३४८। लछइ । लक्ख् अङ्कने । लक्खइ । लग्ग् सगे ।३४९। लग्गइ । लभ् लह् प्राप्तौ ।३५१। लभइ । लहइ ।

रुदो व इति—असि वेत्यनुवर्त्तते । षष्ठीनिर्दिष्टत्वादन्त्यस्य दकारस्यैव स्यादत आह दकारस्येति । रोवइ । रुद्धातोस्तिप्रत्यये मध्येऽसिप्रत्यये रुद इत्यनेन स्वरस्य वृद्धावनेन दकारस्य वकारे रोवइ । वृद्ध्यभावे वकारे रुवइ । वकाराभावे वृद्धौ रोयइ । वृद्ध्यभावे रुयइ । वकारयकाराभावेऽप्येव रूपद्वयम् । रूमए । अच्छादित्वात्तेरेकार ।

## लभूलहो भ' ।२।१।१०॥

आभ्यां धातुभ्यां भविष्यति भप्रत्ययो वा स्यात्स्यादौ परे । लब्भइ । लब्भति ।

लब्भसि । लब्भइ । लब्भामि । लब्भामो । लभिस्सइ । लहिस्सइ । लभिस्ससि । लहिस्ससि । लभिहिइ । लहिहिइ ।

लभ्लह इति—समाहारद्वन्द्वे पञ्चम्येकवचनम् । भविष्यति त्यादिषु इति पदद्वयमनुवर्तते । लभ्धातोर्लह्धातोर्वाति प्रत्यये मध्ये भप्रत्यये परसवर्णेन भङ-योर्बकारे लब्भइ इत्यादि समानमेव रूपम् । भप्रत्ययस्य स्सान्गिणे प्रागभावान्ना-स्येट् । अकारस्तु नोच्चारणार्थ ।

## लभ्लह' सस्सहेर्हस्य त्थः ।३।१।६०॥

लभ्लह्धातुभ्या परस्य स्सहिमहितस्य हस्य त्थादेशो वा स्यात् । लभित्थ । लहित्थ । लभिस्सामि । लहिस्सामि । लभिहामि । लहिहामि । लभिस्सामो । लहिस्सामो । लभिहामो । लहिहामो ।

लभ् लह इति—चेत्यनुवृत्ति । स्सहिभ्या सह सस्सहिस्तस्य सस्सहे । स्सहि-प्रत्ययसहितस्य हप्रत्ययस्य त्थादेशे इडागमे लभित्थ । मादौ हेर इत्यनेन हरिका रस्याकारे दीर्घे लभिहामि । एवमन्यऽपि । लभ्लह इत्यत्र समाहारद्वन्द्व । अत एवैकवचनम् ।

## लभ्लह इण् वा ।२।१।१८॥

लभलह्धातुभ्या भूतेऽर्थे इणप्रत्ययो वा स्यात् । अलाभि । अलाहि । अल-भिंसु । अलहिंसु ।

लभ्लह इति—समाहारद्वन्द्वे पञ्चम्येकवचनम । भूते इति लभ्यते । लभ् धातोर्भूतेऽथ इण्प्रत्ययेऽडागमे णित्युपधाया वृद्धौ अलाभि । पक्षे इसु ।

## आदुपोवेभ्यो लभ ।४।२।१५॥

एभ्य' परस्य लभ्धातोर्ममागमो वा स्यात् । आलभइ, आलभइ । उवलभइ, उवलभइ । लल् क्रीडायाम् ।३५३। ललइ । ललिंसु । लव् व्यक्तायां वाचि ।३५४। लवइ । लस् इच्छाक्रीडयो' ।३५५। लसइ । लाल् पालने ।३५६। लालइ । लिंग् लिस् लिस्स् आलिङ्गने ।३५९। आलिंगइ । लिसइ । लिस्सइ । लिंच् निस्सारणे ।३६०। लिंचइ । लिह् लेखने ।३६१। लिहइ । लुच् लुञ्चने ।३६२। लुचइ । लुप् नाशने ।३६३। लुपइ । लुक्क् दर्शने ।३६४। लुकइ । लुट् लुण्टने ।३६५। लुट्टइ । लुण् छेदने ।३६६। लुणइ ।

आदुपो इति—ममित्यनुवर्त्तते । आद्य उपश्च उवश्च आदुपोवास्तेभ्य आदुपोवेभ्य । आगमे अकार उच्चारणार्थ । अन्त्यमकारस्त्वित्संज्ञकत्वेन मित्त्वेन स्वराणामन्त्यस्वरात्परो मिदिति सूत्र प्रवर्त्तते । अतएव च ल्कारोत्तरमकारोत्तरीभूय प्रवर्त्ततेऽत्रागम । लेखने । लेखनमक्षरविन्यास । निस्सारणे । अन्तर्गतस्य बाह्यदेशसंयोगानुकूलव्यापारानुकूलव्यापारो निस्सारणम् । लुञ्चने । लुञ्चनमपनयनम् । लुण्टने । बलात् स्वस्वोत्पत्त्यनुकूलो व्यापार । स्तेयार्थे तु बलात्कारपूर्वकत्वन्न निविष्टमिति ततो विशेष ।

## लुण एज्जे यः ।३।१।३८॥

लुण्धातोरन्त्यस्य यकारो वा स्यादेज्जे परे लुएज्जा, लुणेज्जा । लुभ् गार्ध्ये विमोहने च ।३६७। लुब्भइ, लुभइ । लूस् स्तेयभञ्जनदशनखण्डनेषु ।३६८। लूसइ । लोट्ट् परिवर्त्तने ।३६९। लोट्टइ । लोढ् निष्पीडने ।३६९। लोढइ । 

ल्लिय् लीय् सङ्गे ।३७३। लियइ । लीयइ ।

लुण इति—वेत्यनुवर्त्तते । षष्ठीनिर्दिष्टत्वादन्त्यस्येति लब्धम् । लुण्धातो एज्जप्रत्यये मध्येऽसि प्रत्यये वृद्धौ णकारस्यानेन यकारे लोपे लुएज्जा । गार्ध्ये । गार्ध्यमभिकाङ्क्षा । विमोहने । विमोहनमाकुलीकरणम् । लुब्भइ । लुभ्धातो स्तिप्रत्यये मध्येऽसि तुमादित्वाद्भकारस्य द्वित्वे पूर्वस्य परसवर्णेन बकारे लुब्भइ । दशनेति । दशन दंष्ट्राव्यापार ।

## उपसर्गाल्लिन्त्तौ ।२।३।११८॥

उपसर्गात्परस्य लीयो लि इत्यादेशो वा न्तौ परे । पलिंति, पलीयति । विलिंति, विलीयति । ह्लाद् हर्षे ।३७२। ह्लायइ ।

उपसर्गादिति—लीयो वा इत्यनुवर्त्तते । विकरणसहितस्य धातोर्लि इत्यादेशेन नास श्रवणम् । अनेकवर्णत्वात्सर्वादेश ।

वफ् इच्छायाम् ।३७४। वफइ । वच्च् व्यक्तायां वाचि गतौ च ।३७५। वचइ । वचति । वचिमो, वचामो । वचतु । वचसु, वच, वचाहि । वचह ।

वचिमो । नमादित्वादिकारो वा । वचसु । झुणादित्वात्से सु । पक्षे ह्यादेशे लोप ।

## अगतो वच्च खछौ ।२।१।७॥

गतिभिन्नेऽर्थे वच्चधातो पर्यायेण खछौ प्रत्ययौ स्तो भविष्यति त्यादौ । वक्खइ । वक्खति ।

अगताविति—न गतिरगतिस्तस्मिन्नगतौ गतिभिन्नेऽर्थे इत्यर्थः। तेन न गतौ वक्खइ इति। भविष्यति स्यादावित्यनुवर्तते। वच्धात्वोरिति प्रत्यये मध्ये स्सादौ प्रवाप्य यप्रत्यये व्यञ्जनप्रयगयोगे पूर्वचकारलोपेऽवशिष्टचकारस्य परसवर्णे ककारे वक्खइ।

## वक्खवोच्छदाहधेच्छेभ्यो मे ।३।४।६४॥

एभ्यः परस्य मेरन्त्यस्य लोपो वा स्यात्। वक्ख, वक्खामि। वक्खामो।

वक्खेति—लोपो वा इत्यस्य चानुवृत्तिः। वक्ख। मिप्रत्यये मध्ये स्सप्रत्यये इकारलोपेऽनुस्वारः। ततश्च मिपरत्वाभावाच्च दीर्घः। न च एकदेशविकृतमनन्यवत् इति न्यायेन मिपरत्वमक्षतमेवेति वाच्यम्। अर्धाधिकविकारे तन्न्यायाप्रवृत्तेः।

## वच ओऽच्छेऽतः ।३।१।४१॥

वच्धातोरत ओकारः स्याच्छे परे। वुच्छइ, वोच्छइ। वुच्छ, वोच्छ। वुच्छामि, वोच्छामि। वोच्छामो।

वच इति—च्छप्रत्यये कृते सति अनेनौकारादेशे संयुक्ते ह्रस्वे वुच्छइ। मेरिकारलोपेऽनुस्वारे वुच्छं।

## वोच्छश्च ।३।१।८॥

वोच्छः स्सहिप्रत्ययौ वा स्तस्त्यादौ। वोच्छिस्सइ। वोच्छिहिइ। गतौ तु वचिस्सइ। वचिहिइ। शेषं समानम्।

वोच्छ इति—स्सहौ त्यादिष्विति सम्बध्यते। भविष्यति च्छप्रत्ययान्तादनेन स्सहौ भवतः। द्वौ ब्राह्मणौ इतिवत्तु वैयर्थ्यम्। एतदभावे तु रूपमुक्तम्। गतौ त्यादेरभावेन स्सहिप्रत्ययावेव भवतः अत आह गतावित्यादि। भविष्यत्येव रूपभेदो नान्यत्रेति बोधयति शेषं समानमित्यनेन।

वम् उद्गिरणे ।३७६। वमइ। वमति। वमिंसु। वल् सचरणे ।३७७। वलइ। वप् बीजसन्ताने छेदने च ।३७८। ववइ। वस् निवासे ।३७९। वसइ। वसति। वसीय वसिंसु।

बीजसन्ताने—बीजसन्तानं क्षेत्रे विकिरणं गर्भाधानञ्च। अतएव बीजं ववइ। अथ धातुश्छेदनेऽपि। अतएव केशं ववइ इति भवति।

वास् वर्षणे ।३८०। वासइ । निज्, वीज् व्यजने ।३८२। निंजइ । वीजइ । विंध् । निज्झ् । णिह् । ताडने, वेधने च ।३८५। निंघइ । विज्झइ । विहइ । विगिंच् विच् पृथक्करणे ।३८७। विगिंचइ । विचइ । विगिञ्छ् संशये ।३८८। विगिञ्छइ । विज् भये ।३८९। उव्विजइ । विज्ज् सत्तायाम् ।३९०। विज्जइ । विद् ज्ञाने ।३९१। विदइ । विरल्ल् विस्तारे ।३९२। विरल्लइ । विस् प्रवेशने ।३९३। विसइ । विसट्ट् विकाशचूर्णनयोः ।३९४। विसट्टइ । विसूर् दैन्ये ।३९५। विसूरइ । वीड् लज्जायाम् ।३९६। वीडइ । वूह् उद्यमने ।३९७। वूहइ । वेव्, वोल् कम्पने ।३९९। वेवइ । वोलइ । वोलट्ट्, वोसट्ट् जलोद्रेके ।४०१। वोलट्टइ । वोसट्टइ ।

वर्षणे । अयञ्च धातुरकर्मक । विकाशे । अवयवविश्लेषानुकूलव्यापारविशेषो विकाश ।

व्वय् गतौ ।४०२।

## व्वयो वर्त्तमाने वसो वा ।३।१।५॥

व्वयधातोर्वसादेशो वा वर्त्तमाने । वइ, वयइ । वन्ति, वयति । वय, वयाहि । वयह । वए । वएज्जा । वइस्सइ । वइहिति । वइसु ।

व्वय इति—सित्त्वात्सर्वादेश । आदेशेऽकार उच्चारणार्थ । व्वय्धातोस्तिप्रत्यये वसादेशेऽसि वइ । वर्त्तमाने विवक्षित एवास्य विधानेनास पूर्वमेव प्रवृत्त्या न व्यवधानशङ्का ।

## उपसर्गाद् व्वयो वहुलम् ।४।१।२४॥

उपसर्गात्परस्य व्वयधातोरादेर्लोपो वहुलम् । अणुवयइ । परिवयइ, परिव्वयइ ।

उपसर्गादिति—आदेरिति लोप इति चानुवर्त्तते । संयुक्तस्यापूर्वत्वाभावादप्राप्तौ वचनम् । बहुलग्रहणात्कचिन्नित्यम् । क्वचिन्न वा । प्रथम उदाहरणे नित्यम् । द्वितीये वा भवति ।

स् अवसाने ।४०३। ववसइ ।*सक् शङ्कायाम् ।४०४। सकइ । समर् स्मरणे ।४०५। समरइ । सस् कथनहिंसनयोः ।४०६। ससइ । सड् दौर्गन्ध्ये ।४०७। सडइ । सद् गमनविशरणयोः ।४०८। सदइ । सद् आस्वादने ।४०९। सदए, सदइ । सप्प् गतौ ।४१०। सप्पइ । सम्म् उपशमे ।४११। सम्मइ । सम्मति ।

सय् शयनाम्नादनयो' ।४१२। मयइ। मर् स्मरणे गतौ च ।४१३। सरइ। मलह् श्लाघायाम् ।४१४। मलहइ। सल्ल् गतौ ।४१५। सल्लइ। सह् सहने ।४१६। सहइ। मिंच् सेचने ।४१७। मिंचइ। मिक्ख् शिक्षायाम् ।४१८। मिक्खइ। मिज्झ् निष्पत्तौ ।४१९। मिज्झइ। मिण् सेनायाम् ।४२०। मिणइ। सिणति।

सहए। अच्छान्तित्वात्तेरेकार । सप्प गतौ। उरसा उत्तरदेशसयोगानुकूल-व्यापारविशेष मर्पणम्। विशेषरत्नश्चोरसादिकरणकत्वमेव। उपशमे। उपशम शान्ति । शिक्षायाम्। शिक्षा च ज्ञानानुकूलव्यापार ।

## सिण ओर्मो वा ।३।१।४६॥

सिणः परस्यास ओकारो वा स्यान्मौ परे। मिणोमि, मिणामि। मिणामो। समुस्सिणइ। समुस्सिणोमि। समुस्सिणामि। सिर् विसर्गे ।४२१। सिरइ। मिरे। मिरेज्जा।

मिण इति—अनुवृत्त्या अस इति लभ्यते। मिण् + अमीति स्थितेऽस ओकारे सिणोमि। पक्षे दीर्घ । सामान्यतो विधानात्सोपसर्गेऽपि भवतीति दर्शयति समुस्सिणोमि। तकारस्य परसवर्णेन सकार ।

## एज्जेतयो सिर सा विउभ्याम् ।३।१।४०॥

विउभ्या परस्य मिरधातो' समादेश, स्यादेज्जइतप्रत्यययो, परयो' । विउ-सिरे। विउसेज्ज। सिलीम् आलिङ्गने ।४२२। सिलीमइ। सिव्व् तन्तुसन्ताने ।४२३। सिव्वइ, सीवइ। सिव्वति, मीवति। सिव्विसइ, सीविस्सइ। सिव्वि-हिति, सीविहिति। सिय् सीय् विशरणगत्यवसादनेषु ।४२५। सियइ। सियति। सीयइ। सीयति।

एज्जेतयोरिति—एज्जश्चेतश्चैतौ तयोरेज्जेतयोरित्यर्थ । इतप्रत्ययस्य तु विउसिय इत्युदाहरणम्। आदशो व्यञ्जनान्त । अकारस्तूच्चारणार्थ । सित्त्वात् सर्वादेश । विउपूर्वकसिरधातोरेज्जप्रत्यये मध्येऽसि प्रत्यये वृद्धावनेन धातो ससादेशे विउसेज्ज। नन्वस्तु स इत्यकारान्तादेशस्तेनैव सिध्यति विउसेज्ज इति रूपम्। इति चेन्न विउसेज्ज इति सिद्धावपि विउसिय इति कृदन्तासिद्धे । सीयइ। सिरसादित्वात्सयुक्तादेर्लोपे दीर्घ । विशरणेति। विशरणम् अवयवाना निष्क्रम । अवसादन नाश ।

## ने सियूसीयोर्वज्ज' प्रेरणायाश्च ।३।१।९॥

ने' परयोरनयोर्वज्जादेशो वाऽसि प्रेरणायाश्च । णिवज्जइ, णिसियइ, णिसीयइ । णिवज्जति, णिसियति, णिसीयति । णिवज्जसु, णिवज्ज, णिवज्जाहि, णिसिय, णिसियाहि, णिसीय, णिसीयाहि । णिवज्जह, णिसियह, णिसीयह । णिवज्जे, णिवज्जेज्जा, णिसिए, णिसिएज्जा । णिसीए । णिसीएज्जा । णिसिइस्सइ । णिसीइस्सइ ।

नेरिति—नाऽसीत्यनुवर्तते । वज्जादेशो व्यञ्जनान्त । अकारस्तूच्चारणार्थे । प्रेरणायाम् । प्रेरणार्थकप्रत्यये परे इत्यर्थ । णिवज्जइ । निपूर्वकात्सिय्धातो' सीयधातोर्वा तिप्रत्यये मध्येऽसि तस्मिन् वज्जादेश । णिवज्जसु इत्यत्र कृणादित्वात्सु । कृणादिगणे वज्ज इत्र पाठान्न णिसियस्वित्यादि ।

सुभ् हिंसने ।४२६। सुभइ । सुज्झ् नैर्मल्ये ।४२७। सुज्झइ । सुड् निन्दायाम् ।४२८। सुडइ, सुडिज्जइ । सुडति, सुडिज्जंति । सुमर् स्मरणे ।४२९। सुमरइ । सुमरति । सुय् दौर्गन्ध्ये ।४३०। सुयइ । सुव् शयने ।४३१। सुयइ, सुवइ । सुवति । सुवमि । सुवामि । सुवामो । सुव, सुवाहि । सुवह । सुवे, सुवेज्जा । सुविस्सइ । सुविंसु । सुस्स् शोषणे ।४३२। सुस्सइ । सुस्सुस , सुस्सूस् सेवायाम् ।४३४। सुस्सुसइ । सुस्सूसइ । सुस्सुसए । सुस्सूसए । सुस्सुसति । सुस्सूसति । सूर् नाशने ।४३५। सूरइ । सेय् धर्मश्रुतौ ।४३६। सेयइ । सेव् सेवायाम् ।४३७। सेवइ । सेह् शिक्षायाम् ।४३८। सेहइ । सोच् शोके ।४३९। सोयइ । स्सद् किञ्चिचलने ।४४०। सदइ । निस्सदइ । स्सभ् विश्वासे ।४४१। सभइ । स्सद् । आस्वादने ।४४२। सयइ । स्सम् सम्म् तपसि खेदे च ।४४४। समए । समइ । समति । वीसमए, वीसमइ । वीसमउ । वीसमह । सम्मइ । स्सय् आस्वादने सेवाया स्रवणे च ।४४५। सयइ । सयति । आसयइ । आसयति । स्सस् प्राणने ।४४६। ससइ ।

सुडिज्जइ । स्वार्थे इज्ज । अयञ्च प्रत्यय सर्वत्र प्रत्यये परे भवति । तेन सुडिज्जिसु । सुस्सुसए । अन्त्यादित्वादेकार । आस्वादने । आस्वादो यदाऽनुभवस्तदा सकर्मक । यथा घणाणि सयइ इति । धनान्यनुभवेत्यर्थ । यदा रुचिस्तदाऽकर्मक । यथा—तित्ताए न सयइ जल । तृषाय न स्वदते जलमित्यर्थः ।

क्षुधाय जलं न रोचते इत्यर्थः । स्वद्धातोः रुच्यर्थत्वादेव । "अपां हि तृप्ताय न वारिधारा, स्वादुः सुगन्धिः स्वदते तुषारा" इति श्रीहर्षोक्ते रुच्यर्थयोगे चतुर्थी सङ्गच्छते । एवञ्चात्रापि तदर्थो नानुभवविरुद्धः । श्रवणे त्वकर्मक एव सेवायान्तु सकर्मकः स्पष्ट एव । प्राणने । प्राणनं श्वासाद्यनुकूलव्यापारः ।

स्तुभ् निश्वासे पृथग्भावे च ।४४७। सुभइ । वीसुभइ । वीसुभेज्जा । हद् ग्रहणे ।४४८। हदइ ।

वीसुभइ । मयुक्कादेर्लोपे दीर्घः । पक्षे विस्सुभइ ।

## हत्साहो डि सो. ।३।१।७२॥

हद्साह्धातुभ्यां परस्य सोर्डिरादेशो वा स्यात् । हदि, हदसु, हद, हदाहि । हदह । हक्क् निषेधे ।४४९। हक्कइ । हट् चेष्टायाम् ।४५०। हडइ । हन् हिंसायाम् ।४५१।

हत्साह इति—चेत्यनुवृत्तिः । समाहारद्वन्द्वे पञ्चम्येकवचनम् । डकारोच्चारणं तु टिलोपार्थम् । हद्धातोराज्ञाया सिप्रत्यये स्यादेशे मध्येऽसि पञ्चमीनिर्दिष्टत्वात् तस्य डयादेशे टिलोपे हदि । तदभावे हदसु । स्यादेशाभावे हेर्लोपे हद । लोपाभावे दीर्घे हदाहि ।

## तिन्तिन्तेषु हनो वा ।४।१।५२॥

हन्धातोः परस्यासो लोपो वा एषु परेषु । हति, हणाइ, हणइ । हंति, हणन्ति । हण, हणाहि । हणिया, हणे, हणेज्जा, हणिस्सइ, हणिही, हणिहिइ, हणिंसु ।

तिन्तीति—असः इत्यस्य लोप इत्यस्य चानुवृत्तिः । हन्धातोस्तिप्रत्यये मध्येऽसि प्रत्यये तस्यानेन लोपेऽनुस्वारे हंति । आणादित्वाद्दीर्घे हणाइ । असो लोपे हन्+न्ति इति स्थिते व्यञ्जनत्रयसंयोगे पूर्वनकारलोपे हंति । न्तपरे तु हंतो । हणिया । हण्धातो प्रवर्त्तनाया याप्रत्यये असूचयूआणूहणे य इतीडागमे लोपोऽन्यतरस्येति सूत्रेणासो लोपे हणिया । याप्रत्ययाभावे एदादिः । तथा च हणे हणेज्जेत्यादि ।

## वेर्हन ।३।३।३४॥

वे' परस्य हन्धातोरन्त्यस्य द्वित्वं वा स्यात् । विहण्णइ । विहन्नइ, विहणइ । विहनइ । हस् हसने ।४५२। हसइ । हिंड् गतौ शब्दे च ।४५३। हिंडइ ।

हिंडंति । हिंडेह । हिंडह । हिंस् हिंसायाम् ।४५४। हिंसइ । हिव् विरेचने ।४५५। हिवइ । हिवति । हुण् होमे आह्वाने कम्पने च ।४५६। हुणइ । हेड अनादरे हिंसायाञ्च ।४५७। हेडइ ।

वेर्हन इति—द्विर्वेत्यनुवर्त्तते । हिंडेह । अस एवो हे इति सूत्रेणैकार ।

खा अदने ।४५८।

## खादिभ्यो वा ।२।१।८०॥

एभ्यो यः प्रत्ययो वा स्यादाज्ञाप्रवर्त्तनावर्त्तमानेषु । खायइ । खाइ । खति ।

खादिभ्य इति—धातो प्रत्यय य आज्ञाप्रवर्त्तनावर्त्तमानेषु इत्यनुवर्त्तते । असोऽपवाद । अकारान्तोऽयम्प्रत्यय । खाधातोरितिप्रत्यये मध्ये यकारे खायइ । यकाराभावे असि सवर्णदीर्घे खाइ । संयुक्ते ह्रस्वे खति । खा, गिला, ग्घा, जा, झिया, ढा, त्ता, दा, द्दा, न्हा, मो, मिला, ला, सिणा, हा एते खादय. ।

गा गाने ।४५९।

## गादिभ्यो यः ।२।१।७९॥

एभ्यो यः प्रत्ययो नित्य स्यादाज्ञाप्रवर्त्तनावर्त्तमानेषु । गायइ । गायति । गायन्तु । गाए । गाएज्जा । गाइस्सइ । गाहिइ । गाइसु । गिला ग्लानौ ।४६०। गिलायइ । गिलाइ । ग्घा गन्धोपादाने ।४६१। घायइ ।

गादिभ्य इति—अनुवृत्ति पूर्ववत् । उत्तरसूत्रे वाग्रहणसामर्थ्यादिद नित्यमित्याह नित्यमिति । गा, ज्झा, क्लिय, पी, ग्हि प्रभृतयो गादय । गिलायइ । खादित्वाद्विकल्पेन य । पक्षे अस् । गन्धोपादाने । गन्धोपादान गन्धग्रहणम् ।

## ग्घो जिग्घो वर्त्तमानेऽसि वा ।३।१।१२॥

ग्घाधातोर्जिग्घादेशो वा स्यादसि वर्त्तमानपरके । जिग्घइ । घाइ ।

ग्घ इति—अनेकवर्णत्वात्सर्वादेश ।

जहा त्यागे ।४६२।

## जहोऽसणिज्जयो· ।३।४।७९॥

जहाधातोरन्त्यस्य लोपो वाऽसि अणिइज्जे च परे । जहइ, जहाइ । जहउ, जहाउ । जहिज्जा । जहिस्सइ । जहाहिइ । जहाइसु ।

जह इति—लोपो वेत्यनुवर्त्तते । अमि परे आकारलोपे जहइ । जहति । जहन्तो । जहमाणो । सयुक्ते ह्रस्वे जह्रिस्सइ ।

जा गतौ ।४६३। जाइ । जति । जासि । जाह । जामि । जामो । जाए । जाएज्जासि । जाइस्सइ ।

गताविति । गतिश्च उत्तरदेशसयोगानुकूलव्यापार । अत्र सयोगप्रतियोगिप्रदर्शनायैवोत्तरदेशेत्युपादानमतएव धात्वर्थनिविष्टकर्मत्वाभावात्सकर्मकत्व सिद्धि । वा येन रूपेण कर्मता तेन रूपेण धात्वर्थकुक्षिप्रवेश एवाकर्मकत्व न तु येन केनापि रूपेण। अत उत्तरदेशत्वेन रूपेण ग्रामादेर्धात्वर्थप्रवेशेऽपि न क्षतिरिति ।

## निरो जो वा ।३।३।६॥

निरः परस्य जाधातोर्ह्रस्वो वा तौ। णिज्जइ । णिज्जाइ । णिज्जायति । णिज्जति ।

निर इति—ह्रस्व इति ताविति चानुवर्त्तते ।

## जादिभ्यो हे ।४।२।४२॥

जादिभ्य परस्य हेरिण्न स्यात् । जाहिइ । जाइसु ।

जादिभ्य इति—इण्नेति तु लभ्यतेऽनुवृत्त्या । बहुषु स्थलेषु प्रायो हेरिण्न भवति । अनेन निषेधात् । जा, ला, ल्हिया, ढा, सा, दा, पा, भा, मा, था इत्येते जादय । आकृतिगणोऽयम् ।

## उदो ज ।४।१।२२॥

उद परस्य जाधातोर्लोपो वा । उदाइ । उज्जाइ । आयाइ । पयाइ ।

उद इति—आदेर्लोपो वेत्यनुवर्त्तते । तथा च जाधातोर्जकारस्य लोपे उदाइ । पक्षे परसवर्ण । जाधातुरत्र गत्यर्थको ग्राह्य ।

जा प्रादुर्भावे ।४६४। जायइ । जाइ । ज्झा ध्याने ।४६५। झायइ । झिया ध्याने ।४६६। झियायइ । झियाइ । ढा , द्दा विदारणे ।४६८। आढायइ । आढाइ । दायइ । दाइ । ण्हा, सिणा स्नाने ।४७०। ण्हायइ । ण्हाइ । सिणायइ । सिणाइ । त्ता पालने ।४७१। तायइ । ञा अवबोधने ।४७२। णाइ । णति । णाउ । णाहि । णाइज्जा । णाहिइ । णाइसु ।

झायइ । णादित्वान्नित्य यप्रत्यय । झियाधातोस्तु णादित्वाद्विकल्पेन यप्र

त्यय । आढायइ । ढाधातुर्नित्यमापूर्वक एव प्रयुज्यते । अतस्तथैवोदाहृतम् । णाहिइ । आदिगणे पाठादिटो निषेध ।

पा पी पाने ।४७४।

## त्ताणिज्जावावेपु च ।३।१।११॥

पाधातोः पिन्नादेशः स्यादस्यणिज्जत्तानावेपु च । पियइ, पिनइ । पिन । पिन्नाहि ।

चाणिज्जेति—प पिन असीति पदत्रयमनुवर्त्तते । आदेशश्च व्यञ्जनान्त' । त्ताश्च अणिज्जश्च आवश्च आवेश्चेति द्वन्द्व । आवावेप्रत्ययौ प्रेरणार्थकौ ज्ञेयौ । एतेपु प्रत्ययेपु नित्य पिन्नादेश ।

## त्तएप्रवर्त्तनापरयो. प. पिव' ।३।१।१०॥

पाधातोः पिवादेशो वा स्यात्प्रवर्त्तनार्थकपरकेऽसि त्तएप्रत्यये च । पिए, पाए । पिविज्जा, पाइज्जा । पाहिइ । पाइसु ।

त्तए इति—असि वेत्यनुवर्त्तते । त्तएश्च प्रवर्त्तनापरश्चेति द्वन्द्व । त्तए इत्यस्याल्पाचुतरत्वात्पूर्वप्रयोग । प्रवर्त्तनापरशब्दस्यान्यत्र सापेक्षत्वेऽपि समास । सूत्रत्वात् । एतस्य हि वर्त्ततेऽपेक्षाऽनुवर्त्तमानेऽसि । यत एतद्द्वयमन्यपदार्थमाश्रित्य बहुव्रीहेः करणात् । त्तएप्रत्ययस्य पिवित्तए, पाइत्तए । इत्युदाहरण बोध्यम् । पाहिइ इत्यत्रेटो निषेध ।

भा दीप्तौ ।४७५। भायइ । भाइ । भास्सइ । भाहिइ । भाइसु । पडिहायइ । पडिहाइ । मा माने ।४७६। माइ । माहिइ । माइसु । वा गतौ ।४७७। वाइ । वाहिइ । वाइसु । स्मा पाके ।४७८। साइ । हा त्यागह्रासनिम्नचिकासु ।४७९। हायइ । इ गतौ ।४८०।

## इप्रभृतिभ्योऽसेसो ।३।४।३४॥

एभ्यः परयोरसेसोर्लोपः स्यात् ।

इप्रभृतिभ्य इति—लोप इत्यनुवर्त्तते ।

## एस्तिसिमिपु वा ।३।२।८॥

इधातोर्वृद्धिर्वा तिसिमिपरेपु । एति, इति । इति । एसि, इसि । इह । एमि, इमि । इमो । एतु, इतु । इहि । इह । एमि, इमि, इमो ।

एरिति—वृद्धिरित्यनुवर्तते । इधातोरितिप्रत्यये मध्येऽस्मिं तस्य लोपे वृद्धौ एति । अत्र सिमिप्रत्ययौ मकारसकारविशिष्टावेव निमित्तत्वेन गृह्येते । तेन इहि इत्यत्र न वृध्धि । स्थानिवद्भावेऽपि सकारविशिष्टत्वाप्रायाभावात् । छिन्नपुच्छे शुनि श्वत्वव्यवहारेऽपि पुच्छवत्त्वव्यवहाराभावात् ।

## एरेदेज्जयो ।३।४।३३॥

इधातोर्लोपे स्यादेदेज्जयोः परयोः । ए । एज्जा, इज्जा । एज्जासि । एज्जामि । एज्जामो ।

एरेदिति—लोप इत्यनुवर्तते । इधातोः प्रपर्त्तार्थे एप्रत्ययेऽनेन धातो लोपे ए । एज्जप्रत्यये तु एज्जा । सनुग्रहत्वे इज्जा । एज्जप्रत्ययान्ता सिप्रत्यये दीर्घे एज्जासि ।

## इकानेज्ञाहोभ्यो न ।४।२।२६॥

एभ्यः परेषां स्यादीनामिडागमो न स्यात् । इसइ । इहिइ । इइसु ।

इकेति—इट्स्यादीनामित्यनुवर्तते । इधातुर्गत्यर्थक एव ग्राह्य । अध्ययनार्थकस्य नित्यमहिपूर्वकत्वात्तस्यात्रानुपादानात् । यत्र यत्रेधातुः केवल गृहीतस्तत्र तत्र गत्यर्थक एव बोध्य । कर कास्त्यासीति सूत्रेण विहित कादेशोत्र काशब्देन ग्राह्य । एते पञ्च धातवः सर्वथाऽनिट सन्ति । उदाहरण तत्र तत्र स्वय मूहनीयमिति ।

## पडिपतिपरिभ्य एर्यस्त्यादौ ।३।१।२०॥

एभ्यः परस्येधातोर्यादेशः स्यात्त्यादौ परे । पडिएइ, पडियइ । पटियति । पडिए । पडिएज्जा । पडिस्सइ ।

पडिपतीति—आदेशेऽकारो नोच्चारणार्थ । त्यादावित्यत्रादिपदेन न्तिसिहमिमो एत् एज्ज इति प्रत्यया गृह्यन्ते । उपसर्गग्रहणफलन्तु इइ, अतीइ इत्यादौ यकाराभावः । पडिपूर्वकेधातोरितिप्रत्यये मध्ये आगतस्यासो लोपे वृद्धौ पडिएइ । वृद्ध्यभावेऽनेन यकारः । पडिए इत्यत्र तु धातोर्लोपे प्रकृतिभाव । एव पडिएज्जा । पडिस्सइ इत्यादौ तु न यकार स्सप्रत्ययेन व्यवधानात्त्यादिपरत्वाभावात् ।

## पतेरो द्वि ।२।३।६९॥

पतेरुपधाया द्वित्व स्यादिधातौ परे । पत्तिएइ । पत्तियइ । पत्तियति । पत्तिए । पत्तिएज्जा । परिए । परिएज्जा ।

पतेरिति—इशब्दस्य सप्तम्येकवचने आविति। तेनेधातौ परे इति लभ्यते। उपधाया इत्यनुवर्त्तते। पतिपूर्वकेधातोस्तिप्रत्यये मध्येऽसिप्रत्यये तस्य लोपेऽनेनोपसर्गतकारस्य द्वित्वे धातोर्वृद्धौ पत्तिएइ। तदभावे यकारे तु पत्तियइ। धातोर्यकारे यकारभागस्य लोपे प्रकृतिभावे पत्तिए।

## पादिच्चस्त्यादौ ।३।१।७८॥

पोपसर्गात्परस्येधातोरिच्चादेशः स्यात्त्यादौ। पेच्चइ। पेच्चंति। पेच्चसि।

पादिच्च इति—एरिति इधातो षष्ठ्येकवचनम्। अनेकवर्णत्वात् सर्वादेश। पपूर्वकेधातोस्तिप्रत्यये मध्येऽसि इधातोरनेनेच्चादेशे पेच्चइ। एवमग्रेऽपि।

## पादेर्मोह्माणानाम् ।४।२।४७॥

पोपसर्गात्परस्मादिधातोः परेषामेपामेडागमः स्यात्। पेच्चेइ। पेच्चामि। पेच्चेमो। समेइ। समिन्ति। अच्चेइ। उवेइ।

पादेरिति—एडित्यनुवर्त्तते। एडागमे वृद्धौ पेच्चेइ। पेच्चेमो। माणे तु पेच्चेमाणो। अच्चेइ। अति+एतीति दशाया तकारोत्तरेकारस्य चकारे तकारस्य परसवर्णेन चकारे अच्चेइ। वेइ। वि+एइ इत्यवस्थायाम् (वा० इकारस्यासावर्ण्येकारे क्वचित्) इति वार्तिकबलेनैकारस्वरूपासवर्णेऽचि परे इकारस्य वकारे व्वेति इति स्थितौ सयुक्तादेर्लोपे वेइ। सयुक्ते ह्रस्वे विंति।

## अदौ स्सपरे वेः ।२।२।६२॥

स्सपरके इधातौ वेरुपसर्गस्याकारोऽन्तादेशः स्यात्। वइस्सइ।

अदाविति—सवर्णदीर्घापवादरूपमिदम्। स्स परो यस्मात्स स्सपरस्तस्मिन्स्सपरे। विइस्सइ इत्यवस्थाया सवर्णदीर्घप्राप्तावनेन वकारोत्तरेकारस्याकारे प्रकृतिभावे वइस्सइ।

## उदो ज्ज ए' ।२।१।९॥

उदः परस्मादिधातोर्भविष्यदर्थे ज्जप्रत्ययो वा स्यात्त्यादौ परे। उइज्जइ। उइज्जति। उइस्सइ। उइस्सति। इ अध्ययने ।४८१। नित्यमहिपूर्व'।

उद इति—भविष्यति त्यादाविरयनुवर्त्तते। उत्पूर्वकेधातोस्तिप्रत्यये मध्येऽनेन ज्जप्रत्यये दकारस्य यकारे लोपे प्रकृतिभावे च उइज्जइ। ज्जप्रत्ययाभावे तु स्सही भवत। अध्ययनार्थकस्येधातोरध्ययनमर्थो हि न केवलात्प्रतीयते। किन्त्वहिपूर्वकादेवात एव तत्पूर्वकत्व कदापि नाय धातुर्विजहाति तदाह नित्यमिति।

इज्ज' क्वचित् ।२।१।२५॥

धातोरिज्ज प्रत्ययः स्याद्वा स्वार्थे क्वचित् । अहिज्जइ, अहीयइ । अहिज्जिस्सइ । अहिज्जिस्सन्ति । अहिज्जिस्स । अहिस्स । अहीस्स । अहिज्जिसु । अहीइसु । अहिंसु ।

इज्ज इति—प्रत्ययो धातोर्वेत्यनुवर्तते । अनिर्दिष्टार्थाः प्रत्यया स्वार्थे भवन्तीति । विधीयमानस्य यस्य प्रत्ययस्यार्थो सूत्रे न निर्दिष्टा सन्ति स स्वार्थ एव सम्भवतीत्यत आह स्वार्थे इति । क्वचिदित्यनेनास्य सूत्रस्यात्यल्पविषयकत्वं बोध्यते । तेन शिष्टपरम्परापरिगृहीतेष्वेवैष प्रत्ययो विधातव्यः । अहिपूर्वके धातोस्तिप्रत्यये मध्य इज्जप्रत्यये तदन्तस्यापि धातुत्वेनासि सवर्णे दीर्घे सयुक्ते ह्रस्वे अहिज्जइ । तदभावे नित्य यप्रत्यये दीर्घे अहीयइ । इज्जप्रत्यये अहिज्जिस्सइ । अहिज्जिसति । इहि वृद्धौ सयुक्ते ह्रस्व । स च बहुलग्रहणाश्रित्य तेन न अहिज्जेस्सइ इति । भेरिकारलोपे तु अहिज्जिस्स । इज्जप्रत्ययरहितस्य स्वनिट्कत्वम् । इज्जाभावे तु अहिस्स इत्यादि । भूते तु अहिज्जिसु । अहीइसु । अहिंसु ।

क्खि क्षये ।४८२। खियइ । खियउ ।

इदुदेदोत एज्जेज्जयो' ।४।१।१९॥

एभ्यो विहितस्यैज्जेज्जप्रत्ययस्यादेर्लोपो वा । खिज्जा, खिएज्जा । खिए ।

इदुदेदोत इति—आदेर्लोपो वा इत्यनुवृत्त्या लभ्यते । तपरकरणमसन्देहार्थम् । तेनेकारान्तादुकारान्तादेकारान्तादोकारान्ताच्च विहितस्येत्यर्थो लभ्यते । क्खिधातोरेज्जप्रत्यये मध्ये जायमानस्यासो लोपे प्रत्ययैकारलोपे खिज्जा । पक्षे खिएज्जा । एकारान्तस्य नेज्जा, नएज्जा । ओकारान्तस्य होज्जा, होएज्जा, होए । इधातोस्तु इज्जा, एज्जा । इज्जस्य तु अहिज्जइ । हुज्जइ ।

म्हि ईषद्गमने ।४८३। म्हियइ । निम्हियइ । जु मिश्रणामिश्रणयोः ।४८४। जुइ । जुति । जुइस्सइ । जुइहि । जुइंसु । सु स्मृतौ ।४८५। सुअइ । ने प्रापणे ।४८६।

तिन्तिसिहमिमोह्विदेज्जानातारेंसुत्तुष्वय' ।३।१।२६॥

ति न्ति सि ह मि मो हि एत् एज्ज अन अ तार इसु त्तु इत्येतेषु प्रत्ययेषु परेषु नेरयादेशो वा स्यात् । नयइ, नेइ । नयति, नेंति, नेंति । नयसि, नेसि ।

तिन्तीति—नेर्वेत्यनुवर्तते । तिश्च न्तिश्च सिश्च हश्च मिश्च मोश्च हिश्च एच्च एज्जश्च अनश्च अश्च तारश्च इसुश्च त्तुश्चेति द्वन्द्वः । मिहिशब्दयो पृथगुपादान-

कारणमुक्त पूर्वमेव । आदेशस्त्वदन्त । नेधातोस्तिप्रत्यये मध्येऽसि तस्य लोपेऽया-देशे नयइ ।

## नयस्यैर्हे ।३।१।५१॥

नयशब्दस्यैकारोऽन्तादेशो वा हेपरे । नएह, नयह, नेह । नयामि, नेमि । नयामो, नेमो । नयतु, नेतु । नयतु, निंतु, नेंतु ।

नयस्येति—वेत्यनुवर्त्तते । षष्ठीनिर्दिष्टत्वादन्त्यस्याकारस्यैकार । यकारलोपे नएह ।

## ह्रौ नेरात् ।३।१।२४॥

नेधातोराकारान्तादेशो वा ह्रौ परे । नाहि, नय, नेहि । नएह, नयह, नेह । नइज्जा, नएज्जा । नइज्ज, नएज्ज, नेज्जा । नए । नएज्जासि । नएज्जामि, णिज्जामि ।

ह्रौ नेरिति—वेत्यनुवर्त्तते । नेरेकारस्याकारे नाहि, । तदभावे नयादेशे हेर्लोपे नय । लोपाभावे दीर्घे नयाहि । अयाभावे नेहि । नए । नयादेशे यकारलोप । अयादेशाभावे नेए ।

## नेर्वा ।२।१।१६॥

नेधातोः प्रवर्त्तनायां याप्रत्ययो वा स्यात् । नेया । नेस्सइ । नेहिइ । नइसु, नेइसु ।

नेरिति—प्रवर्त्तनायामिति या इति चानुवर्त्तते । धातोर्वेति च । नेया । अनिट्कत्वान्नेट् । एवममेऽपि । नइसु । अयादेशे यलोप ।

## अत्पवेस्तौ ।३।१।२५॥

पविपूर्वकस्य नेधातोरन्त्यस्याकारो वा तौ परे ।

अत्पवेरिति—नेरिति वा इति चानुवर्त्तते ।

## पान्नयि वेः ।३।२।५५॥

पात्परस्य वेरुपसर्गस्य दीर्घो वा नेधातौ परे । पवीणइ, पविणइ । पवीणेइ, पविणेइ । पवीणयइ, पविणयइ । हो सत्तायाम् ।४८७। होइ । हुन्ति, होन्ति । होउ । होहि । होज्जा । हुज्जइ । हुज्जति । हुज्जामि ।

पादिति—दीर्घो चेत्यनुवर्तते । पविनइ इत्यवस्थाया नेधातो परेऽनेर् दीर्घ । एकदेशविकृतन्यायेन नेनयोरुभयोर्नेशब्देन ग्रहणात् । अतएवोभयविध-मुदाहरणमाचक्षते मूले । नेरयादेशे पवीणयइ । हुति इत्यत्र तु सयुक्ते ह्रस्व । होज्जा । होधातोरेज्जप्रत्यये मध्ये जायमानस्य विकरणस्य लोपे प्रत्ययस्यादेर्लोपे होज्जा, सयुक्ते ह्रस्वे हुज्जा । लोपाभावे होएज्जा । होए । हुज्जइ । होधातोरिज्ज-प्रत्यये तदन्तात्तो मध्येऽसि प्रत्ययस्यादेर्लोपे सयुक्ते ह्रस्वे हुज्जइ ।

## होः स्सस्य क्ख ।२।१।५६॥

होधातोः परस्य स्सप्रत्ययस्य क्खादेशः स्यात् । होक्खइ । होक्खामि । होहिइ । होहिंति ।

होः स्सस्येति—अनेकवर्णत्वात्सर्वादेश । होस्सइ इत्यवस्थायामनेन क्खा-देशे होक्खइ । सयुक्ते ह्रस्वे तु हुक्खइ ।

## होर्डिसिः ।२।१।२८॥

होधातोर्डिसिः प्रत्ययो वा भूतेऽर्थे । अहिसि । हुत्था । होत्था ।

होरिति—भूते चेत्यनुवर्तते । होधातोर्डिसि प्रत्ययेऽडागमे टिलोपे अहिसि । पक्षे त्थाप्रत्यये सयुक्ते ह्रस्वे हुत्था ।

## असि पाद्धो प्प ।२।१।८२॥

पात्परस्माद् होधातोः प्पप्रत्ययः स्यादाज्ञाप्रवर्तनावर्तमानेषु । पहुप्पइ । पहुप्पते । पहुप्पति । पहुप्पउ । पहुप्पेज्जा । पहोक्खइ, पहोहिइ ।

असीति—आज्ञाप्रवर्तनावर्तमानेष्वित्यनुवर्तते । पपूर्वकहोधातोरसिप्रत्यये मध्येऽस प्रबाध्य प्पप्रत्यये सयुक्ते ह्रस्वे पहुप्पइ । अच्छादित्वात्तेरे पहुप्पते । पहोक्खइ इत्यत्र तु हो स्सस्येति क्खादेशः ।

इत्याख्यातप्रकरणे प्रथमो गण समाप्त ।

# अथाख्यातप्रकरणे द्वितीयो गणः ।

अच्च् पूजायाम् ।१।

## अच्चादिभ्य एस् ।२।१।७७॥

एभ्य एस् प्रत्ययः स्यादाज्ञाप्रवर्त्तनावर्त्तमानेषु । अच्चेइ । अर्च्चेति । अच्चेसि । अच्चेह । अच्चेमि ।

पूजायाम्—पूजा च गौरवप्रयुक्तप्रीत्यनुकूलव्यापार । गौरवञ्च पुनराराध्यत्वावगाहि 'अयं ममाराध्य ' इत्याकारको ज्ञानप्रभेद ।तत्र क्रमेण विषयत्वाधेयत्वाभ्यां गौरवप्रीत्योर्गुर्वादावन्वयेन गुरु अच्चेइ इत्यादावाश्रयवृत्तिर्यो गुरुवृत्ति प्रीत्यनुकूलो गुरुविषयकगौरवप्रयुक्तो व्यापार इति बोधः । एवमेवाराहादिधातोरप्यर्थो बोध्यः।अच्चादिभ्य इति—धातो प्रत्यय आज्ञाप्रवर्त्तनावर्तमानेष्वित्यनुवर्त्तते । अयञ्च प्रत्ययोऽसोऽपवाद ।अयमपि चाज्ञाप्रवर्त्तनावर्तमानेषु परेषु भवति । सकारस्तु सप्तम्यन्तत्वादिनाश्रीयमाणे एसीत्यादावसन्देहार्थं । एत्प्रत्ययेन भेदज्ञानार्थश्च ।

## अच्चादेर्मोः क्वचित् ।२।३।१६॥

अच्चादिभ्यः परस्य मोप्रत्ययस्य स्वरस्य ह्रस्वो वा क्वचित् । अच्चेमु, अच्चेमो । अच्चिमो । अच्चेउ । अच्चेन्तु । अच्चेहि । अच्चेह ।

अच्चादेरिति—वा ह्रस्व इत्यनुवर्तते । अतएव स्वरस्येत्युपतिष्ठते । षष्ठीनिर्दिष्टत्वेनान्त्यस्य षष्ठ्या इति तु पूर्वं नोपतिष्ठते शाब्दबोधोत्तर स्थानषष्ठीनिर्णये सति स्थानषष्ठीनिमित्तिकतया अस्या परिभाषाया प्रवर्त्तिष्यमाणतया बहिरङ्गत्वेन तत पूर्वं प्रथमान्तपदबोध्यविधेयताकगुणादिबोधकपदलिङ्गकत्वेनान्तरङ्गत्वात् "स्वरस्य ह्रस्वदीर्घवृद्धय" इत्यस्योपस्थितौ स्थानिनि निर्दिष्टे सति तस्य निराकाङ्क्षतया पश्चादप्यनुपस्थितिः । क्वचिदित्युक्त्याऽसार्वत्रिकत्वमस्य प्रयोगस्य सूचयति । क्वचिदपि प्रवृत्तिर्विकल्पेनैव भवतीति बोधयितु वा इत्युपात्त । यत्र प्रयोगे आगमादौ ह्रस्वो दृश्यते तत्रैव जानीयात् । नान्यत्र कल्पना विधाय तादृश प्रयोगो विधातव्य इति सिद्धमनेन । अच्चिमो । नमादित्वादिकारो वा ।

## एः प्रत्ययस्येस्विडेदेज्जेज्जेतेषु ।३।४।३२॥

इसु इद् एत् एज्ज इज्ज इत इत्येतेषु परेषु प्रत्ययस्यैकारस्य लोपः स्यात् । अचे । अचिज्जा, अचेज्जा । अचेज्जासि । अचेज्जाइ । अचेज्जामि । अचेज्जामो ।

एरिति—लोप इत्यनुवर्त्तते । इसुश्च इद् च एच्च एज्जश्च इज्जश्च इतश्चेती तरेतरयोगद्वन्द्व । अच्चे इति । अन्च् धातोर्विध्यर्थक एप्रत्यये मध्ये एसि अनेनैप्रत्ययलोपे अच्चे ।

अच्चिस्मइ । अच्चिहिइ । अच्चिसु । अत्थम् अस्तमयने ।२। अत्थमेइ । अप्प् अर्पणे ।३। अप्पेइ । इर् गतौ ।४। इरेइ । उक्ख् सेचने ।५। उक्खेइ । उड् बन्धने ।६। उडेइ । एड् उत्सर्गे ।७। एडेइ ।

अस्तमयने—अस्तमिति मान्तमव्यय विनाशार्थकम् । गत्यर्थकाय् धातोर्भावे ल्युटि प्रत्ययेऽयनम् । उभयो समासेऽसमासे वाऽस्तमयनमिति सिद्धम् । समासस्तु सुप्सुपेत्यनेन । विनाशप्राप्ताविति तदर्थं । तथाच अत्थमेइ इत्यत्र विनाश प्राप्नोतीत्यर्थ । नश्यतीति यावत् । नन्वेवम् अत्थमेइ सूरियो इति न स्यात् द्वीपान्तरगमनेनावरकद्रव्येणाचाक्षुषत्वेऽपि विनाशाभावादिति चेत्सत्यम् । दर्शनाविषयत्वेऽस्तमित्यस्य लक्षणया तत्सम्भवात् । प्रकटने । प्रकटन विवेचनम् । सेचने । यत्किञ्चिद्द्रवद्रव्यप्रतियोगिकसयोगानुकूलो व्यापार । बन्धने । बन्धनञ्च उत्तरदेशसयोगविरोधिरज्ज्वादिसयोगानुकूलो व्यापार ।

ओयव् ससिद्धौ जये च ।८। ओयवेइ । ओयवेमो । काम् इच्छायाम् ।९। कामेइ । कास् दीप्तौ ।१०। कासेइ । कासेमो । किलाम् ग्लानौ ।११। किलामेइ । किलामेंति । किलामेसि । कुल् आचरणे ।१२। कुलेइ । कोड्ड् कूर्दने कुट्टने च ।१३। कुड्डेइ । कोर् विलेखनचित्रीकरणयो ।१४। कोरेइ । क्खाल् शौचकर्मणि ।१५। खालेइ । खड् खण्डने ।१६। खडेइ । गथ् ग्रन्थने ।१७। गथेइ । गाह् ग्रहणे ।१८। गहेइ । चाय् सामर्थ्ये ।१९। चाएइ । सचाएइ । सचाएमि । चाव् चर्वणे ।२०। चावेइ । चित्त् चित्रीकरणे ।२१। चित्तेइ । चूर् चूर्णने ।२२। चूरेइ । चेत् करणावबोधनदानस्मृतिषु ।२३। चेयेइ । चोय् प्रेरणे ।२४। चोएइ । चोययन्ति । चोएमो । जेम् भोजने ।२५। जेमेइ । जोव् द्योतने ।२६। जोएइ । जोइसु । डेव् उल्लघने ।२७। डेवेइ । डोव् विस्तारे

।२८। डोवेइ । तक्क् कल्पनायाम् ।२९। तक्केइ । वियक्केइ । ताड्, ताल् ताडने ।३१। ताडेइ ।

संसिद्धौ । संसिद्धिर्निष्पत्ति । जये । अभिभवानुकूलो व्यापारो जय । ग्लानौ । ग्लानिर्हर्षक्षय । चर्वणे । चर्वण दंष्ट्राव्यापारः । तथा चावयवविभागानुकूलतद्व्यापारो धात्वर्थ सम्पन्न । अतएव अन्न चव्वेइ इत्यादौ तादृशविभागरूपफलाश्रयतयाऽन्नादे कर्मत्व सिध्यति । दंष्ट्राव्यापार इत्यत्र दंष्ट्रया व्यापार इत्यर्थो नतु दंष्ट्राया व्यापार इति । दंष्ट्रया अन्न चव्वेइ देवदत्तो इत्यादेरेवानुभवात् । चर्वणे दंष्ट्राया करणत्वस्य सर्वानुभवसिद्धत्वात् । विवक्षया कर्तृत्वमपि स्यादिति त्वन्यदेतत् । तथा तु सर्वत्र कर्तृत्वसम्भावना । उक्तञ्च वाक्यपदीये भर्तृहरिणा—"धातुनोक्तक्रिये नित्य कारके कर्तृतेष्यते" इति । चित्रीकरणे । चित्रीकरणमालेख्यकरणम् । चूर्णने । चूर्णन नामावयवविभागानुकूलो यो मुखादिकरणकव्यापार । स चोर्द्ध्वादध पातनादिक । करणे । करण नामोत्पत्त्यनुकूलव्यापार । उत्पत्तिश्च स्वाधिकरणसमयध्वसानधिकरणसमयसम्बन्ध । स्वमुत्पत्तिमत् । स्वाधिकरणसमयध्वसानधिकरणत्व प्रथमक्षण एव सम्भवति नतु द्वितीयादिक्षणे तत्र स्वाधिकरणप्रथमादिक्षणस्य ध्वसस्यैव सत्त्वात् । पूर्वपूर्वक्षणध्वसाधिकरणत्वस्योत्तरोत्तरक्षणे सर्वसिद्धत्वात् । ननु स्वाधिकरणसमयध्वसानधिकरणत्व स्वाधिकरणसमयात्पूर्वसमयेऽपि वर्त्तते इति चेद्वर्त्तताम् । तत्क्षणसम्बन्धाभावादेव तत्र तदुत्पत्तिव्यवहाराभावात् । कालिकसम्बन्धस्यापि वर्त्तमान एव पदार्थे स्वीकारात् तत्क्षणे च तत्पदार्थस्यैवाभावात् । स्मृतिश्चिति । सस्कारमात्रजन्य ज्ञान स्मृति । सस्कारोद्बोधकाश्चानन्ता एव । अस्यायमुद्बोधक इति तु तत्तत्सन्निहितकार्योन्निर्णेय । चोययन्ति । उचादित्वादयप्रत्यये चोययन्ति । तदभावे चोएइ ।

## पंतावेस्ताड्तालो॰ सेस्वो॰ ।३।१।३६॥

अनयोरिंसुप्रत्ययसहितयोः पन्तावे इत्यादेशो वा स्यात् । पतावे, तार्डिसु । तालेइ । पतावे, तालिंसु । तीर् प्लवनतरणयोः ।३२। तीरेइ । तुड् सघाते तोडने च ।३३। तुडेइ । तुल्, तोल् तोलने ।३५। तुलेइ । तोलेइ । दस् दर्शनायाम् ।३६। दसेइ ।

पतावेरिति—वा इत्यनुवर्त्तते । इसुना सह सेंसुः । तयो सेस्वो. ।

दर्शनायाम् । ज्ञानानुकूलव्यापारानुकूलव्यापारो दर्शना । ण्यन्तादपि दर्शना-शब्दस्य सिद्धत्वात् ।

दाय् दर्शनायाम् ।३७। दायेइ । दाल् उद्घाटने विदारणे च ।३८। दालेइ । दालिंसु ।

अवाद्दालआदे: ।३।३।३६॥

अवात्परस्य दाल्धातोरादेर्द्वित्वं वा स्यात् । अवद्दालेइ । अवदालेइ । दीव् दीपने क्रीडने च ।३९। दीवेइ । धरिस् पराभवे ।४०। धरिसेइ । धुक्क्, धुक्ख् सन्दीपने ।४२। धुवेइ । धुक्केइ ।

अवादिति—द्वित्वमित्यनुवर्तते । अवात्परस्य दालस्यादेर्दकारस्य द्वित्वे अवद्दालेइ ।

पामिच्च् उच्छिन्नग्रहणे ।४३। पामिच्चेइ । पार् अन्तगमने ।४४। पारेइ । पीह् इच्छायाम् ।४५। पीहेइ । पूर् पालनपूरणयो ।४६। पूरेइ । पोस् पोषणे ।४७। पोसेइ । प्फाल् विदारणे ।४८। फालेइ । फास् स्पर्शे ।४९। फासेइ । भच्छ् तिरस्कारे ।५०। भच्छेइ । भत्थ् भर्त्सने ।५१। भत्थेइ । मोग् दर्शने ।५२। मोगेइ । मड् भूषायाम् ।५३। मडेइ । मत् मन्त्रणे ।५४। मतेइ । मूल् रोहणे ।५५। मूलेइ । मोड् मोडने ।५६। मोडेइ । यस् आच्छादने ।५७। रियसेइ । याम् परिवेषणे ।५८। यामेइ । यास् आलिङ्गने ।५९। यासेइ । राह् राधने ।६०। राहेइ । लड् गतौ ।६१। लडेइ । लूह् शुद्धौ पारुष्ये च ।६२। लूहेइ । लेस् सश्लेषणे ।६३। लेसेइ । वच् प्रतारणे ।६४। वचेइ । वण्ण् वर्णने ।६५। वण्णेइ । वार् वारणे ।६६। वारेइ । वेढ् वेष्टने ।६७। वेढेइ । वेल्ल् वेष्टन-कम्पनसङ्कोचनेषु ।६८। वेल्लेइ । वेस व्यापने ।६९। वेसेइ । व्वह् दु:खे ।७०। वहेइ । सगाम् युद्धे ।७१। सगामेइ । सक्क् सामर्थ्ये ।७२। सवेइ । सव् छेदने ।७३। सवेइ । साह् सहगमने ।७४। साहेइ । सूय् सूचने ।७५। सूएइ । सेस् भेदने ।७६। सेसेइ । हरिस् हर्षे ।७७। हरिसेइ । हेरुयाल् निन्दायाम् ।७८। हेरुयालेइ ।

मन्त्रणे । मन्त्रण नाम गुप्तपरिभाषणम् । राधने । राधन ससिद्धयनुकूलो व्यापार ।

दा दाने ।७९। देइ । देन्ति । देउ । देहि । देह ।

दाने । दानं स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलव्यापारः । त्यागार्थेन सह पर्यायतावारणाय परस्वत्वेति दत्तम् । स्वस्वत्वस्य सद्भावेऽपि परकीयस्वत्वोत्पत्त्यनुकूलव्यापारदशायां देइ इति वारणाय स्वत्वनिवृत्तीत्युक्तम् । एप्रत्यये गृद्धौ देइ । अतः परत्वाभावान्न देहि इत्यत्र हेर्लोपः ।

## एति द. ।३।३।४॥

एति परे दाधातोर्ह्रस्वः स्यात् । दए । देज्ञा । दास्सइ । दाहिइ । दाहिमि ।

एतीति—ह्रस्व इत्यनुवर्त्तते । प्रकरणाद्देत्पदेन प्रवर्त्तनार्थप्रत्यय एव गृह्यते । दइति दाशब्दस्य षष्ठ्येकवचनम् । आन्तरतम्यादाकारस्य ह्रस्वोऽकारः । दाधातो प्रवर्त्तनायामेति प्रत्यये मध्ये एम्प्रत्यये तस्य लोपेऽनेन ह्रस्वे प्रकृतिभावे दए । अत्र बाहुलकान्नित्यमेव प्रकृतिभावो भवति । तेन दे इति न भवति । अनिट्कत्वात् दास्सइ इत्यादौ नेट् ।

## दो हेर्हस्य त्थः ।२।४।१०१॥

दाधातोः परस्माद् हिप्रत्ययात्परस्य हप्रत्ययस्य त्थादेशो वा स्यात् । दाहित्थ, दाहिह । दाह, दाहामि । दाहामु, दाहामो ।

दो हेरिति—वा इत्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेशः । दाधातोर्हप्रत्यये मध्ये हिप्रत्ययेऽनेन त्थादेशे दाहित्थ । त्थाभावे दाहिह । दाधातोर्मिप्रत्यये मध्ये हिप्रत्यये 'वच्मवोच्छदाह्येच्छेभ्यो मे' इत्यनेन मेरिकारस्य परत्वात्पूर्वं लोपेऽपि मादित्वानपायात् 'मान्तौ हेरः' इति सूत्रेण हेरिकारस्याकारेऽनुस्वारे दाहं । अत्र दीर्घस्तु नेकारलोपे मिपरत्वाभावात् । न च पूर्वं परत्वाल्लोपे मान्प्रत्ययपरकत्वाभावान्न हेरिकारस्याकारः सम्भवतीति वाच्यम् । मादौ परे इत्येतावन्मात्रार्थकरणेनैव सिद्धौ प्रत्ययपर्यन्तानुधावनस्य वैयर्थ्येन दीर्घविधौ बाधकाभावात् । नचैव वृत्तौ कथं मादौ प्रत्यये परे इत्युक्तमिति वाच्यम् । अन्यपदार्थतया प्रत्ययस्यैव सम्भवतया तथाभिधानात् । तात्पर्यन्तु मादौ परे इत्येव । न च तथापि केवलमकारे मकारादित्वं कथं सावयव एव सादित्वादिव्यवहारादिति वाच्यम् । अन्यत्र तथा सत्त्वेऽपि व्याकरणे 'व्यपदेशिवदेकस्मिन्' इति परिभाषया निरवयवेऽपि शास्त्रप्रक्रियानिर्वाहाय सादित्वादिव्यवहारस्य स्वीकारात् । अतएव मादित्वं मकारे न विरुद्धम् । अगत्या स्वस्मिन्नेव स्वादित्वस्वीकारात् ।

पस्य देज्जदाऊणरट्टिसवणेषु ।३।२।५३॥

पकारोपसर्गस्य दीर्घो वा स्याद्देज्जदाऊणरट्टिसवणशब्देषु परेषु । पादेज्जा ।

पस्येति—दीर्घो वेत्यनुवर्तते । पपदेन पकारोपसर्गस्यैव ग्रहणं न पस्य पकारस्य । देज्जदाऊणपरे तस्यैव सम्भवात् । इतरयोरुभयोः परयोरन्यस्य पकारस्य देज्जदाऊणयोः पूर्वमुपस्थितेरादुपेधातुपरेणोपसर्गस्य प्रथमोपस्थितेरावश्यकतयाऽन्यदीर्घोपस्थितौ मानाभावाच । उपसर्गाऽनुपसर्गपदान्दयोरेकशेषमाश्रित्य सौत्रन्यायेनैकवचननिर्देशमाश्रयेण गुरुपुष्टकल्पनं तु न न्याय्यमसति तादृशप्रयोगे । तथापि 'सङ्गुरसिद्धः शब्दः सकृदर्थं गमयतीति' न्यायादुपसर्गस्यैव पकारस्य चतुर्षु परेषु सम्भवाशाद 'उपसर्गस्येति' । दीर्घ इत्यनुवर्तते । दाधातोरेज्जप्रत्यये देज्ज, ऊणप्रत्यये दाऊण । घट्टधातोरिणप्रत्यये घट्टि । सपधातोरणप्रत्यये सवण । तदभ्यार्थमाह देज्जदाऊणेत्यादि ।

डि डी विहायसा गतौ ।८१। डियइ । डियति । डीयइ । डीयंति । पत्ते ।

इवर्णोवर्णयोरेसि ।३।२।३७॥

इवर्णस्योवर्णस्य च लोपः स्यादेसि परे । डेइ । डिंति । उड्डियइ । उड्डियति । उड्डीयइ । उड्डीयति ।

विहायसा गताविति—लोप इत्यनुवर्तते । विहायसा गमने गतावेवाय धातुरायायते । नाय तरीश्रविरहितमेशाभायादिदगसञ्जतमिति चेन्न । आकाशपन्यानमारुह्य गमन एव तस्य प्रयोगविधानेन शङ्कायाः पयाप्रात्ते । भूमिपथमारुह्य गमने आकाशसम्बन्धेऽपि तत्पथकरणत्वाभावात् । तृतीयानिर्देशोऽप्यतएव सार्थकः । तस्याकरणार्थत्वात् । डियइ । गिलादित्वात्प्रत्यय । पक्षे यथागणम् । इवर्णोवर्णयोरिति—लोप इत्यनुवर्तते । एसि कृते लोपे डेइ । सयुक्ते ह्रस्वे डिंति ।

उतो डिडीभ्यामेसो डाडौ ।३।१।५३॥

उतः पराभ्यामाभ्यां परस्यैसो डाडावादेशौ वा स्तः । उड्डाइ । उड्डइ । उड्डति । उड्डेइ । उड्डिंति । उड्डेंति । उड्डिस्सइ । उड्डिहिइ ।

उत इति—वेत्यनुवर्तते । अत्र यथासङ्ख्यान्वयो न । तेन डीधातो परस्याप्येकारस्य ड इत्यादेश । डाप्रत्यये डिति टिलोपे उड्डाइ, एव उड्डइ ।

धु व्यक्तायां वाचि ।८२।

ब्रुवस्तिन्तिसिमिन्तमाणेषु ।३।१।२९॥

एसा सहितस्य बुधातोर्बुवादेशो वा तिन्तिसिमिन्तमाणेषु परेषु । बुवइ ।

तिन्तिसीति—वा बुव, सैस इत्यनुवर्त्तते । एसा सह सैस । आदेशोऽयमदन्त । बुवादेशे बुवइ ।

## न्तावो रूवः ।३।१।३०॥

बुधातोरुकारस्योवादेशो वा न्तौ परे । बूविंति, बुवति । बेति । बिंति । बुवसि । बेसि ।

न्तावोरिति—वा बुव इत्यनुवर्त्तते । ऊवादेशे सयुक्ते ह्रस्वे बूविंति । पक्षे बुवादेशे बुवति । तदभावे बेइ । बिंति । एसि परे उकारलोप । सयुक्ते ह्रस्व ।

## एसि ह्मोहियापरे बुवः ।३।२।३४॥

बुधातोरुकारस्य ह्मोहियापरक एसि परे पूर्वपरयोः स्थाने पूर्वसवर्णदीर्घो वा स्यात् । बूह, बेह । बुयामि, बेमि । बूमो, बेमो ।

एसि ह्मोहीति—दीर्घः पूर्वपरयो पूर्वस्य सवर्ण इत्यनुवर्त्तते । बुधातोर्हप्रत्यये मध्ये एसि बोरुकारस्यैकारस्य चोभयो स्थाने पूर्वोकारसवर्णदीर्घोकारे बूह । पक्षे बोरुकारस्यैसि लोपे बेह । मिपरे बुवादेशे वकारस्य यकारे बुयामि ।

## सैसो बुव आहस्तिन्त्योर्वर्त्तमाने ।३।१।२८॥

एसा सहितस्य बुधातोराहादेशो वा तिन्त्योः परयोर्वर्तमाने ।

सैस इति—वेत्यनुवर्त्तते । एसा सह सैस । आदेशश्चायमदन्त । वर्त्तमाने किम् । आज्ञाप्रवर्त्तनासु माभूत् ।

## आहात्ते ।३।४।३८॥

आहात्परस्य तिप्रत्ययस्य लोपः स्यात् । आह ।

आहात्तेरिति—लोप इत्यनुवर्त्तते । आह तेरिति वक्तव्ये तथोपादान सर्वलोपार्थम् । तेन नान्त्यस्य लोप । आह+तीत्यवस्थायामनेन तिलोप ।

## न्तेरुडंसुडावाहात् ।३।१।६१॥

आहात्परस्य न्तिप्रत्ययस्योड् असुड् इत्येतावादेशौ पर्यायेण भवतः । आहु, आहसु ।

न्तेरिति—उट् च असुट् चोडसुडौ । एकस्मिन् स्थानिन्यादेशद्वयासम्भ-

यादाह पर्यायेण । तिप्रत्ययस्योडादेशे टिलोपे आहु । असुडादेशे तु आहसु । उभयत्रैसा सहितस्य योराद्यादेशे न्तिपरे ।

बुवउ, बेउ । बुनतु, बूविंतु । विंतु, वेंतु । बूहि । बूह, बेह । बुआ, बूया । बुइस्सइ । बुहिइ ।

## बुव ईत् ।२।१।२९॥

बुधातोरीत्प्रत्ययः स्याद् भूते ।

बुव इति—भूत इत्यनुवर्त्तते । नित्यत्वादिसोरपवादोऽयम् ।

## बुव ओरीत्यवो वस्य ।३।३।२३॥

बुधातोरुकारस्यादेशः स्याद्वस्य द्वित्वेति परे । अब्बवी ।

बुव इति—द्विरित्यनुवर्त्तते । बुव इत्यस्यौरित्यनेन सम्बन्ध । अनेकवर्णत्वात्सर्वस्य स्थाने प्राप्तावोरित्युक्तम् । अवादेशस्तु व्यञ्जनान्त । वस्येत्यत्रापि बुव इति सम्बध्यते । तेन बुवो वो द्विरिति लभ्यते । बुधातोरीति प्रत्ययेऽडागमेऽनेनोकारस्यावादेशः । वकारस्य च द्वि ।

इत्याख्यातप्रकरणे द्वितीयो गण समाप्त ।

---

# अथ आख्यातप्रकरणे तृतीयो गणः ।

अच् पूजाया सङ्कोचने चयने च ।१।

## अचादिभ्यो वा ।२।१।७८॥

एभ्यो धातुभ्य एः प्रत्ययो वाऽऽज्ञाप्रवर्त्तनावर्तमानेषु । अचेइ । अचइ । अर्चिंति । अचति । अचेसि । अचसि । अचेह । अचह । अचेमि । अचामि । अचेमो । अचामो, अचेहि । अच, अचाहि । अचेह, अचह । अचे, अचए । अचिज्जा,

अचेज्ञा । अचिज्ञ, अंचेज्ञ । अचइज्जा, अचएज्जा । अचइज्ज, अचएज्ज । अचिज्जासि । अचिज्जाइ । अचिज्जामि । अचिज्जामो ।

पूजायाम् । अत्रत्यविचारोऽन्चुधातौ द्रष्टव्य । एसिलनुवर्त्तते । अनुवृत्त्यैव चाक्षाप्रवर्त्तनावर्त्तमानेऽग्निति लभ्यते । पक्षे सामान्यतया विधीयमानस्यास. प्रवृत्ति'। अर्चितिति । सयुक्ते ह्रस्वत्वादिकार । अच । देरत इति देर्लोपो वा । अचे । मध्ये एसि तस्य लोपे यद्वाऽसि वृद्धौ च अचे । प्रकृतिभावे तु अचए । वहुलग्रहणादेसि न प्रकृतिभाव । अतएव नित्य लोप । एवमेवैज्जप्रत्ययेऽपि बोध्यम् । एज्ञप्रत्ययान्तात्स्यादौ कृते तु अचिज्जासीति । लोपप्रकृतिभावसयुक्तह्रस्वविकल्पात्तु रूप स्वयमूह्यम् ।

अज् व्यक्तिम्रक्षणकान्तिगतिपु ।२। अंजेइ, अजइ ।

## अभेरजो गः ।२।४।५८॥

अभेः परस्याज्धातोरन्त्यस्य गकार स्यात् । अब्भगेइ, अब्भगइ ।

अज इति—व्यक्तिर्विवेचनम् । म्रक्षण स्निग्धता । अन्यत्तु स्पष्टार्थमेव । नित्यमिद सूत्र तेन नाब्भजेइ इति साधु । कृत्स्वपि अब्भगो । अब्भगणम् । अब्भगिओ । अब्भगिअव्व । अब्भगणिज्ज । अब्भगणीअ । अब्भगओ ।

अदोल् आन्दोलने ।३। अदोलेइ, अदोलइ । अग्घ् योग्यतायाम् । अग्घेइ, अग्घइ । अज्ज्, अज्जिण् उपार्जने ।६। अज्जेइ, अज्जइ । आज्जिसु । अज्जिणेइ, अज्जिणइ । समज्जिणेइ, समज्जिणइ । समज्जिणिंसु । अत्थ् याचने ।७। पत्थयइ, पत्थेइ, पत्थइ ।

अज्जिणिति । अय धातु प्राय' सम्पूर्वक एव लभ्यते न तु केवलम् । याचने । याचनञ्च विनयादिपूर्वक परस्वत्वनिवृत्तिपूर्वकस्वस्वत्वोत्पत्त्यनुकूलो व्यापारः । स च व्यापार कृपया दीयतामिति शब्दाभिलापः । विनयादिपूर्वत्वनिवेशादेव न दड्धातुना सहास्य पर्यायता । तत्र बलात्कारपूर्वकत्वस्य निवेशात् । भिक्षादिधातोरप्येवमेवार्थ ।

आव् प्राप्तौ ।८। आवेइ ।

प्राप्ताविति । स्वत्वानुकूलव्यापार प्राप्ति । तथाच धन आवेइ लब्भइ इत्यादौ धननिष्ठस्वत्वानुकूलो व्यापार इति बोधः । स्वत्वरूपफलाश्रयत्वेन धनस्य कर्मत्वम् ।

## पादावः ससित प्पोः ।३।१।२३॥

पातपरस्य सिद्धिकरणसहितस्यावधातोः प्पो इत्यादेशो वा स्यात्। पप्पोइ, पावेइ, पावइ। पाविस्सइ। पावेस्सइ। पाविहिइ, पाविही। पावेहिइ, पावेही। पाविहिसि।

पादाव इति—पाद् आव इति पदद्वयम्। सिता सह ससित् तस्य ससित। सकार इत्यत्र सचित्। असेसो सहितस्येत्यर्थः। अनेकवर्णत्वात्सर्वादेश। आव् धातोरसेसो सहितस्य प्पो इत्यादेशे पप्पोइ। तदभावेऽसेसोः श्रवणम्। यटि सयुक्ते ह्रस्वे इटि वा पाविस्सइ। सवर्णदीर्घे पाविही।

आस् उपवेशने ।९। आसइ। अहियासेइ। आसे। आस।

उपवेशने। यद्यपि विश्धातो प्रवेशनमर्थं। तत्र च सकर्मक। तथाप्युपसर्गवशेन विश्धातोः पाण्युपरधसयोगानुकूलव्यापारार्थकत्वसम्भवादकर्मकत्वम्। यदुक्तम्—"उपसर्गेण धात्वर्थो बलादन्य प्रतीयते। प्रहाराहारसहारविहारपरिहारवद्"॥ इति। हृधातोर्यत्नात्पूर्वकपरस्वत्वनिवृत्तिपूर्वकस्वस्वत्वोत्पत्त्यनुकूलव्यापाररूपहरणार्थकत्वेऽपि प्राद्युपसर्गवशेन प्रहाराद्यर्थवत्। सर्वेषा धातूनामुपसर्गादिवशेन प्रसिद्धार्थादतिरिक्तोऽप्यर्थो भवतीति भाव। तत्र कारिकाया यत्किञ्चिदुपसर्गमात्रदर्शनेऽपि द्योतकमात्रोपलक्षण तद्दर्शनम्। अतएव साक्षादित्याद्यव्ययवशेन धातोरर्थान्तरभवनेऽपि न क्षति। अत्रेद बोध्यम्। उपसर्गादिसमभिव्याहारे प्रतीयमानोऽर्थो न निपातस्य किन्तु धातूनामेव। निपातास्तु द्योतकाः। अतएव तदसन्निधाने न तदर्थप्रतीति। निपातस्य तदर्थत्वे तु अनुपूर्वकभूधातोरनुभवानुकूलव्यापारार्थकत्वेन जायमान सकर्मकत्व न स्यात्। अनुभवस्योपसर्गार्थत्वेन तदनुकूलव्यापारमात्रस्यैव धात्वर्थत्वेनाकर्मकत्वापत्तेः॥ धात्वर्थनिर्देशस्तूपलक्षण तत्तदर्थस्यापि तेन न विरोधः। प्रवर्तनायामेत्प्रत्यये आसे। आस इत्यत्र हेर्लोपः।

इक्खव् दर्शने व्यक्तायां वाचि च ।१०। इक्खेइ, इक्खइ। इक्खिमो, इक्खेमो, इक्खामो।

व्यक्तायां वाचि। स्पष्टवचन व्यक्ता वाक्। व्यक्तत्वञ्च वाचिकत्वादितत्तद्रूपेण परश्रवणविषयत्वम्। एवञ्चाव्यक्तशब्दानुकूलव्यापारे सति नेक्खइ इत्यादिप्रयोग।

## पादिक्खश्छो वा ।३।१।७३॥

पोपसर्गात्परस्येक्खोऽन्त्यस्य छकारो वा स्यात्।

इसेइ, इसइ । ईण् स्तुतौ ।१२। ईणेइ, ईणइ । ईर् प्रेरणे ।१३। ईरेइ, ईरइ । उदीरेन्ति, उदीरति । पेरेइ, पेरइ । पेरिंसु ।

अत्रादिनि—आदेर्वेत्यनुवर्त्तते । तेनेकारस्य यकारो वा । आदेस सरयर'। यकारलोपादधअकनेइ इति प्रयोग णारम स्यसमरः । अययक्त्विमो । नमादि-त्वादिकार । स्तुतौ । स्तुतिर्हि गौरवप्रयुक्तप्रीत्यनुकूलव्यापारः । गौरवश्चा-राध्यत्वाश्रणाद्धि "अय ममाराध्य" इति विज्ञानम् । अतएव "आह्लाफल चेव निपा ममीणे" इति सूत्र १।१०।८।। ईर् धातोः प्रेरणार्थत्वेऽपि कथनमुत्पूर्वकस्यार्थः ।

## उदीर्वेत्सोभ इंसोरेत् ।२।४।७९।।

एभ्यो धातुभ्यः परस्येंसुप्रत्ययस्यादेरेकारो वा स्यात् । उदीरेंसु, उदीरिंसु । उड्ड् छेदने ।१४। उड्डेइ । उड्डइ । उम, उस्स, ओम निन्दोपालम्भनतिरस्कारेषु ।१७। उसेइ, उमइ । उस्सेइ, उस्सइ । ओसेइ, ओमइ । एस अन्वेषणे ।१८। एसेइ, एसइ । एसे । एसेआ ।

उदीरिति—अत्राप्यादेर्वेति सम्बध्यते । उत्पूर्वकादीर्धातोरिंसुप्रत्ययेऽनेनेकारस्यैकारे उदीरेंसु । वेद्धातोर्वेदेंसु । सोभ्धातो सोभेंसु । अन्वेषणे । तत्र मार्गणम् ।

## अनोरेस एत इम् ।३।१।६५।।

अनोः परस्येस्धातोरेतः प्रत्ययस्येमादेशो वा । अणेसिं, अणेसे । काख वाञ्छायाम् ।१९। कखेइ । कखइ । कड् अपनयने ।२०। कडेइ, कडइ । कद् आवरणे ।२१। कडेइ, कडइ । कप्प् छेदने सामर्थ्ये उत्पादने च ।२२। कप्पयइ । कप्पेइ, कप्पइ ।

अनोरिति—वेत्यनुवर्त्तते । एस्धातोर्विहितस्य प्रवर्त्तनायामेतः प्रत्ययस्यानेनेमादेशो भवति । अत्र मकारो नेत्संज्ञक । अन्यथाऽऽदेशो मकाररहित एव विधीयेत । तन्नेतो मस्य प्रयोजनाभावात् । एत इमादेशे मकारस्यानुस्वारेऽणेसिं । सन्धिकार्यन्तु स्वयमप्यूहेत । पक्षे श्रवणमेतोऽपि । अनोरिति किम् । पेसिं एसिं इति मारम भवत् । कप्पयइ । अत्रायप्रत्यय पाक्षिको भवति ।

कर् करणे ।२३।

## कर कास्त्यादिहियास्ससिस्युमूणतव्वेषु ।३।१।२७।।

कर्धातो' का इत्यादेशो वा तिन्तिसिहमिमोहियास्ससिसीउमुऊणतव्वेषु परेषु । काइ । कति । कासि । काह । कामि । कामो । काउ । कतु । काहि ।

कर इति—वेत्यनुवर्त्तते। त्यादिश्च हिश्च याश्च स्सश्च सिश्च सीश्च उञ्च उणश्च तव्वश्चेति द्वन्द्वसमास। त्यादिपद तिमारभ्य मोपर्यन्त प्रत्ययमाचष्टे तदाह तिन्तीत्यादि। हिशब्देनाज्ञाभविष्यदर्थयोरुभयोर्ग्रहणम्। न तु पूर्वपरसान्निध्यादाज्ञार्थकमात्रस्य सन्निहितासन्निहितयो सन्निहितस्यैव ग्रहणमिति परिभाषाया अनित्यत्वात्। अतएव काहिइ, काही इत्यादि सिद्ध्यति। कर् धातोस्तिप्रत्यये मध्येऽसि प्रत्यय एसि वा कृते इप्रभृतित्वात्तस्य लोपे कादेशे काइ। कर्धातोस्तत्र गणे पाठाभावान्न तत परयोरसेसोर्लोप। विकृतग्रहणे प्रकृतेर्ग्रहणाभावाच्च।

## को यः सिद् ।४।१।५७॥

काधातोः परस्य याप्रत्ययस्य सिडागमः स्यात्। कासिया। कस्सइ। काहिइ, काही। काहामो।

क इति—असादिभ्यो या इति विहितस्य याप्रत्ययस्य प्रवर्त्तनार्थस्यानेन सिड्विधीयते। टित्त्वादाद्यवयव। एदेज्ञापवादत्वान्न तद्विधान देश्यम्। कर्धातोर्याप्रत्यये विकरणलोपे कादेशे सिडागमे कासिया। सयुक्ते ह्रस्वे कस्सइ। दीर्घे काही। प्रकृतिभावे काहिइ। मादौ हेरदिति सूत्रेणेकारस्याकारे दीर्घे काहामो।

## वा क सिस्यौ ।२।१।३०॥

काधातोः सिसीप्रत्ययौ वा स्तो भूतेऽर्थे।

वा क इति—भूत इत्यनुवर्त्तते। सिश्च सीश्च सिस्यौ। विकल्पेनेमौ प्रत्ययौ। तेन पक्षे सामान्येसुप्रत्यय। उदाहरणञ्चाग्रे प्रदर्शयिष्यते।

## भूते काप्रभृतीनामद् ।४।१।५८॥

एषामडागमः स्यादाख्याते भूतार्थकप्रत्यये परे। अकासि। अकासी। अकाइसु।

भूते काप्रभृतीनामिति—भूते किम्। काइ इत्यादौ मास्म भवत्। अडागमे टित्त्वादाद्यवयवे अकासि। त्यादिविवक्षायामेव कादेशो भवति। अतएव सिस्योर्विवक्षितयो सतो पूर्वमेव कादेशो सिस्यौ भवत। क्वचित्परत्वव्याख्यानन्तु भाविपरत्वमादायैव। का, कर्, तर्, दव्, दिस्, लभ्, हो, एते कादय। आकृतिगणोऽयम्।

## न मायोगे ।४।१।५९॥

मायोगे भूतार्थप्रत्यये परेऽडागमो न स्यात्। मा कासि कासी वा अधम्म। पक्षे करेइ, करइ। करेस्सइ, करिस्सइ।

न गेति—भूआ इति अङ्गि धातुपाठे। यद्यपि सम्प्रदायागमे दीर्घे मा भामि इत्यादि सम्भवति। तथापि भाति भा इति भासम्प्रयोगस्यप्रयोगोऽ-नागमाभ्याम् पञ्चमिति सूत्रारम्भः। पक्षे। भादेशाभावपक्षे। भट्टादिरपादेशा गमे भरेस्सइ। सयुक्ते हरे भरिस्सइ।

## कर इस्सम् ।२।१।२१॥

कर्धातोर्भूतेऽर्थे इस्समप्रत्ययो वा। अकरिस्म, अकरित्था, अकरिंसु।

कर इति—भूते वेत्यनुवर्तते। कर्धातोर्भूतेऽर्थे इस्समि प्रत्ययेऽकागमे अक-रिस्म। गत्यानुस्वार। एतदभावे स्थानस्य। तस्येदि अकरित्था। पक्षे इंसु। सामान्यतो विधानात्सोपसर्गादपि बोध्यम।

## णुगादेः करादे ।३।२।१२॥

णुगादिभ्यः परस्य करादे स्वरस्य वृद्धिर्वा स्यात्। णुकारेइ, णुकरेइ। णुकारइ, णुकरइ। धिक्कारेइ, धिक्करेइ। धिक्कारइ, धिक्करइ। सक्कारेइ, सक्करेइ। सक्कारइ, सक्करइ।

णुगादेरिति—वृद्धिर्वेत्यनुवर्तते। सामान्यतो विधानात्सर्वस्मिन् परे भवति वृद्धि। अव्ययादिपूर्वस्य धातोस्तु नाडागमो भवति। तथा प्रयोगादर्शनात्। धिक्कारेइ। धिक्कारानुकूलव्यापारो धात्वर्थः। वृद्ध्यभावे तु णुकरेइ धिक्करेइ इत्यादि। भूते तु णुकारिस्म, णुकारित्था, णुकारिंसु, णुकरिस्म, णुकरित्था, णुक-रिंसु। णुकार्, धिक्कार्, सक्कार्। आण्, उट्ठव्, उपट्ठव्, पट्ठव्, णिसम्, परि-ट्ठव एते णुगादिकरादय।

## उवात्कर क्खड पाकसंस्कारयो. ।२।४।६०॥

उवात्परस्य कर्धातोः क्खडादेश. स्यात्पाकेऽर्थे संस्कारे च। उवक्खडेइ, उवक्खडइ।

उवादिति—ओपचर्णत्वात्सर्वादेश। अकार उच्चारणार्थं। पाकसंस्कारयो-रिति किम्। करणाद्यर्थे माभूत्। अतएवोपकाराद्यनुकूलव्यापारदशायाम् उव-करेइ इत्यादय एव प्रयोगा भवति। सामान्यतया विधानाद् उवक्खडिय, उव-क्खडिउ इत्याद्यपि भवति।

कर् कथने ।२४। कहेइ, कहइ। कहेउ, कहउ। कहेंतु, कहंतु। कहेहि। कहेसु,

कहसु । कह, कहाहि । कहे, कहेज्जा । कहिस्सइ । कहिहिति । किट्ट कीर्त्तने ।२५। किट्टेइ, किट्टइ । किर्, कीर् विक्षेपे ।२७। किरेइ, किरइ ।

विक्षेपे । विक्षेपो हि उत्तरदेशसयोगानुकूलव्यापार ।

## पात् किर. ।३।३।२९॥

पात्परस्य किर्धातोरादेर्द्वित्व वा स्यात् । पक्किरेइ । पक्किरइ ।

पादिति—आदेर्द्विर्वेति पदत्रयमनुवर्त्तते । सामान्यतया विधानान्न निमित्तविशेषापेक्षा । पक्किरमाण इत्यागमप्रयोगदर्शनेनेद सूत्र स्थालीपाकन्यायेन विधीयते । यथा स्थाल्या पच्यमानेष्वोदनेष्वेकस्यैव पाकदर्शनेन सर्वेषा पाको विज्ञायते । तथैवात्रापि द्विककारघटितैकप्रयोगदर्शनेन पक्किरेइ इत्यादिषु ककारद्वित्वमनुमीयते । नचाय न्याय सार्वत्रिक । यत कुत्रचिदेकस्मिन्नन्धे दृष्टे एतद्ग्रामीणा सर्वेऽन्धा इति न निश्चीयते । ततश्च यत्र नागमलोकविरोधसभावना तत्रैवैतन्न्यायाश्रयणमिति विज्ञेयम् ।

## वेः क्खिर. किर ।२।४।१००॥

वेः परस्य किर्धातोः क्खिरादेशो वा स्यात् । विक्खिरेइ, विक्खिरइ । विकिरेइ, विकिरइ । कीरेइ, कीरइ । विकीरेइ, विकीरइ । कीड् कील् कील् क्रीडायाम् ।२०। कीडेइ । कीडइ । कीलेइ, कीलइ । पकीलेइ, पकीलइ ।

वेरिति—वेत्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । आदेशोऽरेफान्तो बोध्य । सामान्यतो विधानात्क्त्वपि बोध्यम् । क्रीडायाम् । आनन्दानुकूलव्यापारविशेष क्रीडा ।

कम् पादविक्षेपे ।३१। कमेइ, कमइ । किण् क्रयणे ।३२। किणेइ, किणइ । किणाइ । किणेहि । किण, किणाहि । विकिणेइ, विकिणइ, विकिणाइ ।

क्रयणे । तच्च मूल्यदानजन्यपरस्वत्वनिवृत्तिपूर्वकस्वस्वत्वोत्पत्त्यनुकूलो व्यापार । मूल्यञ्च कार्षापणादिकमेव राजनिर्दिष्ट न तु द्रव्यमात्र तेन तिलादीन् दत्त्वा माषादीना विनिमये न मासे किणेइ इति प्रयोग । विपूर्वकस्य तु मूल्यग्रहणपूर्वकस्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलव्यापारोऽर्थः । प्रथमे मूल्यदानजन्यत्वनिवेशान्न लभादिधातुभिरस्य पर्यायता । विपूर्वकार्थे मूल्यग्रहणपूर्वकत्वनिवेशान्न दाप्रभृतिधातुभिरस्य पर्यायता । अथवा परस्वत्वनिवृत्तिपूर्वकस्वस्वत्वोत्पत्त्यनुकूल मूल्यदानमेव क्रय । विक्रयस्तु स्वस्वत्वनिवृत्तिपूर्वकपर-

स्वत्वानुकूल मूल्यग्रहणमेव । सर्वत्र स्वत्वरूपफलाश्रयतया कर्मत्वम् । किणाइ । जाणादित्वाद्दीर्घ ।

## वे· क्रिण· क्क एहे ।३।१।३१॥

वे परस्य क्रिण्धातोः क्कादेशो वा स्याद् हपरके एसि परे । विक्केह, विकिणेह, विकिणह ।

वेः किण इति—वेत्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । क्रिणेहेत्यत्रैहेत्यनुक्त्वैहे इति निर्दिष्टम् । तेन हपरक एसीति लब्धम् ।

क्खिव् प्रेरणे ।३३। खिवेइ, खिवइ । खिवेसु, खिवेहि, खिवसु, खिव, खिवाहि ।

खिवेस्विति—कुणादित्वात्से सु । तदभावे हि । तस्यात परत्वे वा लोप ।

## उन्ने क्खिव स्से ।४।१।३१॥

उद्‌निपूर्वकस्य क्खिव्धातोष्टेर्लोपः स्यात्स्से परे । उन्निक्खिस्सामि । उक्खिविस्सामि । निक्खिविस्सामि । खव् क्षयकरणे ।३४। खवेइ, खवइ । गाह् स्थापनाग्रहणप्रवेशेषु ।३५। गाहइ, गाहइ । गिण्ह् गेण्ह् ग्रहणे ।३७। गिण्हेइ, गिण्हइ । गिण्हेसु, गिण्हसु । गिण्हेहि । गिण्ह, गिण्हाहि । गेण्हेइ, गेण्हइ । गेण्हेसु, गेण्हसु । गेण्हेहि । गेण्ह, गेण्हाहि ।

उन्नेरिति—टेर्लोप इत्यनुवर्त्तते । उन्नेरिति समुदायग्रहणम् । तेनैकैकपूर्वकस्य विपरीतानुपूर्वीविशिष्टपूर्वकस्य च धातोष्टेर्लोपो न । सथैवोदाहृत मूले । विपरीतानुपूर्वीविशिष्टपूर्वस्य तु निउक्खिविस्सइ । क्षयकरणे । नाशकरणमेतस्यार्थ । तथाचाय सकर्मक । गिण्हगेण्हिति । सयुक्ते ह्रस्वकरणेनापि गिण्हइ इत्यादिरूपसिध्धावप्युभयधातुग्रहण सर्वत्रोभयो प्रयोगो भवति न तु क्वचिदिति बोधनार्थम् । सभवति सार्थकत्वे वैयर्थ्यमन्याय्यम ।

## गिण्हगेण्हो स्सस्सयो· केवलयोर्घेच्छ ।३।१।३३॥

स्सप्रत्ययसहितयोर्निरुपसर्गयोर्गिण्हगेण्हधात्वोर्घेच्छादेशो वा स्यात् ।

गिण्हगेण्होरिति—वेत्यनुवर्त्तते । स्सेन सह सस्सौ तयोरित्यर्थ । केवलयोरिति किम्, उपसर्गसहितस्यादेशो मास्म भवत् । यद्यप्येकस्यापि धातोरादेशविधानेन निवहति तथापि विनिगमनाविरहादुभयोर्विधानेऽपि न क्षति । आदेशश्चायमदन्तस्तेनाग्रेतनेन सूत्रेणास्यैकारविधानेऽपि उकारश्रवणम् । अन्यथा तस्यैवा-

न्यत्वेनादेशेनापहारात्तन्न स्यात् । विकरणविशिष्टस्यादेशविधानेनागमविशिष्टस्यै-
यादेशसम्भवेनेकारो न श्रूयेत इति पुनरन्त्यस्येकारो विहितः ।

## घेच्छस्येत्तौ वा ।३।१।२१॥

घेच्छशब्दस्येकारोऽन्तादेशो वा तौ परे । घेच्छिइ, घेच्छइ । घेच्छति । घेच्छसि ।

घेच्छस्येति—इत ताविति पदद्वयम् । घेच्छादेशेऽनेनान्त्यस्याकारस्येकारे प्रकृतिभावे घेच्छिइ ।

## वा घेच्छान्मेर्डीः ।३।१।६४॥

घेच्छात्परस्य मिप्रत्ययस्य डीमादेशो वा स्यात् । घेच्छी, घेच्छ, घेच्छामि । घेच्छामो । गिण्हिस्सइ, गिण्हिहिइ । गेण्हिस्सइ, गेण्हिहिइ ।

घेच्छादिति—अनुबन्धकृतमनेकवर्णत्वं न भवतीति डकारकरणेऽपि पञ्चीनिर्दिष्टत्वादन्त्यस्य प्राप्तौ तन्निवारणार्थं सिदादेशकरणं तथा च सित्वात् सर्वादेशः । डीसादेशे टिलोपे घेच्छी । वोच्छदाहपेच्छेभ्य इति मेरन्त्यलोपेऽनुस्वारे घेच्छं ।

गिर् गिल् निगरणे उद्यमने च ।३९। गिरेइ, गिरइ । गिलेइ, गिलइ । गुण् आवर्त्तनायाम् ।४०। गुणेइ, गुणइ । अवपगुणेइ । गोव् गोपने ।४१। गोवेइ, गोवइ । ग्गह् ग्रहणे ।४२। गहेइ, गहइ । घट्ट् स्पर्शकिञ्चिचलनयोः ।४३। घट्टेइ, घट्टइ । घड् चेष्टायां रचनायाञ्च ।४४। घडेइ, घडइ । घात् हिंसायाम् ।४५। घाएइ, घायइ । घोस् व्यक्तवचने ।४६। घोसेइ, घोसइ । चय् सामर्थ्ये ।४७। चएइ, चयइ । चयति ।

निगरणे । गलबिलाध कवलसयोगानुकूलो व्यापारो निगरणम् । उद्यमनं प्रयत्नः । अवपगुणेइ । मगवादपस्य गुरुगुणोरिति सूत्रेणापशब्दस्यादेर्लोपे मगागमे चावपगुणेइ । एवमवपगुरेइ । हिंसायाम् । हिंसा नाम प्राणवियोगानुकूलो व्यापारः। तादृशवियोगरूपफलाश्रयत्वेन प्राणिना कर्मत्वात् पाणिं घातयइ इति भवति ।

## ये चयश्च क्क ।२।३।९९॥

चय्धातोश्चक्कादेशः स्याद् याप्रत्यये परे । चक्किया । चल् सञ्चलने ।४८। चलेइ, चलइ ।

ये चय इति—अन्त्यस्य क्कादेशविधानेन सिद्धि सम्भवति । अनेकवर्णत्वेनादेशस्य सर्वादेशापत्तेः । अतश्चक्कादेशो व्यधायि । चक्किया । असादित्वाच्चय्-

धातोर्यप्रत्यये "असूचयि"ति सूत्रेणेडागमे पचादेशे पचिया।

## पचलूजभ आय ।२।१।८१॥

पपूर्वकचलधातोर्जभधातोश्चाय' प्रत्ययो वा स्यादाज्ञाप्रवर्त्तनावर्त्तमानेषु। पचलायइ, पचलइ, पचलेइ। चिंत् चिन्तने ।४९। चिंतेइ। चिंतइ। चिट्ठ गति निवृत्तौ ।५०। चिट्ठेइ, चिट्ठइ।

पचलिति—पकारोपमर्गश्चल एव विशेषणम्। न तु जभोऽपि। तदेवाह पपूर्वकचलधातोरिति। वा आज्ञाप्रवर्त्तनावर्त्तमानेष्वित्यनुवर्त्तते। आयप्रत्यये पचलायइ। पक्षे असेसौ। चिन्तने। चिन्तन ध्यानम्। तच्च स्मृतिजनकम्। स्मृतिस्तु तज्जन्या। एतेन ध्यानस्मृत्योरैक्यमिति प्रत्युक्तम्। तदनुकूलव्यापारो धात्वर्थः।

## समश्चिट्ठ ख ।३।१।२॥

सम्पूर्वकस्य चिट्ठधातोरन्त्यस्य खकारो वा स्यादसेसो परयो.। सचिक्खेइ, सचिक्खइ। सचिट्ठेइ, सचिट्ठइ। चोर् स्तेये ।५१। चोरेइ, चोरइ। चय् च्छड्ड् त्यागे ।५३। चयेइ, चयइ। पचएइ, पचअइ। छड्डेइ, छड्डइ। च्छल् वञ्चने प्रक्षालने च ।५४। छलेइ, छलइ। च्छाद् सवरणे।५५। छादेइ, छादइ। च्छाल च्छोल् चालने ।५७। छालेइ, छालइ। छोलइ, छोलइ। च्छिद् छेदने ।५८।

सम इति—असेसोर्वेत्यनुवर्त्तते। पष्ठीनिर्दिष्टत्वादन्त्यस्य ठकारस्य खकारो भवति। अकारोऽत्रोच्चारणार्थः। आदेशे सति टकारस्य परसवर्णेन ककारः सामान्यतो विधानात्क्तत्त्वपि बोध्यम्। स्तेये। स्तेयञ्च परद्रव्यापहरणम्। नन्वेव बलात्कृत्य भीषयित्वा वा द्रव्यापहरणेऽपि चोरेइ इति प्रयोगः स्यादिति चेन्न रक्षणाभावपूर्वकपरस्वत्वनिवृत्तिपूर्वकस्वस्वत्वोत्पत्त्यनुकूलव्यापारेऽर्थे तात्पर्यात्। रक्षणाभावश्च तद्दृष्टिविरहः। तेन सत्यपि तस्मिन् शयनादिना प्रतिबन्धे सति द्रव्यापहरणे चोरेइ इति जायते। त्यागे। त्यागश्च स्वस्वत्वनिवृत्त्यनुकूलव्यापारः। चेति सयुक्ताक्षरस्य फलमाह पच्चएइ। वञ्चने। वञ्चनञ्च इष्टानिष्टसाधनाज्ञानतिरोभावानुकूलो व्यापारः। तादृशतिरोभावरूपफलाश्रयत्वेन कर्मत्वान्मा छलेइ इत्यादि भवति। प्रक्षालने। तच्च मलापहरणम्। सवरणे। सवरणमाच्छादनम्।

## वा च्छिन्द एदस्तिन्तिपरयोरसेसो ।२।३।३६॥

छिन्दधातोष्टिभागस्यैदादेशो वा स्यात्तिन्तिपरयोरसेसोः । छेदेइ । छेदइ । छिन्देइ । छिन्दइ । छेदिन्ति । छेदन्ति । छिन्दिन्ति । छिन्दन्ति । छिन्दे । छिन्देज्जा । छिन्देहि । छिन्द । छिन्दाहि ।

वा छिन्द इति—टेरित्यनुवर्त्तते । इन्द् इति टिभागस्तस्यैदादेश । आदेशेऽकार उच्चारणार्थ । धातोष्टिभागस्यैदादेशे मध्ये एसि छेदेइ । असि छेदइ । आदेशाभावे छिन्देइ, छिन्दइ । एवममेऽपि ।

## आतश्छिन्द एत्परयोरसेसो' ।४।१।२८॥

आतः परस्य च्छिन्दधातोष्टेर्लोपो वा स्यादेत्परकयोरसेसोः परयोः । अच्छे । अच्छिदे ।

आत इति—टेर्लोपो वेत्यनुवर्त्तते । एत्परो याभ्या तावेत्परौ तयोरसेसोरित्यर्थ । आ+च्छिद्+ए+ए इति स्थितेऽनेन धातोष्टिलोपे । ए प्रत्ययस्येति विकरणैकारलोपे अच्छे । असि विकरणेऽपि अच्छे । टिलोपाभावे अच्छिन्दे ।

## समुदो हिन्तित्तोः ।४।१।२९॥

समुदः परस्य च्छिदधातोष्टेर्लोपो वा हिन्तित्तापरयोरेत्परकयोरसेसोश्च । समुच्छे, समुच्छिदे, समुच्छिदए ।

समुद इति—एत्परयोरसेसोश्छिद इत्येतानि पदानि च सम्बध्यन्ते । हिन्तिशब्देन न्तिपरको हिप्रत्ययो गृह्यते । समुदिति समुदायो गृह्यते । तेनैकैकपरान्न भवति।

च्छोड् त्यागे ।५९। छोडेइ, छोडइ । छट् सेचने ।६०। छटेइ, छटइ । जण् उत्पादने ।६१। जणयइ, जणेइ, जणइ । जम् निवृत्तौ ।६२। जमेइ, जमइ ।

उत्पादने । उत्पत्त्यनुकूलव्यापारो धात्वर्थ । प्रथमव्यापाररूपफलमादाय कर्मसञ्ज्ञाभवनाद् धम्म जणयइ इत्यत्र द्वितीया ।

## त्ति नेर्जमो यच्छ ।३।१।३॥

ने' परस्य जमधातोर्यच्छादेश' स्यादसेसोस्त्तापरे च । नियच्छेइ । नियच्छइ । जिण् जये ।६३। जिणेइ, जिणइ । जर् वयोहानौ ।६४। जरेइ, जरइ ।

त्ति नेरिति—असेसोरित्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । आदेशश्चाय छान्त ।

## निरो जर इंसो रे ।३।३।७४॥

निरः परस्माज्जरधातोः परस्येंसुप्रत्ययस्यादेरेकारो वा। निजरेंसु, निजरिंसु।

निर इति—आदेर्येत्यनुवर्त्तते । इमुप्रत्ययस्यादेरेकारे निर्जरेंसु । रेफस्य परसवर्णेन जकार ।

जाय् याचने ।६५। जाएइ । जायइ । जोय प्रकाशने योजनायाञ्च ।६६। जोएइ, जोयइ। ज्झाम् ज्वालने।६७। झामेइ, झामइ। विज्झामेइ, विज्झामइ।

याने । यान गमनम् । योजनायामिति । योजना च सयोगानुकूलव्यापारानुकूलव्यापार ।

## वेज्झामस्तुपरेऽसि ।३।४।५९॥

वे' परस्य ज्झाम्धातोरन्त्यस्य लोपो वा स्यात्तुपरकेऽसि परे । विज्झाउ, विज्झामउ। झम् झोस् अर्पणसेवनप्रीतिषु ।६९। झमेइ, झमइ। झोसेइ, झोसइ। ठव् स्थापनायाम् ।७०। ठवेइ, ठवइ।

वेरिति—लोपो वेत्यनुवर्त्तते । षष्ठीनिर्दिष्टत्वादन्त्यस्य । तु परो यस्मात्स तुपरस्तस्मिन् । तुग्रहणेन तेसु न ग्रहणम् । प्रकृतिग्रहणे विकृतिग्रहणसम्भवेऽपि विकृतिग्रहणे प्रकृतेरग्रहणात् । असि किम् । विज्झामेउ । तुपरे किम् । असि परे सर्वत्र माभूत् । अर्पणेत्यादि । अर्पणमपि दानमेव । सेवनञ्च प्रीत्यनुकूलो व्यापार । अन्त्यार्थ चायमकर्मक । एकस्यापि धातोरर्थभेदेनाकर्मकत्वसकर्मकत्व दर्शनात् । अतएव सकर्मकभिन्नत्वमकर्मकत्वम् । अकर्मकभिन्नत्व सकर्मकत्वमिति न व्यधायि लक्षणम् । यथा भूधातोरकर्मकत्वेऽपि अन्ते सन्निधाने सकर्मकत्वम्। अन्तेत्तु नानुभवार्थत्वम्। तथा सति अणुभविज्जइ अप्पा इत्यादौ कर्मणि प्रत्ययो न स्यात्। धातोरकर्मकत्वात्। किन्तु तदर्थद्योतकत्वम् । अतएव तदसमभिव्याहारे न तदर्थप्रत्यय । यथा पुष्पमादौ गन्धसत्त्वेऽपि व्यञ्जकगोघृतादिसम्बन्धाभावे न तु तत्प्रत्यय । सम्बन्धे च तस्य तत्प्रत्यय इत्यन्वयव्यतिरेकाभ्या तस्य तद्व्यञ्जकत्व सिध्यति । तथाऽत्रापि गति ।

डह् भस्मीकरणे।७१। डहेइ, डहइ। णुल्ल् णोल्ल् प्रेरणे।७२। णुल्लयइ, णुल्लेइ, णुल्लइ। णोल्लयइ, णोल्लेइ, णोल्लइ। तज्ज् भर्त्सने।७४। तज्जयइ तज्जेइ, तज्जइ। तर् तरणे सामर्थ्ये च।७५। तरेइ, तरइ। अतरिंसु। तल् भर्जने।७६। तलेइ, तलइ। तव् सन्तापे।७७। तवेइ, तवइ। तीर कर्मसमाप्तौ।७८। तीरेइ, तीरइ।

णुछुयइ। उचादित्वादयः। भर्जने। भर्जनं नाम विना जलं रूपादिपरावृत्तिफलकतेजःसयोगानुकूलो व्यापारः। अत्रैवार्थे तलेइ इत्यस्यापि प्रयोगः। जलसन्निधाने तु पचइ इति प्रयोग इति तूक्तम्।

तुर् नुर् त्वरायाम् ।८०। तुरेइ, तुरइ। तूरेइ, तूरइ। तुल् तूल् उन्माने ।८२। तुलेइ, तुलइ। तूलेइ, तूलइ। त्थर् आच्छादने ।८३। थरेइ, थरइ। त्थिम् आर्द्रीभावे ।८४। थिमेइ, थिमइ। थग् आच्छादने ।८५। थगेइ, थगइ। थएसु, थयसु। थइस्स, थइस्सामि। दल् दाने ।८६। दलेइ, दलइ। दलेसु, दलसु। दलेहि, दल, दलाहि। दलेह, दलाह। दलिस्सामि। दलिहामि। दीव् दीप्तौ ।८७। दीवेइ। दीवइ।

त्वरायाम्। त्वरा सम्भ्रमः। उन्माने। ऊर्ध्वमानं उन्मानम्। ऊर्ध्वावस्थितेन येन मीयते तदुन्मानम्। अत्र तून्मानशब्दो भावल्युडन्तत्वेन न परिच्छेदकविशेषपरः किन्तु क्रियापरः। तथाचोत्थाप्य तोलनमुन्मानमत्र बोध्यम्। थएसु। कृणादित्वात्से सु। थइस्स इत्यत्र मेरिकारलोपः।

## पात्प्रवर्त्तमानायाम् ।२।४।७७।

पोपसर्गात्परस्य दीव्धातोरादेर्लकारो वा प्रवर्त्तनार्थकप्रत्यये परे। पलीवे, पदीवे। पलीवेज्जा, पदीवेज्जा। दुक्ख् दुःखने ।८८। दुक्खेइ। दुक्खइ। दूम् खेदे ।८९। दूमेइ। दूमइ। द्व् प्राप्तौ पीडने च ।९०। दवेइ। दवइ। उद्वेइ। दह् दहने ।९१। दहेइ। दहइ। अद्दहेइ। ध्वस् अवस्रसने नाशने च ।९२। धसेइ, धसइ।

पादिति—दीवो ल आदेर्वेत्यनुवर्त्तते। प्रवर्त्तनाशब्दस्य तदर्थकप्रत्यये लक्षणा। अतएवाह प्रत्यय इति। एति प्रत्यये मध्ये एसि तस्य लोपे दकारस्य लकारे पलीवे। असि वृद्धौ लकारः। पादिति किम्। उपसर्गान्तरान्माभूत्। प्रवर्त्तनायामिति किम्। प्रत्ययान्तरे मा भूदिति। अवस्रंसने। तथाध पतनम्। एतस्मिन्नर्थे चाकर्मकः। नाशने सकर्मकः। तच नाशानुकूलव्यापारः। नाशश्च ध्वंसस्तिरोभावो वा।

## अभेर्द्धंसः ।४।१।२१।

अभेः परस्य ध्वंस्धातोरादेर्लोपो वा स्यात्। अभिधसेइ, अभिधसइ।

अभेरिति—आदेर्लोपो वेत्यनुवर्त्तते। अनादिभूतसयुक्तादेर्लोपार्थमिद सूत्रम्। तथाच दकारस्थानेन लोपे अभिधसेइ।

धर् धार् धारणे ।९४। धरेइ । धरइ । धारेइ, धारइ । धारयइ । पहारयइ । पहारेइ, पहारइ । धाड् भ्रमणे निःसरणे निःसारणे प्रेरणाया नाशने च ।९५। धाडेइ, धाडइ । धाव् शीघ्रगतौ । धावेइ । धावइ । पहावेइ ।९६। धोव् शुद्धौ ।९७। धोएइ, धोअइ, धोवेइ, धोवइ ।

धारयइ । उचादित्वादय । बुधादित्वाद् धस्य इ । पहारयइ इत्यादौ ।

## धोव एत्परयोरसेसोः ।३।३।१५॥

अस्य धातो स्वरस्य ह्रस्वो वा स्यादेत्परयोरसेसो । धुवे, धोवे । धोवेज्जा । पहोयइ । नट्ट् नर्त्तने ।९८। नट्टेइ । नट्टइ ।

धोव इति—ह्रस्वो वेति अनुवर्त्तते। एति प्रत्यये ह्रस्वे धुवे ।

नद्ध, नह् बन्धने ।१००। पिणद्धेइ । पिणद्धइ । नहेइ । नहइ । ञ्ञ् ज्ञापने ।१०१। नवयइ, नवेइ, नवइ ।

ज्ञापने । ज्ञानानुकूलव्यापारानुकूलव्यापारो ज्ञापनम् । नवयइ । उचादित्वादय ।

## आतो ञ्ञवो नित्यम् ।४।१।७॥

आत्परस्य ञ्ञव्धातोरादेर्लोपो नित्यम् । आणवयइ, आणवेइ, आणवइ । पण्णवयइ, पण्णवेइ, पण्णवइ । पाल् पालने ।१०२। पालयइ, पालेइ, पालइ । पास् दर्शने ।१०३। पासेइ, पासइ । पासिस्सइ । पासिहिइ । पिल्ल्, पेल्ल् प्रेरणे ।१०५। पिल्लेइ, पिल्लइ । पेल्लेइ, पेल्लइ । पिह् इच्छायाम् ।१०६। पिहेइ । पिहइ । पिहाइ । पीड् पील् पीडायाम् ।१०८। पीडेइ । पीडाइ, पीडइ । पीलेइ । पीलइ । पेंखोल् आन्दोलने ।१०९। पेंखोलेइ । पेंखोलइ । प्फोड् भेदने ।११०। फोडेइ, फोडइ । फद् किञ्चिच्चलने ।१११। फदेइ । फदइ । फुर् सञ्चलने ।११२। फुरेइ । फुरइ । बुह्, बूह् शब्दे ।११४। बुहेइ, बुहइ । बूहेइ, बूहइ । भञ्ज् भञ्जने ।११४। भजेइ । भजइ । भस् अध पतने ।११६। भस्सेइ । भस्सइ । भसेइ । भसइ । भर् भरणे ।११७। भरेइ । भरइ । भास् भाषणे ।११८। भासेइ । भासइ ।

आत इति—आदेर्लोप इति सम्बध्यते । अनादिभूतसयुक्तलोपार्थमिदम् । प्रत्युदाहरणञ्च पण्णवयइ इति । आणवयइ । ननु पूर्वं सयुक्ते ह्रस्वे पश्चाल्लोपे अणवयइ इत्यपि भवितव्यमिति चेन्न । सर्वविधिभ्यो लोपविधिरिडिधिश्च बलवानिति परिभाषया पूर्वं लोपस्यैव प्रवृत्तौ सयुक्तपरत्वाभावेन ह्रस्वाभावात्तादृशरूपासम्भवात् । भस्सेइ । तुमादित्वाद् द्वित्वेऽनुस्वारलोप ।

## भासादिभ्य· सेः ।३।१।६७॥

एभ्यः परस्मादसः परस्य सिप्रत्ययस्यैकारो वा । भाससे । भाससि । भोग् प्रेक्षणे ।११९। आभोएइ । आभोयइ । आहोएइ । आहोयइ । आहोइस्सइ । आहोएहिइ, आहोएहिंति । मज्ज् गर्वे ।१२०। मज्जेइ । मज्जइ ।

भासादिभ्य इति—अस एकारो वेत्यनुवृत्त्या लभ्यते । अस किम् । भासेसे इति माभूत् । भोगिति । अयञ्च प्राय आपूर्वक एव दृश्यते । आहोएइ । अनाद्यसयुक्तत्वाद्भस्य हो वा ।

मन्न् अवबोधने ।१२१। मन्नए । मन्नइ । मन्नसि । मन्नह ।

## मन्नो मेरे ।३।१।६८॥

मन्न्धातोरसः परस्य मिप्रत्ययस्यैसादेशो वा । मन्ने । मन्नामि । मण्णे, मण्णामि । मन्नसु, मन्न, मन्नाहि, मन्नह । मण्णेज्जा । मन्निस्सइ । मन्नित्था, मन्निसु ।

मन्न इति—वा अस इत्यनुवर्त्तते । सित्त्वात्सर्वादेश । मन्न्धातोर्मिप्रत्यये मध्येऽसि कृतेऽनेन मेरेसादेशे वृद्धौ मन्ने । पक्षे णत्वम् । अयादित्वात् त्थाप्रत्यये इडागमे मन्नित्था । पक्षे इसु ।

माण् पूजायाम् ।१२२। माणेइ । माणइ । मुच् मोचने ।१२३।

## मुचोऽसेसो ।३।२।१०॥

अस्य स्वरस्य वृद्धिर्वा स्यादसेसोः परयोः । मोएइ । मोयइ । मुएइ । मुयइ । मोएज्जा । मुएज्जा । मोएसु । मुएसु ।

मुच इति—वृद्धिर्वेत्यनुवर्त्तते । मुच्धातोस्तिप्रत्यये मध्ये एसि वृद्धौ मोएइ । असि मोयइ । वृध्यभावे मुएइ, मुयइ । तुणादित्वात्सुप्रत्यये मोएसु ।

## मुचूसुणरिच्छर्वा ।२।१।११॥

आभ्या मनिष्यदर्थे च्छिः प्रत्ययो वा त्यादौ परे ।

मुचिति—धातो प्रत्ययो भविष्यति त्यान्तिनुवर्त्तते । अत्र कर्तृवाचकत्यादिप्रत्ययो आख्यातेन कर्मणि भविष्यति मुचिस्सइ मुचिहिइ इत्यादि । न तु मोच्छिइ इति भवति ।

## च्छौ मुचूसुणो वृद्धि ।३।२।२॥

मुच्सुणधात्वोः स्वरस्य वृद्धिः स्याच्छौ परे । मोच्छिइ । मोच्छिति । मुइस्सइ । मुइहिइ । मुइसु ।

छाविति—नित्यार्थं पृथक्सूत्रोक्तम् । मुच्धातोरितिप्रत्यये मध्ये च्छिप्रत्ययेऽनेनोकारस्य वृद्धौ त्रयाणामिति प्रथमचकारस्य लोपे मोच्छिइ । एव मोच्छिन्ति मोच्छिसि प्रभृतय । वैकल्पिकत्वात् च्छिप्रत्ययाभावे हिस्सौ भवत । तथा च मुइस्सइ मुइहिइ इत्यादीनि रूपाणि स्वयमूह्यानि ।

मुत्त प्रसवणे ।१२४। मुत्तेइ । मुत्तइ । म्हह्, म्हुह् स्मृतौ ।१२६। म्हहेइ । म्हहइ । म्हुहेइ । म्हुहइ । म्हुस् विस्मरणे स्पर्शे स्तेये च ।१२७। म्हुसेइ । म्हुसइ । रच् रचनायाम् ।१२८। रएइ । रयइ । रस् आस्वादनाक्रन्दनयोः ।१२९। रसेइ । रसइ । रुभ् रोभ् रुह् रोह् प्रादुर्भावे ।१३३। रुभेइ । रुभइ । रोभेइ । रोभइ । रुहेइ । रुहइ । रोहेइ । रोहइ ।

## दो रुहो वा ।३।२।४३॥

दोः परस्य रुह्धातो' स्वरस्य दीर्घो वा स्यात् । दुरूहेइ, दुरूहइ । दुरुहेइ, दुरुहइ ।

दो रुह इति—दीर्घ इत्यनुवर्त्तते । सामान्यतो दीर्घविधानात्क्त्वपि वा दीर्घो भवति । दुपूर्वकरुह्धातोरितिप्रत्यये मध्ये एसि दीर्घे दुरूहेइ । असि दीर्घे दुरूहइ । दीर्घाभावे दुरुहेइ, दुरुहइ ।

रुल् आलोठने ।१३४। रुलेइ । रुलइ । रूव् घटनायाम् ।१३५। रूवेइ । रूवइ । लब् लम्बनायाम् ।१३६। लबेइ । लबइ । लज्ज् लज्जायाम् ।१३७। लज्जेइ । लज्जइ । लास् नर्त्तने ।१३८। लासेइ । लासइ । लिंप् लेपने ।१३९। लिंपेइ । लिंपइ । लेह् स्खलनायाम् ।१४०। लेहेइ । लेहइ । लोक् दर्शने ।१४१।

आलोएइ । आलोयइ । लोट्ट परिवर्त्तने प्रक्षेपे च ।१४२। लोट्टेइ । लोट्टइ ।
लोल् आलोठने दर्शने च ।१४३। लोलेइ । लोलइ ।

आलोठने—आलोठन प्रतिघात. ।

## लोलः स्सेः ।३।३।१०॥

लोल्धातोः स्वरस्य ह्रस्वो वा स्से परे । लुलिस्सइ । लोलिस्सइ । वद् स्तुतौ ।१४४। वदेइ । वदइ । वग्ग् वल्गने ।१४५। वग्गेइ । वग्गइ । वज्ज् वर्जने ।१४६। वज्जेइ । वज्जइ । वड्ढ् वृद्धौ ।१४७। वड्ढेइ । वड्ढइ ।

## वड्ढादिभ्यः स्सस्य ।४।२।४५॥

एभ्यः परस्य स्सस्यैडागमः स्यात् । वड्ढेस्सइ । वड्ढिस्सइ ।

वड्ढादिभ्य इति—एडित्यनुवर्त्तते । वड्ढ्धातो स्सप्रत्यये तस्यैडागमे वड्ढेस्सइ । सयुक्ते ह्रस्वे वड्ढिस्सइ । वड्ढ्, कर्, सुण्, स्सार्, एते वड्ढादय ।

वत्त् वट्ट् वर्त्तने ।१४९। वत्तेइ । वत्तइ । वट्टेइ । वट्टइ ।

## आविभ्यां वट्ट उट्ट ।२।४।९८॥

आभ्या परस्य वट्टधातोरुट्टादेशो वा । आउट्टेइ । आउट्टइ । आवट्टेइ । आवट्टइ । विउट्टेइ । विउट्टइ । विवट्टेइ । विवट्टइ । वद् व्यक्ताया वाचि ।१५०। वदेइ । वदइ । वदिस्सइ । वदिहिइ ।

आविभ्यामिति—वेत्यनुवृत्ति । वट्टधातोरादेरुकारकरणेन न निर्वहति । आदिभूतस्य वकारस्योकारे सत्यप्यकार श्रूयेत । तद्विशिष्टस्य स्थान उकारस्य विधानाय प्रयतेत चेत्ततो लाघवात्समुदायादेश एव श्रेयानिति वट्ट उट्ट इति समुदायादेशो विहित । अकारस्तूच्चारणार्थ । अनैमित्तिकत्वेन कृत्स्नपि विजानीयादेतमादेशम् ।

## वद् आसी ।२।१।३२॥

वद्धातोर्भूतेऽर्थे आसीः प्रत्ययः स्यात् । वदासी, वयासी । वर् स्वीकाराच्छादनव्यायामेषु ।१५१। वरेइ । वरइ । वरस्, वीरस् वर्षणे ।१५२। वरसेइ । वरसइ । वरिसेइ । वरिसइ ।

वद इति—भूते इत्यनुवर्त्तते । इदञ्च नित्य तेन नास्माद्धातोर्भूत इसु । वद् धातोर्भूते आसीप्रत्यये दकारस्य यकारे वयासी । वर्षणे । वर्षण वर्षा ।

वह् प्रापणपीडनयोः ।१५४। वहइ । वहइ ।

## वहो वोज्झ् इहौ ।३।१।३५॥

वह्धातोर्वोज्झादेशो वा स्यादिहौ परे । वोज्झिहिति । वोज्झिहिति । इहौ किम् । वहाहि ।

वह इति—अनेकवर्णत्वात्सर्वादेश । सयुक्ते हरने आदेशाभावे च स्वयमूह्यमुदाहरणं नोदाहृतम् । इहौ किम् । समुदायद्वाराऽवयवे प्रश्न । अतएव त्यादि विहाय वहाहि इति प्रत्युदाहरणमुक्तम् । अन्यथा प्रथमोपस्थित वर्त्तमान परित्यज्याज्ञाया प्रत्युदाहरणप्रदान निर्बीज स्यात् ।

वाय् याचने ।१५५। वाएइ । वायइ । विडव अनुस्मरणे ।१५६। विडवेइ । विडवइ । वीमस् विमर्शे ।१५७। वीमसेइ । वीमसइ । वेद् वेदने ।१५८। वेदयइ । वेदेइ । वेदइ ।

वेदने । वेदन ज्ञानम् । वेदयइ । उत्पादित्वादय ।

सक्क् गतौ ।१५९। सक्केइ । सक्कइ । सज्ज् सन्नद्धनिगर्जनसज्जीभवनेषु ।१६०। सज्जेइ । सज्जइ । सद् आह्वाने आस्वादने च ।१६१। सद्देइ । सद्दइ । सम् शान्तौ ।१६२। समेइ । समइ । सव् चरणश्रवणप्राणिप्रसवेषु ।१६३। सवेइ । सवइ ।

प्राणिप्रसवेषु । प्रसव उत्पत्ति तदनुकूलो व्यापारोऽर्थ । प्रसव इत्येतावन्मात्रेण तु न निर्वाह । मट्टिआ घट सवेइ इत्यापत्ते । तदुक्तौ तु घटस्य प्राणित्वाभावान्न दोष । एवञ्च घटोत्पत्तौ तादृशप्रयोगवारणार्थमेव प्राणिग्रहणम् । न तु शाब्दबोधकुक्षिप्रवेशाय । पुत्त सवेइ इत्यादौ पुत्रादेरन्वयापत्ते । निराकाङ्क्षत्वात् । सवेइ इत्यस्य प्राणिनमुत्पादयतीत्यर्थात् । प्राणिन उत्पत्तावेवाय प्रयुज्यत इति बोधनाय तदुपात्तमिति ।

सास् अनुशासने ।१६४। सासए । सासइ ।

## सासस्य मौ ।४।२।१७॥

सास्शब्दस्य ममागम स्यान्मौ परे । साममि । सासामो । अणुमासमि ।

सासस्येति—ममित्यनुवर्त्तते । अमा सहितो धातुरत्र निर्दिष्ट । अतएव धातुशब्द विहाय शब्दश द उपात्त । विशिष्टे धातुत्वाभावात् । तथा चादन्तत्वाभावान्न दीर्घ ।

साह् कथनसाधनशासनसहगमनेषु ।१६५। साहयइ, साहेइ । साहइ । साहि, साहेह । साहह । साहे, साहए । साहेज्जा । साहिस्स, साहिस्सामि । सुण श्रवणे ।१६६। सुणेइ । सुणइ । सुणेमि । सुणामि । सुणिमो, सुणेमु, सुणेमो । सुणामो ।

साहयइ । उचादित्वादय । साहि । इतुसाहो डि सोरिति सूत्रेण डिर्भवति सो स्थाने ततोऽसो लोपो भवति डित्त्वात् । एति असि कृते प्रकृतिभावे साहए । मेरिकारलोपेऽनुस्वारे साहिस्स । श्रवणे । श्रावणप्रत्यक्षानुकूलो व्यापार श्रवणम् । फलतावच्छेदक सम्बन्धो विषयिता । येन सम्बन्धेन फल वर्त्तते स सम्बन्धो फलतावच्छेदक । तथाच धम्मकहं सुणेइ इत्यादौ विषयतासम्बन्धेन तादृश-फलाश्रयत्वेन कर्मसंज्ञा । एवञ्च तादृशप्रत्यक्षस्य समवायेन श्रोतरि विद्यमान-त्वेऽपि न क्षति ।

सोच्छिइ । सोच्छिंति । सोच्छिसि । सोच्छिह । सोच्छिमि । सोच्छिमो । सुणेस्सइ, सुणिस्सइ । सुणिहिंति । सेह् गत्याम् ।१६७। सेहेइ । सेहइ । सोच शोके ।१६८। सोएइ । सोचइ । सोभ् दीप्तौ ।१६९। सोभेइ । सोभइ । स्साद् आस्वादने प्रासौ सम्मतिदाने विज्ञाने च ।१७०। साइज्जइ, साएइ । सायइ साइज्जिस्सामि । आसादेस्सामो, अस्सादेस्सामो । अस्सादिस्सामो । हक्कार आह्वाने ।१७१। हक्कारेइ । हक्कारइ । हत्त् निबिडबन्धने ।१७२। निहत्तेइ । निहत्तइ । निहत्तिस्सइ । निहत्तिंसु । हर् हरणे ।१७३। हरेइ । हरइ । हरिमो, हरेमो । हरामो ।

सोच्छिइ । मोच्छिइ इतिवद्बोध्यम् । सोएइ । चकारस्य यकारे लोप । साइज्जइ । स्वार्थिक इज्ज । दकारस्य यकारे लोप । एडागमे आसादेस्सइ । एवमग्रेऽपि । हरिमो । नमादित्वादिकार ।

## आतो हर ।३।२।११॥

आत परस्य हर्धातोः स्वरस्य वृद्धिर्वा । आहारेइ, आहरेइ । आहारइ, आहरइ । आहारिमो, आहारेमो, आहारामो । आहरिमो, आहरेमो, आहरामो । हव् सत्तायाम् ।१७४। हवेइ । हवइ । हवेंति । हवति । हवे । हवेज्जा । हाल् दर्शने ।१७५। हालेइ । हालइ । हीर् लज्जायाम् ।१७६। हीरेइ । हीरइ हील अनादरे ।१७७। हीलेइ । हीलइ । हूण् कम्पने ।१७८। हूणेइ । हूणइ ।

वह् प्रापणपीडनयोः ।१५४। वहेइ । वहइ ।

## वहो वोज्झ् इहौ ।३।१।२५।।

वह्धातोर्वोज्झादेशो वा स्यादिह्रौ परे । वोज्झिहिति । वोज्झिहिंति । इह्रौ किम् । वहाहि ।

वह इति—अनेकवर्णत्वात्सर्वादेश । सयुक्ते ह्रस्वे आदेशाभावे च रूपद्वयम् इत्युदाहरण नोदाहृतम् । इह्रौ किम् । समुदायद्वाराऽवयवे प्रश्न । अतएव स्यादि विहाय वहाहि इति प्रत्युदाहरणमुक्तम् । अन्यथा प्रथमोपस्थित वर्त्तमान परि त्यज्याज्ञाया प्रत्युदाहरणप्रदान निर्बीज स्यात् ।

वाय् याचने ।१५५। वाएइ । वायइ । विडव अनुकरणे ।१५६। विडवेइ । विडवइ । वीमस् विमर्शे ।१५७। वीमसेइ । वीमसइ । वेद् वेदने ।१५८। वेदयइ । वेदेइ । वेदइ ।

वेदने । वेदन ज्ञानम् । वेदयइ । इचादित्वादय ।

सक्क् गतौ ।१५९। सक्केइ । सक्कइ । सज्ज् सङ्गविसर्जनसज्जीभवनेषु ।१६०। सज्जेइ । सज्जइ । सद् आह्वाने आस्वादने च ।१६१। सद्देइ । सद्दइ । सम् शान्तौ ।१६२। समेइ । समइ । सव् क्षरणश्रवणप्राणिप्रसवेषु ।१६३। सवेइ । सवइ ।

प्राणिप्रसवेषु । प्रसव उत्पत्ति तदनुकूलो व्यापारोऽर्थ । प्रसव इत्येताव-न्मात्रेण तु न निर्वाह । मट्टिआ घट सवेइ इत्यापत्ते । तदुक्तौ तु घटस्य प्राणि त्वाभावान्न दोष । एवञ्च घटोत्पत्तौ तादृशप्रयोगवारणार्थमेव प्राणिग्रहणम् । न तु शाब्दबोधकुक्षिप्रवेशाय । पुत्त सवेइ इत्यादौ पुत्रादेरनन्वयापत्ते । निराकाङ्क्ष-त्वात् । सवेइ इत्यस्य प्राणिनमुत्पादयतीत्यर्थात् । प्राणिन उत्पत्तावेवाय प्रयुज्यत इति बोधनाय तदुपात्तमिति ।

साम् अनुशासने ।१६४। सासए । सासइ ।

## सासस्य मौ ।४।२।१७।।

सासशब्दस्य ममागम स्यान्मौ परे । सासमि । सासामो । अणुमासमि ।

सासस्येति—ममित्यनुवर्त्तते । असा सहितो धातुरत्र निर्दिष्ट । अतएव धातुशब्द विहाय शब्दशब्द उपात्त । विशिष्टे धातुत्वाभावात् । तथा चादन्त-त्वाभावान्न दीर्घ ।

साह् कथनसाधनशामनसहगमनेषु ।१६५। साहयइ, साहेइ । साहइ । साहि, साहेह । साहह । साहे, साहए । साहेज्जा । साहिस्स, साहिस्सामि । सुण श्रवणे ।१६६। सुणेइ । सुणइ । सुणेमि । सुणामि । सुणिमो, सुणेमु, मुणेमो । सुणामो ।

साहयइ । उचादित्वादय । साहि । हल्साहो डि सोरिति सूत्रेण डिर्भवति सो स्थाने ततोऽसो लोपो भवति डित्वात् । एति असि कृते प्रकृतिभावे साहए। मेरिकारलोपेऽनुस्वारे साहिस्स । श्रवणे । श्रावणप्रत्यक्षानुकूलो व्यापार श्रवणम्। फलतावच्छेदक सम्बन्धो विषयिता । येन सम्बन्धेन फल वर्त्तते स सम्बन्धो फलतावच्छेदक । तथाच धम्मकह सुणेइ इत्यादौ विषयतासम्बन्धेन तादृश-फलाश्रयत्वेन कर्मसंज्ञा । एवञ्च तादृशप्रत्यक्षस्य समवायेन श्रोतरि विद्यमान-त्वेऽपि न क्षति ।

सोच्छिइ । सोच्छिंति । सोच्छिसि । सोच्छिह । सोच्छिमि । सोच्छिमो । सुणेस्सइ, सुणिस्सइ । सुणिहिति । सेह् गत्याम् ।१६७। सेहेइ । सेहइ । सोच शोके ।१६८। सोएइ । सोचइ । सोभ् दीप्तौ ।१६९। सोभेइ । सोभइ । स्साद् आस्वादने प्राप्तौ सम्मतिदाने विज्ञाने च ।१७०। साइज्जइ, साएइ । सायइ साइज्जिस्सामि । आसादेस्सामो, अस्सादेस्सामो । अस्सादिस्सामो । हकार आह्वाने ।१७१। हकारेइ । हकारइ । हत्त् निबिडबन्धने ।१७२। निहत्तेइ । निहत्तइ । निहत्तिस्सइ । निहत्तिसु । हर् हरणे ।१७३। हरेइ । हरइ । हरिमो, हरेमो । हरामो ।

सोच्छिइ । सोच्छिइ इतिवद्बोध्यम् । सोएइ । चकारस्य यकारे लोप । साइज्जइ । स्वार्थिक इज्ज । दकारस्य यकारे लोप । एडागमे आसादेस्सइ । एवमग्रेऽपि । हरिमो । नमादित्वादिकार ।

## आतो हर ।३।२।११॥

आतः परस्य हर्धातो' स्वरस्य वृद्धिर्वा । आहारेइ, आहरेइ । आहारइ, आहरइ । आहारिमो, आहारेमो, आहारामो । आहरिमो, आहरेमो, आहरामो । हव् सत्तायाम् ।१७४। हवेइ । हवइ । हवेंति । हवति । हवे । हवेज्जा । हाल् दर्शने ।१७५। हालेइ । हालइ । हीर् लज्जायाम् ।१७६। हीरेइ । हीरइ हील् अनादरे । [illegible] । हीलइ । हूण् कम्पने ।१७८। [illegible] ।

आतो ह्र इति—वृद्धिर्वेत्यनुवर्त्तते। आह्रारेइ इत्यत्रानेन ह्रकारोत्तराकारस्य वृद्धिर्वा भवति। आह्रारिमो इत्यत्र नमादित्वादिकार। दर्शने। दर्शनं चाक्षुषज्ञानं तदनुकूलव्यापारो धात्वर्थः।

क्खा कथने।१७९। खाएइ। खाइ। खति।

## आतः क्खो घवो वा।२।४।५०॥

आतः परस्य क्खाधातोर्घवादेशो वा। आघवेइ। आघवइ।

खाइ। असि परे दीर्घः। एसि तु न वृद्धिः प्रकृतिभावात्। मयुक्ते ह्रस्वे खति। आतः क्ख इति। अनेकवर्णत्वात्सर्वादेशः। वकारान्तोऽयमादेशः।

## आह् एज्जेतात्सुक्खो बहुलम्।३।१।४२॥

एज्ज इत अत्त इत्येतेषु परेषु आतः परस्य क्खाधातोराहादेशो वा। आहेज्जा, आघवेज्जा। अक्खेज्जा।

आत इति—आत इत्यनुवर्त्तते। अत्त् पदेन लक्ष्यानुरोधाद्भावार्थक एव गृह्यते। तथैव प्रयोगदर्शनात्तथा च 'विआहपण्णत्ति' इति भग०।१।१॥ सङ्गच्छते। व्याख्याप्रज्ञप्तिरिति तदर्थः। व्यवस्थितविभाषेयम्। तेन प्रवर्त्तनार्थकेऽत्ते वा भवति। कर्मार्थकेऽति इते च नित्यम्। तेन विआहिज्जइ, विआहिओ इति सिद्धम्। एज्जेन प्रवर्त्तनार्थस्य कर्मार्थस्य चोभयोर्ग्रहणम्। आहादेशे सवर्णदीर्घः।

## आघं क्ख आतः।२।१।३३॥

आपूर्वकस्य घस्धातोर्भूतेऽर्थे आघमिति निपात्यते। आघ। पचक्खाएइ, पचक्खाइ

आघमिति—भूत इत्यनुवर्त्तते। निपातनञ्चेहापूर्वकघस्धातोर्डम्प्रत्ययः तथाच डित्त्वाट्टिलोपः। असिद्धाश एव साध्यते निपातनेन। आदेशास्तु सिद्ध एव। घवादेशाभावे तु अक्खाइसु।

ठा गतिनिवृत्तौ।१८०। ठाइ। अब्भुट्ठेइ।

## ट्ठश्चाहेः।४।१।४८॥

अहेः परस्य ट्ठाधातोरन्त्यस्य लोपो वा स्यादसि परे। अहिट्ठइ। अहिट्ठाइ अहिट्ठेइ।

ट्ठ इति—असि लोपो वेति चानुवर्त्तते। असि परे अहिपूर्वकट्ठाधातोरात लोपे अहिट्ठइ। एसि तु वृद्धिः।

## अहिङ्घोऽसो डिरेति ।३।१।५०॥

अहिपूर्वकङ्घाधातोः परस्यासो ड्यादेशो वा स्यादेति परे । अहिङ्घिए । अहिङ्घए ।

अहिङ्घ इति—वेत्यनुवर्त्तते । अनेनासो ड्यादेशे टिलोपे अहिङ्घिए । असि पर आतो लोपे अहिङ्घए ।

धा धारणे पोषणे च ।१८१। धेइ । धाइ ।

## एत्ति परेऽने समो धः ।४।१।४९॥

एत्तिपरकेऽसि परेऽने च परे समः परस्य धाधातोरन्त्यस्य लोपो वा स्यात् । सधइ । सधेइ । सधए, सधाए । सधाएज्जा ।

एत्तिपर इति—लोपो वेत्यनुवर्त्ततेऽसीति च । एत्ती परौ यस्मादिति बहुव्रीहिः । अन्यपदार्थोऽत्रासीति । एत्तिपरेऽने इति भ्रममपाकर्तुमाह चेति । तथा चैत्तिपरे चानेनान्वेतीति छायान्न विभ्रमः । असि परे धातोरातो लोपे सधइ । तदुक्तम्—'हासपि णो सधति पावधम्मे' । सूय० ।१।१४।२१॥ सधेइ इत्यत्र तु वृद्धिः । एवमग्रेऽपि ।

## आलोपात्समो धोऽसस्तौ वा ।४।१।६२॥

समः परस्मादालोपकधाधातोः परस्यासो यागागमो वा स्यात्तौ । सधयाई, सधयाइ, सधाइ ।

आलोपादिति—यागित्यनुवर्तते । आकारस्य लोपो यस्मिन्नालोपस्तस्मादित्यर्थः । एतद्ग्रहणाभावे सधायाई इति स्यात् । तन्माभूदिति । सधाधातोस्तिप्रत्यये मध्येऽसि कृते तस्मिन्नालोपे यागागमे सधयाई । देवादित्वाद्दीर्घः ।

## परेर्धो डिस्तौ ।३।१।४५॥

परेः परस्माद्धाधातोः परस्यासो डिरादेशः स्यात्तौ परे । परिधिइ, परिधेइ । परिधिस्सामि । परिधेहिइ ।

परेरिति—अस इत्यनुवर्त्तते । ड्यादेशे टिलोपे परिधेइ । परिधिस्सामि । एडागमे वृद्धौ सयुक्ते ह्रस्वः । इडागमे तु वृद्धिः । ततः सयुक्ते ह्रस्वः । परिधेहिइ इत्यत्र वृद्धिरेडागमे इडागमे वा ।

## पेर्धे वा ।३।१।८४॥

पेरिकारस्यैकारो वा धाधातौ परे । परिपेहेइ । परिपिहेइ । परिपेहाइ । परिपिहाइ ।

पेरिति—गरिन्तुवर्तते। इकारस्येति तदर्थ। पीत्यस्यर्थकमव्ययम्। धाधातो पिपूर्वकत्वे पिधानमाच्छादनमित्यर्थ। परिपेहेइ। परीत्युपसर्गपीत्यव्ययपूर्वक-धाधातोरितिप्रत्यये गध्ये एसि पीतस्येकारस्यैकार। एवमभेपि।

मिला म्लाने।१८२। मिलायइ। मिलाएइ। मिलाइ। ला ग्रहणदानयो'।१८३। लायइ। लाएइ। लाइ।

मिलायइ। मिलाधातोरिति प्रत्यये गध्ये यप्रत्यय। तदभावे एसि प्रत्यये प्रकृतिभावे मिलाएइ। तदभावे अमि प्रत्यये दीर्घे मिलाइ।

इति आख्यातप्रकरणे तृतीयो गण समाप्त।

---

# अथ आख्यातप्रकरणे क्रियासमभिव्याहारप्रक्रिया।

## अल् व्यञ्जनादेरेकस्वरात्क्रियासमभिव्याहारे।२।२।६५॥

व्यञ्जनादेरेकस्वरधातोरल् स्यात् पौन'पुन्ये भृशार्थे च द्योत्ये।

अलिति—क्रियासमभिव्याहारो नाम क्रियापौन पुन्य क्रियातिशयश्च तत्र द्योत्ये भवति प्रत्ययोऽयमत आह पौनःपुन्य इत्यादि। पुणो पुणो अयइ इत्यर्थे अयूधातोर्वारणाय व्यञ्जनादेरिति। तथाच स्वरादित्वादप्रसङ्ग। पुणो पुणो किलिस्सइ इति विग्रहे माभूदत एकस्वरादिति। पुणो पुणो जाइ इति विग्रहे जाधातोरलि द्वित्वे जाजाइ इति। मध्यस्थजकारस्य यकारे तु जायाइ।

## धातोरलि।३।३।१९॥

धातोर्द्वित्वमलि परे।

धातोरिति—द्विरिति सम्बध्यते। द्विरुच्चारणमिति तदर्थ। नत्वेकस्य स्थाने द्वावादेशौ भवत। एकत्र द्वयोरेकस्मिन् कालेऽसम्भवात्।

## द्विरुक्ते पूर्वोऽभ्यासः ।१।१।३४॥

द्विरुक्तघटकः पूर्वोऽभ्याससञ्ज्ञः स्यात् ।

द्विरुक्त इति—द्विरुच्यत इति द्विरुक्त तस्मिन् द्विरुक्ते सप्तम्यर्थो घटकत्वम्। तदाह घटक इति । सञ्ज्ञाफलमनुपद ज्ञास्यते ।

## अक्कमादेरभ्यासस्य तत्र वृद्धिः ।३।४।३०॥

क्कमादिभिन्नाभ्यामान्त्यस्य लोपस्तस्मिन् सति स्वरस्य वृद्धिः स्यात् ।

अक्कमादेरिति—लोप इत्यनुवर्त्तते । तत्र षष्ठ्यन्तस्य सम्बन्ध । तत्रेत्यत्र सति सप्तमी । तच्छब्देन लोप परामृश्यते। अतएवाह तस्मिन् सतीति । लो सतीत्यर्थ । स्वरस्येत्युपतिष्ठते । सान्निध्यादभ्यासस्य स्वरस्येति लभ्यते । तथा चान्त्यस्य व्यञ्जनस्य लोपे सति स्वरस्य वृद्धिर्भवति । पर्यायताभ्रममपाकर्तुं च-शब्दमपहाय तत्रेत्युक्तम्। अक्कमादेरिति किम् । 'चकमइ' इत्यादौ लोपो माभूदिति।

## तत्र परस्याफुरादेः ।३।३।२०॥

द्विरुक्तौ फुरादिभिन्नस्य परभागस्यान्त्यस्य रेफादिभिन्नस्य द्वित्व वा स्यादलि परे । खोखुब्भइ । रेरिज्जइ ।

तत्रेति—द्विरलि धातोरित्यनुवर्त्तते । तदा द्विरक्ति परामृश्यते । तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात् । खोखुब्भइ इत्यत्र पूर्वभकारस्य परसवर्णेन बकार । एव सर्वत्र चतुर्थवर्णे बोध्यम् । अफुरादिफलमनुपद दर्शयिष्यते ।

## फुरादेरगभ्यासस्य ।४।१।६३॥

फुरादेरभ्यासस्यागागमः स्यात् । फुरफुरइ । खरखइ । डहडहइ ।

फुरादेरिति—कित्त्वादन्त्यावयव । पुणो पुणो फुरइ । अतिसयेण वा फुरइ इति फुरफुरइ । फुरित्यभ्यासरेफस्यागागम ।

## अल फुरादे ।३।१।५२॥

फुरादेरल एकारो वा। फुरफुरेइ। खरखेइ। मिसमिसेइ । मिसमिसइ। डहडहेइ।

अल इति—एर्वेत्यनुवर्त्तते। पूर्वत्र षष्ठ्यन्तत्वेऽपि योग्यत्वादत्र पञ्चम्यन्तता। सम्बन्धसामान्ये षष्ठ्या फुरादेर्विहितस्येत्यर्थो वा । क्कमादित्वाभ्यासकार्यमा गम विहाय किञ्चित् । फुरादित्वान्नोत्तरभागे कश्चिद्विकार । एकारस्त्वलो भवतीति ।

## लवः पोऽलि ।२।४।९३॥

लव्धातोरन्त्यस्य पकारः स्यादल्प्रत्यये परे । लालप्पइ ।

लव इति—पुणो पुणो लवइ इति लालप्पइ । सामान्यतो विधानादलि परे कृत्स्वपि लालप्पमाणो लालप्पण ।

## अभ्यासे कवर्गस्य चवर्गो हस्य च जः ।२।३।६७॥

अभ्यासे आदिभूतस्य कवर्गस्य चवर्गो हकारस्य जकारश्च स्यात् । चकम्मइ, चकमइ । जगम्मइ । जगमइ ।

अभ्यासे इति—अन्त्यस्य लोपेनापहारादादिभूतस्यैव सम्भवादाहादिभूतस्येति । अभ्यासे वर्त्तमानस्येत्यर्थो बोध्योऽभ्यासे इत्यस्य । अन्यथा क्रियायाऽयोगात्सप्तमी दुर्लभा स्यात् । एतत्प्रकरणस्थस्य प्रथमगणे पाठात्केवलस्यैव प्रत्यय चकम्मइ । कम्धातो तिप्रत्यये मध्येऽम्प्रत्ययेऽन्तरङ्गत्वात्पूर्वं संयुक्तादेर्लोपे द्वित्वे पूर्वभागसम्बन्धिककारस्य चकारे कमादीनामन्त्यस्य लोपाभावादवशिष्टमकारस्यानुस्वारे उत्तरभागसम्बन्धिनो मकारस्य द्वित्वे चकम्मइ । बहुलग्रहणाद्द्वित्वाभावे चकमइ । उदाहरणान्तरन्तु स्वयमूह्यम् ।

इति क्रियासमभिव्याहारप्रक्रिया ।

---

# अथ आख्यातप्रकरणे नामधातुप्रक्रिया ।

## करणे यो द्वितीयायाः ।१।४।५१॥

द्वितीयान्तान्नाम्नः करोतीत्यर्थे य प्रत्ययः स्यात् । निद्दायइ । निद्दाएज्ज । निद्दायमाणो ।

करण इति—प्रत्ययग्रहणे तदन्तग्रहणाद् द्वितीयान्तादिति लभ्यते । तेन

द्वितीयाया' स्थाने इति भ्रमनिरास । निद्द करेइ इत्यर्थे निद्दाशब्दाद्यप्रत्यये तद न्तस्य आवेणादय इति सूत्रेण धातुसञ्ज्ञाया तदवयवसुपो लोपे तिप्रत्यये निद्दायइ वक्ष्यमाणसूत्रेण दीर्घो भवतु मा वा भवतु न विशेष. ।

## उस्सुयादिभ्यो भुवि ।३।४।५२॥

### उस्सुयादिशब्देभ्यो भवतीत्यर्थे यः प्रत्यय ।

उस्सुयादिभ्यो भुवीति—य इत्यनुवर्त्तते । द्वितीयाया इति तु नानुवर्त्तते भूधातोरकर्मकत्वेन तदन्वयासम्भवात् । तथाच प्रथमान्ताद्भवत्यर्थे य सिद्ध यथा उस्सुयो भवइ उस्सुयायइ । उत्सुको भवतीत्यर्थ ।

## नाम्न' करोत्याद्यर्थे ये ।३।२।४२॥

### करोत्याद्यर्थकयप्रत्यये परे नाम्नो दीर्घोऽन्तादेशः स्यात् । उस्सुयायइ ममायए ।

नाम्नः करोत्याद्यर्थे इति—स्वरस्येत्युपतिष्ठते । दीर्घ इत्यनुवृत्ते । य प्रत्यये दीर्घे उस्सुयायइ । ममेति करइ इति ममायए । अनुकरणत्वेऽपि न तस्मात्परस्य यस्य लोप । बहुलग्रहणसम्बन्धात कचिदप्रवृत्ते । एव मिसि मिसीयइ ।

## अनुकरणधवलादिभ्यो यस्य बहुलम् ।३।४।८३॥

### अनुकरणेभ्यो धवलादिभ्यश्च परस्य यप्रत्ययस्य लोप. स्याद्बहुलम् । कहकहइ । धवलइ । दीहइ ।

अनुकरणेति—लोप इत्यनुवर्त्तते । बहुलग्रहणफलन्तु पूर्वसूत्रव्याख्या प्रसङ्ग एवोक्तम् । लोपस्य बलवत्तया पूर्वं सति तस्मिन् यपरत्वाभावान्न दीर्घ । कहकहेति सद्द करेइ इति कहकहइ । यप्रत्ययलोपात्पूर्वं दीर्घस्तु न लोपस्य बल-वत्त्वान्निमित्तस्य विनाशोन्मुखत्वाच्च । धवल करेइ धवलइ । दीह करेइ दीहइ । धवल, तडव, तणु, दीह, पसुल, पवित्त, पीण, मइल, विअग, विउस, सिढिल, एते धवलादय ।

## विसेसादिभ्यश्च ।४।१।१॥

### एभ्यो यप्रत्ययस्य लोपो बहुल स्यात् । विसेसइ । विङ्कइ । विउसइ । मिसिमिसिइ ।

मिसेसादिभ्य इति—यस्येत्यस्य बहुल लोप इत्यस्य चानुवृत्ति । विसेसा दिभ्यो विहितस्य यस्य लोपाभावे पसुलादित्वाद्वक्ष्यमाणाड्डेरित्यादेशो भवति । तेन पक्षे विसेसेइ । विकुव्वेइ । विडम्बेइ । मिसिमिसेइ । डेसादेशो बहुलग्रहणाद् मिसिमिसिशब्दे वा भवति । विसेसादिभ्यस्तु तद्भिन्नेभ्यो नित्यमेव । तेन मिसिमिसीयइ इत्यपि पक्षे भवति । न भवति विसेसायइ ।

## पंसुलादिभ्यो यस्य डेर्वा ।१।४।५५॥

एभ्य. परस्य यप्रत्ययस्य डे इत्यादेशो वा स्यात् ।

पसुलादिभ्य इति—तस्य फल पूर्वसूत्रे व्याख्यातम् ।

## पसुलस्य पसः ।३।१।१४॥

पसुलशब्दस्य पसादेशो वा ये परे । पसेइ । पसुलेइ । टिङ्कियावेइ । तडवेइ । तडएति । थवारेइ । पवित्तेइ । पवित्तयइ ।

पसुलस्येति—ये इति वा इति च सम्बध्यते । यप्रत्यये डेसादेशे पसादेशे पसेइ। तदभावे पसुलेइ। बहुलग्रहणात्पवित्तइ इत्यादौ वा डेकारो यकारस्य।

## उपमानादाचारे ।१।४।५३॥

उपमानवाचकादाचारेऽर्थे यः प्रत्यय. स्यात् । विज्ञायइ । धुत्तायइ ।

उपमानादिति—य इत्यनुवर्त्तते । विज्ञो वैद्य । स इवायरइ विज्ञायइ । धुत्तो धूर्त । स इवायरति धुत्तायइ । यपरे दीर्घ उभयत्र । सज्ञापूर्वको विधि रनित्य इति धुत्तयत इत्यादि ।

## कटगादिभ्यो ड. ।१।४।५४॥

एभ्य आचारेऽर्थे डप्रत्यय स्यात् । कटगइ । कटगति ।

कटगादिभ्य इति—आचार इत्यनुवर्त्तते । कटग इव आयरइ इति विग्रहे कटगशब्दाड्डप्रत्यये टिलोपे कटगइ । आचारसदृशाचार प्रतीयते प्रत्ययेन । तथाच कटककर्तृकाचरणसदृशाचरण देवदत्ताभिन्नाश्रयवृत्ति ।

## विज्जोर्विजुयो ये ।३।१।१३॥

विज्जुशब्दस्य विजुयादेशो वा स्याद्ये परे । विजुयायइ । विज्जूयइ ।

विज्जोरिति—वेत्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । विज्जुशब्दाद्य प्रत्यये विजुयादेशे दीर्घे विजुयायइ। पक्षे केवल दीर्घे । विद्युदिवाचरतीत्यर्थः ।

## यस्य विउसात्सङ् ।३।१।५७॥

विउसशब्दात्परस्य यप्रत्ययस्य सङादेशः स्यात् । विउस्सइ । विउस्सन्ति ।

यस्येति—आदेशोऽयं सस्वरकस्तेन लक्ष्ये सकारेऽकारश्रुतिः । सङादेशे टिलोपे विउस्सइ ।

इति आख्यातप्रकरणे नामधातुप्रक्रिया ।

---

# अथ आख्यातप्रकरणे प्रेरणाप्रक्रिया ।

---

## आवेणादय ।१।१।३०॥

एतत्प्रत्ययान्ता धातुसंज्ञाः स्युः ।

आवेणेति—धातव इत्यनुवर्त्तते । प्रत्ययग्रहणे तदन्तग्रहणमिति परिभाषया आवेणादिप्रत्ययान्ता गृह्यन्ते । आदिपदेन अवेणू, आव, अयणू, एणू, अणू, इति पञ्चप्रेरणार्थका, य ड इति द्वौ नामधात्वर्थकौ । इज्ज, अत्, य इति त्रयो भावकर्मार्थका, अय् स्वार्थिक, अट् च क्रियासमभिव्याहारार्थक इत्येते द्वादश प्रत्यया ग्राह्याः ।

## प्रेरणायामावेणू ।२।१।३९॥

प्रयोजकव्यापारे वाच्ये धातोरावेणप्रत्ययः स्यात् । अच्छावेइ । अज्झावेइ । खेवावेइ । लोभावेइ । मडावेइ ।

प्रेरणायामिति—प्रेरणा नाम प्रयोजकव्यापार । ग्राम यातु प्रवृत्ते शिष्ये प्रवर्त्तयितृव्यापारदशाया "ग्राम प्रयान्त मा गुरव प्रेरयन्ति" इति प्रतीते । प्रेरयितुर्व्यापार एव प्रेरणा । प्रपूर्वकादीरधातोर्युचा साधनात् । प्रेरयिता चैव

वोहइ। वोहेइ। तोसइ। तोसेइ। आसामइ। आसासेइ। पडइ। पडेइ। पयडसु।

विसादिभ्य इति—प्रेरणायामित्यनुवर्त्तते। चकार एण समुच्चयार्थ। आवेणस्तु न समुच्चय। तेन वेसावेइ इत्यादि न। एणि कृते वृद्धौ वेसेइ। तेरिकारस्यैकारो वा भवति। कुणादित्वात्से सु। पयडसु। विस्, तुस्, पड्, बुज्झ् एते विसादय। अकणि णेति सूत्रेण वुज्झधातोर्जकारककारयोर्हकार।

## खमादिभ्य ।२।१।४५॥

एभ्य एण् स्यात्प्रेरणायाम्। खामेइ। खोमेइ। तारेइ। वादेइ। वारेइ। ठावेइ। सन्नाहेइ।

खमादिभ्य इति—एण् सम्बध्यते अण् तु न। चानुकृष्ट नोत्तरत्रेति नियमेनानुकृष्टस्य पूर्वसूत्रेऽणोऽत्र सम्बन्धासम्भवात्। एणि सति वृद्धिर्जायते। खम्, सम्–कम्, किलाम्, किलिस्स्, किलेस्, खुप्प्, क्खिव्, खुम्, गल्, आ गस्, गाह्, उद्-घड्, सम घड्, घर्, चल्, निर्-जम, उद् जोय्, निज्झाम्, तर्, तव्, तुस्, त्तस्, दिस्, धस्, नद्, नम्, त्तस्, उद्-पज्ज्, उव-पज्ज्, निर् पज्ज्, स पडि-पज्ज्, पय्, फुट्, बुज्झ, परि-भज्, सम् भर्, भव्, मर्, लभ्, ल्व्, लुभ्, आ लोक्, आ लिय्, अभि वद्, वड्ढ्, वद्, वम्, वर्, वव्, वह्, निर्-वह्, वि-वह्, सम-वह्, विस्, अणु प्प विस्, वीय्, ब्वय्, पडि-सह्, आ सद्, प-मद्, सद्द्, उव सम्, ओ सम्, नि-सम्, वी-सम्, सर्, आ-सर्, प-सर्, ओ सर्, पडि सर्, सव्, सिक्ख्, सिव्व्, निसीय्, सुज्झ, वि-सुय्, सेह्, सोय्, आ-स्सस्, नि स्सस्, प हण्, सम्-ओ हण्, आ हर्, णिर्-हर्, प हर्, हा एते खमादय।

## जोयूज्झाम ।२।३।९४॥

अनयोरन्त्यस्य वकारो वा प्रेरणार्थे परे। जोवेइ। जोएइ। झावेइ। झामेइ।

जोयिति—प्रेरणार्थे वाव इत्यनुवर्त्तते। जोयो यकारस्य वकारे जोवेइ। यकारलोपाभ्या वैकल्पिकत्वेन च रूपमूह्यम्।

## एज्जपरे ज्झाम एणि वा ।३।३।९॥

ज्झामधातो स्वरस्य ह्रस्वो वा स्यादेज्जपरक एणि परे। झवेज्जा, झावेज्जा।

एज्जपर इति—वा ह्रस्व इत्यनुवर्त्तते। एज्ज परो यस्मात्स एज्जपरस्तस्मिन्नेज्जपरे। एणन्यपदार्थे। ज्झामधातोरातो ह्रस्वे झवेज्जा।

## वा रुहादिभ्य एणू च ।२।१।४४॥

एभ्य एण् वा स्यात् प्रेरणायाम् । वाहेइ । पक्षे वहावेइ ।

वा रुहादिभ्य इति—प्रेरणायामित्यनुवर्त्तते । एणो वैकल्पिकत्वेन पक्षे प्रेरणाया सामान्यतो विहित आवेण् भवति । रुहादेरुदाहरणस्याग्रे वक्ष्यमाणत्वाद् वह्धातोरुदाहरणमत्र दर्शितम् ।

## बीहो भिस· ।२।३।१०२॥

बीह्धातोर्भिसादेशः स्यादेणि परे । भेसेइ । भेसेज्जा । बीहावेइ । बीहावेज्जा ।

बीह इति—एणीत्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । भिसादेशे वृद्धौ भेसेइ । पक्षे आवेणि बीहावेइ ।

## बुद्र् आवेणो याद् ।४।२।२॥

बुधातोः परस्यावेणो याडागमः स्यात् ।

बुव इति—बुधातोरावेणि तस्य याडागमे बुयावेइ ।

## एकादेशस्य जादीनामावेणि ।३।३।८॥

जादिधातूनामावेणि परे कृतैकादेशस्य ह्रस्वो वा स्यात् । जवेइ, जावेइ । दवेइ, दावेइ । न्हवेइ, न्हावेइ । मवेइ, मावेइ ।

एकादेशस्येति—ह्रस्वो वेत्यनुवर्त्तते । एकादेशस्यानुपादाने तु ह्रस्व कृत्वापि प्रत्ययसम्बन्धिनाऽऽकारेण पुनर्दीर्घोपत्ति स्यात् । नच ह्रस्वविधानसामर्थ्यान्न दीर्घ इति वाच्य तथा सति जआवेइ इत्यनिष्टापत्ते । नचान्यतरस्य लोपेन निर्वाह इति वाच्यम् । तस्यागतिकगतित्वात् वैकल्पिकत्वेन पक्षे तथा श्रवणप्रसङ्गाच्च । सामान्यसूत्रेणावेणि प्रत्यये पूर्वपरयोर्दीर्घेऽनेन ह्रस्वे जवेइ इत्यादि । जा, दा, न्हा, मा, वा, एते जादय ।

## एणि नस्सः ।३।४।२९॥

नस्सधातोरन्त्यस्य लोपः स्यादेणि परे । नासेइ । नासिज्जा ।

एणीति—लोप इत्यनुवर्त्तते । षष्ठीनिर्दिष्टत्वादन्त्यस्येति लभ्यते । नस्स् धातो समादित्वादेणि प्रत्ययेऽनेनान्त्यस्य सकारस्य लोपे वृद्धौ नासेइ । नासे + इज्जा इत्यत्रैकारस्य लोपे नासेज्जा ।

इणि चेति—प्रेरणार्थे इत्यनुवर्तते। आदेशश्चाय द्वा त । मुञ्चधातोर्विमा दित्यादेणि कृते मुञ्चादेशे वृद्धावुपधाया मोहेइ। अणि तु सोइइ।

## आज्ञायामातः स्मसः साणेण स्सा ।३।१।४७॥

आतः परस्याणेणा सहितस्य स्मस्धातोः स्मादेशः स्यादाज्ञार्थके परे।
अस्मासि, आगासि, अस्माइ, आगाइ।

आज्ञायामिति—अणेणभ्या मह माणेण। सस्य साणेण ओत्त्ववर्णत्वा स्मवादेश। आज्ञाशब्दस्य तदर्थे लक्षणा। अतएवाज्ञार्थके परे इत्युक्तम्। मामा न्यतो विधानाद्वचनद्वये भवति। मिप्रत्ययेऽणेणा सहितस्य धातोः स्मादेशे सयुक्त ह्रस्वे अस्मासि। एवमन्येऽपि। अस्मसेइ। अस्मसइ इत्यादीनि रूपाण्यत्र। आसासि इत्यत्र सयुक्तादेर्लोपे दीर्घ।

## सरादिभ्योऽयण् ।२।१।४७॥

एभ्यो धातुभ्योऽयण् प्रत्ययः स्यात्प्रेरणायाम्। सारयइ। वेसयइ। हारयइ। नवपइ। लुमयइ। फुट्टयइ। छोलयइ। रमयइ।

सरादिभ्य इति—प्रेरणायामित्यनुवर्तते। अयणि सत्युपधावृद्धौ सारयइ। रमयइ इत्यत्र निषेधान्न वृद्धि। मर्, च्छोल्, द्व, सव्, भव्, पीस्, फुट्ट्, रञ्ज्, रम्, लस्, वर, विस्, सर्, हर्, एते सरादयः। आकृतिगण।

## रञ्ज इते च रज ।२।३।९०॥

रञ्जधातोरजादेश स्यादिते प्रेरणार्थके च परे। रजयइ।

रज इति—प्रेरणार्थक इत्यनुवर्तते। आदेशश्च व्यञ्जनान्त। सरादित्वाद यणि सति रजादेशेऽनुपधात्वान्न वृद्धि। इते तु रजिय।

## जेश्च प ।२।१।४३॥

पाधातोर्जेप्रत्यय स्याच्चकाराद्यथाप्राप्तम्। पज्जेइ। पज्जेंति। पियावेइ। पियानए।

जेरिति—चकारोऽत्र प्रत्ययसमुच्चयार्थं। तेनावेणावौ भवत। किन्तु जेप्रत्यये परे पिबादेशाविधानात्सयुक्ते ह्रस्वे पज्जेइ। आद्यो प्रत्यययो परयो प पिबादेशविधानात्पियावेइ। पियावए। तेरेकारोऽच्छादित्वात्।

## अभिवदो वायू ।२।३।९२॥

अभिपूर्वकवद्धातोर्वायादेशः स्यात्प्रेरणार्थे प्रत्यये परे। अभिवाएइ।

अभीति—प्रेरणार्थ इत्यनुवर्त्तते । समादिरत्रादेश् । सम्बन्धार्थकृदन्ते अभिवाइऊण । वर्तमानकृति अभिवायन्तो । अभिवायमाणो ।

## ह्येन्न्तपरे ज्जयि प॰ ।३।१।१६॥

हि एत् न्त इत्येतत्परके ज्जेप्रत्यये परे सति पाधातोरिकार स्यात् । पिज्जे ।

ह्येन्न्तपरे इति—इदित्यनुवर्त्तते । षष्ठीनिर्दिष्टत्वादन्त्यस्यात इकारो भवति । एत्परकज्जे परे पाधातोराकारस्येकारे पिज्जे ।

## हौ ज्जेरात् प॰ ।३।१।४॥

पाधातोः परस्य ज्जेप्रत्ययस्याकारोऽन्तादेश' स्याद् हौ परे । पिज्जाहि ।

हाविति—पाधातोर्ज्जेप्रत्यये तदन्ताद्धिप्रत्यये धातोराकारस्येकारेऽनेन प्रेरणार्थकसम्बन्धिन एकारस्याकारे पिज्जाहि ।

## पात्क्खिववश्च्छ प्रेरणार्थे वा ।२।३।८७॥

पकारोपसर्गात्परस्य क्खिवधातो प्रेरणार्थकप्रत्यये परे च्छादेशो वा स्यात् ।

पच्छावेइ । पक्खिवावेइ ।

पादिति—अनेकवर्णत्वात्सर्वादेश । आवेणि प्रत्यये च्छादेशे पच्छावेइ । अनुपसर्गताया खिवावेइ इत्येकमेव । विभिन्नोपसर्गेऽपि च ।

## अहेरय्य आवेणि न्तिपरे ।३।१।७७॥

अहेः परस्येधातोरयादेशो वा स्यान् न्तिपरक आवेणि परे । अज्झावेइ ।

अज्झयाविंति, अज्झाविंति ।

अहेरिति—न्ति परो यस्मात्स न्तिपरस्तस्मिन् न्तिपरे । वा इत्यनुवर्त्तते । अहिइ+आवेन्ति इत्यवस्थायामनेन धातोरयादेशे 'तरहेभ्यश्चज्झा' इत्यनेन हकारोत्तरेकारस्य झकारे हकारस्य परसवर्णे अज्झयाविंति । मयुक्ते ह्रस्वाभावे अज्झयावेन्ति । अयादेशाभावे अज्झाविंति । ह्रस्वाभावे अज्झावेंति ।

## नेरादावेणि वा ।२।३।१२७॥

नेधातोरन्त्यस्याकारो वा स्यादावेणि परे । उवाडणावेइ । उवाइणेआवेइ ।

नेरिति—आवेणि परे धातोरेकारस्याकारे दीर्घे उवाइणावेइ । उपाती चोपसर्गौ ।

# अथ आख्यातप्रकरणे भावकर्मप्रक्रिया ।

## इज्जस्त्यादौ ।२।१।७१॥

धातोः भावकर्मणोरिज्जः प्रत्ययः स्यात् त्यादौ परे । अच्छिज्जइ । अच्चिज्जइ । अजिज्जइ ।

इज्ज इति—धातो प्रत्ययो भावकर्मणोरिति पदत्रयमानुवृत्ति । भाव क्रिया सा च भावार्थप्रत्ययेनानूद्यते । अतएव तस्या न द्विधा भान भावार्थकत्यले । तस्याश्चासत्त्वभूतत्वेन सख्याद्यन्वयाभावान्न द्विवचनादि तत्र । किन्त्वेकवचनम् । तस्य सामान्यतया विधानेनैकत्वस्यान्वयविवक्षाऽविवक्षयोरभावात् । किञ्च युष्मादिशब्दसामानाधिकरण्याभावादेकवचनमपि प्रथमपुरुषीयमेव । कर्तुस्तृतीया भवति । तस्य त्वेकवचनबहुवचने भवत । कर्म नाम धात्वर्थफलाश्रय । तत्र फलस्य धातुनैव लाभान्नाश्रयमात्र त्याद्यर्थे । तस्य सत्त्वभूतत्वेन सख्याद्यन्वयो भवत्येव । अतएव सर्वत्र सर्ववचनानि तत्र । कर्तुस्तृतीयाऽत्रापि । अनुक्तत्वस्य साम्यात् । कर्मणस्तु प्रथमा । उक्तत्वेन द्वितीयाया अप्राप्ते । अत्राकर्मकाद्भावे सकर्मकात्कर्मणि प्रत्यय । अच्छिज्जइ । अच्छधातो कर्मणि तिप्रत्यये मध्येऽनेनेज्जप्रत्यय । प्रेरणार्थकप्रत्ययान्तात् अच्छाविज्जइ । अच्चाविज्जइ । अजाविज्जइ । कारिज्जइ इत्यादि । सर्वत्रेज्जप्रत्यये परे प्रेरणासम्बन्धिन एकारस्य "ए प्रत्ययस्येरिवडेदिल्लेति" सूत्रेण लोप ।

## किणादिभ्यो ज्ज ।२।१।७२॥

किणादिधातुभ्यो ज्ज प्रत्यय स्यात्त्यादौ भावकर्मणो । किज्जइ । चिज्जइ । छिज्जइ । पराइज्जइ । भिज्जइ । मिज्जइ ।

किणादिभ्य इति—त्यादावित्यस्य भावकर्मणोरित्यस्य चानुवृत्ति । विशेषविहितत्वादिज्जापवाद । किणधातोस्तिप्रत्यये मध्ये ज्जप्रत्यये व्यञ्जनत्रयसयुक्ते पूर्वस्य णकारस्य लोपे सयुक्तादे वकारस्य च लोपे किज्जइ । एवमन्यत्रापि । किण्, कर्, चिण्, छिंद्, परा-जिण्, भिंद्, मर्, एते किणादय ।

## कत्तादिभ्यो बहुलमत् ।२।१।७३॥

कत्तादिभ्योऽत् स्याद्बहुल त्यादौ भावकर्मणो ।

कत्तादिभ्य इति—अनुवृत्ति पूर्ववत्। बहुलग्रहणात्कचिन्नित्य कचिद्विकल्पेन। कर्धातोरितिप्रत्ययेऽनेन भ्यध्येऽत्प्रत्यये स्वरस्य करादीनामीरिति सूत्रेण ककारोत्तराकारस्येकारे कीरइ। कत्त्, कर्, क्लिव्, अधि-गम्, गिण्ह्, घस्, चकम्, च्छण्, जिण्, जुज्, डह्, त्थुण्, स दिस्, दय्, दह्, धरिस्, धुण्, नस्स्, पुर्, बध्, भण्, भज्, भुज्, मुच्, रभ्, रुभ्, लिप्, लुप्, लोक्, वच्च्, वह्, सिंच्, सुण्, हण्, हर्, हस् एते कत्तादय।

## ज्जे करादीनामि· स्वरस्य ।३।१।१५॥

करादिसम्बन्धिनः स्वरस्येकारो वा ज्जप्रत्यये। किज्जइ। कज्जइ। गिज्जइ, गज्जइ। धिज्जइ, धज्जइ।

ज्जे करादीनामिति—वेत्यनुवर्त्तते। बाहुलकाठदभावे ज्जप्रत्ययेऽनेन ककारोत्तराकारस्येकारे व्यञ्जनत्रयसयोग आद्यव्यञ्जनरेफस्य लोपे किज्जइ। वैकल्पिकत्वेनेकाराभावे कज्जइ। एव च रूपत्रय सिद्धयति। गाधातो गिज्जइ। धर् धातोर्धिज्जइ।

## आतस्तुड इज्जे ।३।२।५॥

आत' परस्य तुड्धातोरुकारस्य वृद्धिः स्यादिज्जे। आतोडिज्जइ। आतोडिज्जामि।

आत इति—वृद्धिरित्यनुवर्त्तते। आपूर्वकतुड्धातो कर्मणि इज्जप्रत्यये वृद्धौ आतोडिज्जइ। षष्ठीनिर्दिष्टत्वादन्त्यस्य तु न वृद्धेर्व्यञ्जने बाधादिति परिशेषादुकारस्य। सामान्यतो विधानात् कृत्यपि भवति आतोडिज्जमाणो इत्यादि।

## अति कत्तुडहद्दहामिक् ।४।१।५४॥

एषा धातूनामिगागमः स्यादति परे। किचइ। डज्झइ। दज्झइ। गिज्झइ।

अतीति—कत्त्-अ-ति इति स्थिते वक्ष्यमाणसूत्रेणेकारे इगागमे सति 'तरहेभ्यश्चजझा' इति सूत्रेण तात्परस्येकारस्य चकारे व्यञ्जनत्रयसयुक्ते सति पूर्वस्य लोपे शेषतकारस्य परसवर्णे चकारे सयुक्ते ह्रस्वे किचइ। डह्धातो डज्झइ। दह्धातो दज्झइ। गिण्ह्धातोर्गिज्झादेशे गिज्झइ।

## स्वरस्य करादीनामी· ।२।३।१४॥

एषा स्वरस्येकारः स्यादति परे। कीरइ। हीरइ। दीसइ। दिसिज्जइ। खज्जइ। नज्जइ। दुज्जइ। हुज्जइ।

स्वरस्येति—अतीत्यनुवर्त्तते। हर्धातोरत्प्रत्ययेऽनेनेकारे हीरइ। तदभावे

हरिज्जइ । दिस्धातोरति दीसइ । इज्जे तु दिस्सिज्जइ । दण्धातो दज्जइ । नह् धातोर्नज्जइ । डुस्धातोर्डुज्जइ । हुण्धातोर्डुधातोर्वा हुज्जइ ।

## गमादीनामति स्यादौ ।२।३।२७॥

एषामन्त्यस्य द्वित्वं स्यात्यादिपरकेऽति परे । गम्मइ । भज्जइ, भण्णइ । लब्भइ ।

गमादीनामिति—द्विरित्यनुवर्त्तते । षष्ठीनिर्दिष्टत्वादन्त्यस्येति लभ्यते । गम् धातोरति मकारस्य द्वित्वे गम्मइ । भण्धातोर्भण्णइ । लभ्धातोर्लब्भइ । परसवर्णेन वकार । गम्, गिण्ह्, क्खिव्, च्छण्, जिण्, जुज्, त्थुण्, दिस्, धम्, धुण्, बध्, भण्, भज्, भुज्, मुच्, रम्, रुभ्, लभ्, लिप्, लुप्, लोक्, सिच्, सुण्, हण्, हस्, एते गमादय ।

## क्खिवः प ।२।३।७॥

क्खिव्धातो' पकारोऽन्तादेश स्यादति परे । खिप्पइ ।

क्खिव इति—अतीत्यनुवर्त्तते । अन्त्यस्य पकारे गमादित्वाद् द्वित्वे खिप्पइ ।

## गिण्हो घेप' ।२।३।१७॥

गिण्ह्धातो घेपादेश' स्यादति परे । घिप्पइ, घेप्पइ । घिप्पेज्ज ।

गिण्ह इति—अतीत्यनुवर्त्तते । पकारान्तोऽयमादेश । घेपादेशेऽति द्वित्वे सयुक्ते ह्रस्वे घिप्पइ । ह्रस्वाभावे घेप्पइ । ननु गमादौ घेप पाठाभावेन कथ द्वित्वमिति चेन्न । गिण्ह पाठमत्त्वेन तत्स्थानिकघेपस्तद्ग्रहणेन ग्रहणसम्भवात्त च्छङ्काया अनवकाशात् ।

## त्थुणधुणसुणां व ।२।३।१०॥

एषामन्त्यस्य वकार' स्यादति । थुव्वइ । धुव्वइ । सुव्वइ ।

त्थुणधुणिति—अनुवृत्ति पूर्ववत् । अतिपरे वकारे गमादित्वाद् द्वित्वे थुव्वइ । धुण्धातोर्धुव्वइ । सुण्धातो सुव्वइ ।

## बधो झ ।२।३।९॥

बध्धातोरन्त्यस्य झकारोऽति परे । बज्झइ ।

बध इति—अतीत्यनुवर्त्तते । अति बध्धातोर्धकारस्य झकारे गमादित्वाद् द्वित्वे परसवर्णेन जकारे सयुक्तेऽनुस्वारलोपे बज्झइ । आदेशे अकार उच्चारणार्थं ।

## हणो मो वा ।२।३।८॥

हण्धातोर्मकारो वा स्यादति परे । हम्मइ । हन्नइ । हम्मिस्सइ । हम्मिहिइ, हम्मिसु ।

हण इति—अनुवृत्तिस्तु पूर्ववत् । हण्धातोरति तस्मिन्ननेन मकारे गमादित्वाद् द्वित्वे हम्मइ । मकाराभावे णस्य द्वित्वे हन्नइ । आदेशेऽकार उच्चारणार्थ । हम्म+इहिइ इत्यत्र लोपोऽन्यतरस्येत्यकारलोपे हम्मिहिइ ।

## वहो वोज्झः ।२।३।१६॥

वह्धातोर्वोज्झादेशः स्यादति भावकर्मणोः । वुज्झइ, वोज्झइ ।

वह इति—अतीत्यनुवर्त्तते । अनेकवर्णत्वात् सर्वादेश । आदेशश्च व्यञ्जनान्त । सयुक्ते ह्रस्वे वुज्झइ ।

## वा गादिभ्यो य ।२।१।७४॥

एभ्यो यः प्रत्ययो वा स्याद्भावकर्मणोस्त्यादौ । णायइ । नज्जइ । नज्जति ।

वा गादिभ्य इति—भावकर्मणो त्यादावित्यनुवर्त्तते । यप्रत्यये णायइ । जप्रत्यये सयुक्ते ह्रस्वे नज्जइ । नज्जति । गा, खाव, धा, श्रा, हा एते गादय । आकृतिगण ।

## गाधाहां ।३।१।१८॥

एषामन्त्यस्यैकारः स्याद्ये परे । गीयइ । धीयइ । हीयइ, हीयए ।

गाधाहामिति—ये इत्यनुवर्त्तते । यप्रत्यये आत ईकारे गीयइ । धाधातोर्धीयइ । तेरिकारस्यैकारे हीयए ।

## लक्खादिभ्यो यस्य ।४।२।२८॥

एभ्यो यप्रत्ययस्येडागमो भवति । लक्खियइ, लक्खिज्जइ । धाडियइ, धाडिज्जइ । घट्टियइ, घट्टिज्जइ । अभिघट्टिय । खावियइ ।

लक्खादिभ्य इति—इडित्यनुवर्त्तते । लक्ख्धातोर्यप्रत्यये तस्येडागमे लक्खियइ । पक्षे इज्जप्रत्यय । हेर्लुकि अभिघट्टिय । लक्ख्, धाड्, घट्, खाय एते लक्खादय । खावेतिखादनार्थकखाधातुविहितप्रेरणार्थकावप्रत्ययान्तनिर्देश ।

## जिणश्च ।२।३।१५॥

जिणोऽन्त्यस्य चकार. स्यादति परे । जिचइ ।

जिण इति—अतीत्यनुवर्त्तते। तस्मिन् परेऽनेन णकारस्य चकारे गमादित्वाद् द्वित्वे जिच्चइ।

## जिणादेदेज्जयोर्मा ।३।१।६३॥

भावप्रत्ययान्ताज्जिण परयोरेदेज्जयोर्मादेशः स्यात्। जिच्च।

जिणादिति—भावप्रत्ययादित्यनुवर्त्तते। तत्र जिणादित्यस्य विशेषणम्। विशेषणेन तदन्तविधिना भावप्रत्ययान्तादिति लभ्यते सित्त्वात्सर्वादेश। नत्वनेकवर्णत्वात्। तत्राकारस्योच्चारणार्थत्वात्। जिण्धातोरेत्प्रत्यये मध्येऽत्प्रत्यये "जिणश्च" इत्यनेन णकारस्य चकारे गमादित्वाद्द्वित्वेऽनेनैतो मसादेशेऽनुस्वारे जिच्च। एवमेज्जप्रत्ययेऽपि बोध्यम्। अतएव "कहण्णु जिच्चमेलिक्ख जिच्चमाणो न संविदे" इत्युत्त० ७।२२॥ सङ्गच्छते।

## इज्जे तरो वा ।४।१।३२॥

तर्धातोष्टेर्लोपो वा स्यादिज्जे परे। तिज्जइ। तरिज्जइ। तिज्जेज्जा। तरिज्जेज्जा।

इज्ज इति—टेर्लोप इति पदद्वयमनुवर्त्तते। इज्जप्रत्यये टेररो लोपे तिज्जइ। पक्षे तरिज्जइ।

## द्वो दुः ।३।१।१९॥

द्वधातोर्दु इत्यादेश• स्याद् ये परे। दुयइ। दविज्जइ।

द्व इति—ये इत्यनुवर्त्तते। द्वधातोर्यप्रत्यये दुइत्यादेशे दुयइ। इज्जप्रत्यये दविज्जइ।

## धरिसो धास ।२।३।१९॥

धरिस्धातोर्धासादेश• स्यादति प्रत्यये परे। धासति।

धरिस इति—अतीत्यनुवर्त्तते। अनेकवर्णत्वात्सर्वादेशोऽय व्यञ्जनान्त। अति प्रत्यये धासादेशे धासइ।

## उदोपडिभ्यो मो मिणो ज्जे ।२।३।२०॥

उद्ओपडिभ्यो माधातोर्मिणादेश' स्याज्ज्जे परे।

उदोपडिभ्य इति—उत्पूर्वकमाधातोस्तिप्रत्यये मध्ये ज्जे सति ज्जे करादीना स्वरस्येत णवारोत्तराकारस्यैकारे उम्मिणिज्जइ। केवलात्तु मिज्जइ।

वच इति—अतीत्यनुवर्त्तते । अति सति वच्धातोर्वुचादेशे गमादित्व
द्वित्वे वकारस्य यकारे लोपे उच्चइ । यकाराभावे वुच्चइ । ण्कारे कृते उच्चए
यकारलोपस्तु नित्यमेव । तेन न युच्चइ इत्यपि । तप्रत्ययस्योदाहरण तु उत्तो वुत्तो इति

## हरोऽत एत्यादौ वा ।३।१।५८॥

हर्धातोः परस्यात एकारो वा त्यादौ परे भावकर्मणोः । हीरेइ, हीरइ
हीरेमाणो, हीरमाणो । हरिज्जइ ।

हर इति—हर्धातोर्न्तिप्रत्यये मध्येऽति प्रत्यये 'स्वरस्य करादीनामी' इ
*सूत्रेणेकारादेशेऽनेनाकारस्यैकारे हीरेइ, तदभावे हीरइ । 'अत्कत्तादिभ्य' इत्य*
बहुलग्रहणात्कचिद्विकल्पेन भवतीत्याह हरिज्जइ इति । अत्रात्प्रत्ययाभावे इज्ज
प्रत्ययो भवति ।

## त्यादौ घसोऽण्णित् ।२।४।५१॥

घस्धातोः परस्यात्प्रत्ययो णित्स्यात्त्यादौ । घासइ ।

त्यादौ घस इति—अतो णित्त्वे णित्वाद् वृद्धौ घासइ ।

## भावप्रत्ययाल्लभ एर्वा ।३।१।६२॥

भावप्रत्ययान्ताल्लभ्धातोः परस्य न्तिप्रत्ययस्यैकारोऽन्तादेशः स्यात्
लब्भन्ते, लब्भंति ।

भावप्रत्ययादिति—न्तेरित्यनुवर्तते । लभ्धातोर्न्तप्रत्यये मध्येऽत्प्रत्ययेऽ
नेन न्तिसम्बन्धिन इकारस्यैकारे गमादित्वाद् द्वित्वे पूर्वभकारस्य परसवर्
लब्भन्ते इत्यादि ।

इति भावकर्मप्रक्रिया ।

इतिश्रीलोङ्कागच्छान्तर्गतलिम्बडीसम्प्रदायतिलकायमानाचार्यवर्यपूज्य-
पादश्रीगुलाबचन्द्रजित्स्वामिचरणाम्बुजचञ्चरीकमुनिरत्नचन्द्र-
विरचितायामर्थप्रकाशिकाभिधाया जैनसिद्धान्त-
कौमुदीस्वोपज्ञव्याख्यायामाख्यातप्रकरण
समाप्तम् ।

# अथ कृदन्तप्रकरणम् ।

**कृत् ।२।२।४८॥**

धात्वधिकारे विहिताः प्रत्ययाः कृत्संज्ञाः स्युः ।

कृदिति—अधिकारसूत्रमिदम् । वक्ष्यमाणा इति शेषः । प्रत्यय इत्यनुवर्त्तते । धातोरिति च । तत्फलितमाह धात्वधिकारे इति ।

**एककर्त्तृकयोः पूर्वकाले क्त्वोमूणेयाः ।२।२।४९॥**

एककर्त्तृकयोर्धात्वर्थयोर्मध्ये पूर्वकालिकधात्वर्थे विद्यमानाद्धातोः क्त्वा उम् ऊण इय एते प्रत्यया यथाप्रयोगं स्युः । अच्छित्ता । अच्छिउं । अच्छिऊण । अच्छिय ।

एककर्त्तृकयोरिति—धातोरित्यधिकारेऽपि एकः कर्त्ता ययोरिति विग्रहे यत्पदेन धात्वर्थ एव गृह्यते । न तु धातुः । तस्य समानकर्त्तृकत्वासम्भवात् । अतो धात्वर्थान्यपदार्थकबहुव्रीह्यभिप्रायेणोक्तं धात्वर्थयोर्मध्ये इति । अत्र निर्द्धारणे षष्ठी । अतएव पूर्वकाल इत्यत्र बहुव्रीहिः समासः सिद्धः । पूर्वः कालो यस्येति विग्रहः । पूर्वश्चासौ कालश्चेति कर्मधारयस्तु न । तथा सति पूर्वकालस्य एककर्त्तृकरूपपदवाच्यघटकत्वाभावेन निर्द्धारणत्वाभावादेककर्त्तृकयोरित्यत्र निर्द्धारणे षष्ठी न स्यात् । स्वघटितसमुदायात्स्वेतरसमुदायघटकव्यावृत्तधर्मेण स्वस्य पृथक्करणस्यैव निर्द्धारणत्वात् । तथाच तादृशबहुव्रीहिसिद्धार्थमाह—पूर्वकालिकधात्वर्थे इति । पूर्वकाले इत्यत्र वर्त्तमानादिति शिष्यते अतएव कारकविभक्तिः । धातोरित्यनुवर्त्तते । तत्सिद्धमाह विद्यमानाद्धातोरिति । सामानाधिकरण्योत्तरकालिकत्वादिरूपसम्बन्धविशेषतात्पर्यग्राहकास्त्यादयः । तादृशसम्बन्धग्राहकत्वमेवैषां सम्बन्धार्थकत्वम् । सामानाधिकरण्यन्तु एककर्त्तृकयोरित्यनेनापि लभ्यते । यथा भुक्त्वा व्रजइ इत्यत्र भोजनसमानाधिकरणं तदुत्तरकालिकं व्रजनमिति बोधः । क्वचित्सामानाधिकरण्यं जनकत्वञ्च सम्बन्धः । यथा भुक्त्वा पयइ इत्यादौ भोजनसमानाधिकरणो भोजनजनकः पाकः । क्वचिच्च सामानाधिकरण्यं जन्यत्वञ्च सम्बन्धः । यथा भुक्त्वा तिप्तो इत्यादौ भोजनसमानाधिकरणा भोजनजन्या तृप्तिरिति बोधः । क्वचित् सामानाधिकरण्यं व्याप्यत्वञ्च सम्बन्धः । यथाऽहि-

ज्जित्ता चिट्ठइ । मुद्द पियादाय सुनइ इत्यादौ अध्ययनसमानाधिकरणा तत
स्थितिरित्यान्वयबोध । व्याप्यत्वस्वीकारादेव नाध्ययनव्यादानयोर्भिन्नकालि
तादृश प्रयोग । 'सज्झाय पट्ठवित्ताण । विसमेज्ज खण मुणी' इत्यस्य स्व
प्रस्थाप्य विश्राम्येत क्षण मुनिरिति छाया । तथाच स्वाध्यायकर्मकोपस्थाप
व्यापारसमानाधिकरणतदुत्तरकालिकमुनिकर्तृकक्षणाधिकरणकविश्राम इष्टस
मिति बोध । अत्र सामानाधिकरण्यमुत्तरकालिकत्वञ्च भासेते । अच्छू
स्त्ताप्रत्यये रसादित्वादिडागमे अच्छित्ता । उमि प्रत्यये अच्छिउ । उण
अच्छिऊण । इयप्रत्ययेऽच्छिय ।

## अजादिभ्यस्त्त. ।४।२।४६॥

अजादिगणपठितेभ्यः परस्य त्ताप्रत्ययस्यैडागम स्यात् । अब्भगे
अचेत्ता । जाणेत्ता । जाणित्ता । उड्ढेत्ता । उड्ढित्ता । हीलेता । करावे
कारावेत्ता । कारेत्ता । कारित्ता ।

अजादिभ्य इति—एडित्यनुवर्त्तते । रसादीनामित्यनेन प्राप्त इट् या
नेन । अभिपूर्वकाज्धातोस्त्ताप्रत्ययेऽनेनैडागमे 'अभे रजो ग' इति ज
गकारे अब्भगेत्ता । अच्धातो अचेत्ता । जाण्धातो जाणेत्ता । सयुक्ते
जाणित्ता । एवमन्यत्रापि यत्र यत्रेकारविशिष्ट रूप दृश्यते तत्र सयुक्ते ह्रस्वो बे
प्रेरणार्थकप्रत्ययान्ता सर्वेऽप्यत्र गणे ज्ञेया । अज्, अच्, उक्स्, एड्, ओयव्
कप्प्, कर, क्सव्, प+क्खाल्, खिस्, गाह्, उद्+गिल्, अव+गुण्,
गाह्, घट्ट्, घात्, चित्, चूर्, च्छोड्, च्छोल्, निर्+जा, जाण्, जोय्,
उत्+ट्ठा, ण्णव्, उद्+दस्, अव+दाल्, उद्+धस्, परि+धा, उद्+
उव+पज्ज्, पार्, पास्, पीह्, पुच्छ्, पूर्, प+प्फोड्, भर्, भास्, आ+
णि+मत्, आ+मत्, प+मज्ज्, मह्, मुच्, याम्, रच्, आ+राह्, आ+
पच्चो+रुह्, ल्व्, अणु+लिप्, लुह्, वड्ढ्, वट्ट्, वर्, वेद्, वि+अ
व्वय्, सक्क्, सज्ज्, उद्+सव्, सिच्, सुण्, परि+हण्, स+हर्,
हील्, एते अजादय ।

## अज्जोऽणक् त्ति ।४।१।५५॥

अज्ज्धातोरणगागमः स्यात् त्तापरे । अज्जणित्ता ।

अज्ज इति—अत्रागमोऽणक् कित्त्वलिङ्गात् । अज्ज्धातोस्त्ताप्रत्यये इड

सादृश्याभेदभावशङ्का ।

## उदश्चिणस्त्त ।४।२।४१॥

उद् परस्य चिणुगंबन्धिनस्त्वाप्रत्ययस्य नेट् । उचित्ता ।

उद् इति—नेडित्यनुवर्तते । अनेनेटो निषेधे । परसवर्णेन णकारस्य नकारे उपसर्गान्तकारस्य चकारे पूर्वस्य परस्य च लोपे उचित्ता ।

## त्तप्त्तोर्वा प. ।४।२।३१॥

पाधातुसम्बन्धिनोस्त्तप्त्वाप्रत्यययोरिटागमो वा स्यात् । पिबित्ता, पित्ता ।

त्तप्त्तोरिति—इडित्यनुवर्तते । पाधातोस्त्वाप्रत्यये इडागमे पिबादेशे पिबित्ता । तदभावे बकारलोपे पित्ता ।

## उपसर्गाद्रंभस्त्ति ।४।१।४०॥

अस्मात्परस्य रभ्धातोरनुस्वारस्य लोपः स्यात् त्तापरे । आरभित्ता ।

उपसर्गादिति—अनुस्वारस्य लोपः इत्यनुवर्तते । आपूर्वकरभ्धातोस्त्ता-प्रत्यये इडागमेऽनेनानुस्वारलोपे आरभित्ता । अन्यत्र रंभित्ता । रंभिउ । रंभि-ऊण । रंभिय ।

## लभोऽति ।४।२।१६॥

लभ्धातोर्ममागमो वा स्यादति त्ताप्रत्यये च परे । लभित्ता । लंभित्ता ।

लभ इति—मम् चीत्यनुवर्तते । लभ्धातोस्त्ताप्रत्यये इडागमे धातोर्ममागमे लंभित्ता । मित्त्वादन्त्यस्वरात्परो मम् । ममभावे लभित्ता ।

## अभेस्त्ति ।२।४।४०॥

अभे परस्य वड्ढ्धातोरकारस्योकारः स्यात् त्तापरे । अभिवुड्ढित्ता ।

अभेरिति—वड्ढ् इत्यस्य इत्यस्योदित्यस्य चानुवृत्तिः । अभिपूर्वकवड्ढ्-धातोस्त्ताप्रत्यये इडागमेऽनेन धातोरत उकारे अभिवुड्ढित्ता । अभिवड्ढिउ । अभिवड्ढिय । निरुपसर्गवत् । उपसर्गान्तरवश ।

## नेस्ततिमाणेषु च ।२।४।४१॥

ने परस्य वड्ढ्धातोरकारस्योकारः स्यात्ततिमाणपरेषु त्तापरे च । णिवुड्ढित्ता ।

नेरिति—अनुवृत्तिः पूर्ववत् । णिपूर्वकवड्ढ्धातोर्णिवुड्ढित्ता । नस्य ण ।

## ओ॰ समो वस्त्तेतयो॰ ।२।३।८६॥

ओः परस्य सम्धातोर्मकारः स्यात् त्ता इत प्रत्यययोः परयोः । ओसवित्ता ।

ओरिति—षष्ठीनिर्देशेनान्त्यस्य भवति वकारः । ओपूर्वकसम्धातोस्त्ताप्रत्ययेऽनेन मकारस्य वकारे इडागमे ओसवित्ता । ओसमिऊण । ओसमिउ । ओसमिय । समित्ता । इत्याद्यन्यत्र ।

## पवे॰ सव सुरित्ति ।३।१।९०॥

पवे॰ परस्य सव्धातोः सुरादेश॰ स्यादिद्सहितत्ताप्रत्यये परे । पविसुइत्ता ।

पवेरिति—पविपूर्वकसव्धातोस्त्ताप्रत्यये इडागमेऽनेन सव्धातो सु इत्यादेशे प्रकृतिभावे पविसुइत्ता ।

## किट्टादिभ्यस्त्तस्तयोर्यो वा ।२।३।९५॥

किट्टादिभ्यो धातुभ्यो विहितस्य त्ताप्रत्ययस्य तकारद्वयस्य यकारादेशो वा स्यात् । किट्टिया । किट्टित्ता । पेहिया । पेहित्ता ।

किट्टादिभ्य इति—किट्ट्धातोस्त्ताप्रत्यये इडागमे तकारद्वयस्यानेन यकारे किट्टिया । विधेये सख्याया विवक्षितत्वेन द्वयो स्थाने एकत्वमख्याविशिष्टो यो भवति । अतएव न यद्वयश्रवणम् । पपूर्वकेक्ख्धातोरिहादेशे पेहिया । किट्ट्, प+इह्, गाह्, सम+घट्ट्, सम्+चिण्, जाण्, उद्+जाल्, अभि+जुज्, प+णुल्ल्, तक्क्, ओ+तार्, आ+तार्, उत्+थभ्, तुर्, ढस्, धुण्, पज्ज्, पाट्, पील्, फास्, वुज्झ, भुज्, दु+रुह्, लघ्, लन्, लभ्, ला, लुच्, पडि+लेह्, वज्ज्, वार्, निर्+वाव्, सक्क्, प+सर्, सव्, सिच्, सेह्, सोह्, हण्, हर्, हुण् एते किट्टादय । आकृतिगण ।

## त्तित्थभस्थस्य ठ॰ ।३।४।१०॥

त्थभ्धातोस्थस्य ठो वा त्तापरे । उट्ठंभिया । उत्थभिया ।

त्तीति—वेत्यनुवर्त्तते । त्थभ्धातोस्त्ताप्रत्यये तद्वयस्य यकारे इडागमेऽनेन थकारस्य ठकारे तकारस्य लोपे परसवर्णे उट्ठभिया । त्थभ्धातु प्राय उत्पूर्वक एव दृश्यते ।

## तक्कादिभ्यो णइ्णमकौ त्त ।४।२।६॥

एभ्य॰ परस्य त्ताप्रत्ययस्य णक् णमक् इत्येतावागमौ स्त॰ । तक्कियाण । तक्कि-

याण । धुणियाण । धुणियाण । परिपीलियाण । परिपीलियाण । वज्जियाण । वज्जियाण । सविियाण । सवियाण । मवियाण । सवियाण ।

तकादिभ्य इति—आगमे मकारोत्तरोऽकार उच्चारणार्थं । वेत्यनुवर्त्तते । ककारस्तु क्त्वार्थं । तक्धातोस्त्वाप्रत्यये णगागमे तद्वयस्य यकारे इडागमे तक्कियाण । णमकि तु तकियाण । पक्षे यकाराभावे तक्कित्ताण । तक्क्, धुण्, पील्, ल्न्, वज्, सव् एते तकादय ।

## भिदादिभ्यस्त ।४।२।२३॥

एभ्यः परस्य त्वाप्रत्ययस्येडागमो वा स्यात् ।

भिदादिभ्य इति—इड्त्यनुवर्त्तते । क्त्वादीनामित्यनेन नित्य प्राप्त इड्विकल्प्यते । भिद्, गम्, भुज्, मन्न्, वम्, हण् इत्येते भिदादय ।

## वमादिभ्योऽनिटस्त ।४।१।३॥

एभ्यः परस्यानिटस्त्वाप्रत्ययस्यादेस्तकारस्य लोप. स्यात् । वता । भेत्ता । भित्ता । भोत्ता । गता । हता ।

वमादिभ्य इति—आदर्लोप इत्यनुवर्त्तते । वम्धातोस्त्वाप्रत्यये तकारलोपे मकारस्यानुस्वारे वता । भिन्द्धातोस्त्वाप्रत्यये तस्यादेस्तकारस्य लोपे त्रयाणामित्यनुस्वारलोपे दकारस्य परसवर्णे इदुदुपधादिति णिद्वद्भावाद्वृद्धौ भेत्ता । सयुक्ते ह्रस्वे भित्ता । एव भुज्धातो भोत्ता । गम्धातोर्गता मकारस्यानुस्वार । हण्धातोर्णकारस्य नकारे तस्यानुस्वार हता । पक्षे इटि भिन्दित्ता, भुजित्ता, गमित्ता, वमित्ता, हणित्ता इत्यादि । वम्, भिद्, भुज्, मन्न्, गम्, हण् एते वमादय ।

## मन्नस्त्ति मम् वा ।२।३।१५२॥

मन्न्धातोर्ममादेशो वा स्यात्त्वाप्रत्यये परे । मता । मत्ता ।

मन्न इति—अनेकवर्णत्वात्सर्वादेश । मन्न्धातोस्त्वाप्रत्यये तस्यादेर्लोपेऽनेन ममादेशे मकारस्यानुस्वारे मता । ममादेशाभावे त्रयाणामिति नकारद्वयलोपे मत्ता । पक्षे इटि मन्नित्ता ।

## मुज्झो मोहोऽतव्वे कृति ।२।३।१४०॥

मुज्झधातोर्मोहादेश स्यात्तव्वभिन्ने कृति परे । मोहित्ता । मोहिउ । मोहिऊण । मोहिय । मुज्झितव्व ।

मुज्भ इति—आदेशोऽय हान्तोऽनेकवर्णत्वात्सर्वादेश । अतव्ये इत्यत्र तव्यभिन्नतव्यमन्यप्रत्ययग्रहणेन कर्तृवाचकन्तमाणभिन्नकर्मभाववाचकस्यैव ग्रहणेन न तयोर्ग्रहणम् । तेन मुञ्झन्तो । मुज्यमाणो इति सिद्धयति । मुज्झ्धातोस्त्ताप्रत्यये इडागमे मोहादेशे मोहित्ता । एवमन्येऽपि । अतव्ये किम् । मुज्झितव्व ।

## इकाण्णादाभ्यञ्चा. ।२।३।१३७॥

एभ्य' परस्य त्ताप्रत्ययस्य चादेशः स्यात् । इचा । णचा । दचा ।

इकेति—त्त इत्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । इधातोस्त्ताप्रत्ययस्य चादेशे इचा । ण्णाधातोश्चादेशे सयुक्ते ह्रस्वे णचा । दाधातो सयुक्ते ह्रस्वे दचा ।

## चयादिभ्य' सेटो वा ।२।३।१३८॥

चयादिधातुभ्यः परस्य सेटस्त्ताप्रत्ययस्य चादेशो वा स्यात् ।

चयादिभ्य इति—त्तश्चा इत्यनुवर्त्तते । चय्, ठा, पा, भिद्, भुज्, सुण् एते चयादय ।

## इ. कादीनां स्वरस्य च्चि ।३।१।३९॥

कादिधातूना स्वरस्येकारादेश स्याच् चाप्रत्यये । किचा । चिचा । चइत्ता । ठिचा । ठाइत्ता । पिचा । पिबित्ता । पिइत्ता । बुचा । बुइत्ता । भिचा । भित्ता । भिंदित्ता । भोचा । भुचा । भुजित्ता । सोचा । सुचा । सुणित्ता ।

इरिति—चीति सप्तम्यन्तम् । का, चय्, ठा, पा, एते कादय । काधातोस्त्ताप्रत्ययस्य चादेशे इकारे किचा । चय्धातोस्त्ताप्रत्ययस्य सेटो विकल्पेन चादेशेऽनेनेकारे चिचा । पक्षे चइत्ता । एव ठाधातो ठिचा । ठाइत्ता । पाधातो पिचा । पिबादेशे पिबित्ता, पिइत्ता । बुधातोश्चादेशे बुचा, पक्षे बुइत्ता । भिद् धातोश्चादेशे त्रयाणामित्यनेनानुस्वारदकारयोर्लोपे भिचा । पक्षेऽनिटि त्ताप्रत्यये भित्ता, सेटि भिंदित्ता । भुज्धातोस्त्ताप्रत्यये भुजो त्यादावित्यनुस्वारलोपे इदुदुपधान्तिति त्ताप्रत्ययस्य णिद्वद्भावे वृद्धौ चादेशे त्रयाणामिति जकारलोपे भोचा । सयुक्ते ह्रस्वे भुचा । आदेशाभावे भुजित्ता । सुण्धातोस्त्ताप्रत्यये णिद्वद्भावाद्वृद्धौ चादेशे णलोपे सोचा । सयुक्ते ह्रस्वे सुचा । आदेशाभावपक्षे इडेडो सत्यो सुणित्ता, सुणेत्ता ।

## समेपेहाभ्यश्चश्च ।२।३।१३९॥

एभ्य' परस्य त्ताप्रत्ययस्य चचादेशौ पर्यायेण स्याताम् । समेच । समेचा । पेच । पेचा ।

सम इति—स इत्यनुवर्त्तते । षयारायां इति समुणीयते । समे इत्यनेन सम् आपूर्वक इधातुर्गृह्यते । पे इत्यनेन पपूर्वक इधातुश्च । समेस्त्वाप्रत्यये तस्य श्वादेशे समश समेशा । सयुक्ते ह्रस्वे समिश समिशा इत्यपि बोध्यम । एव पेश, पेशा ।

## ह एश्च च्चो ।२।३।५१॥

ह्वाधातोरेकारोन्तादेश स्यात् श्वशापरयो । हृश, हेशा ।

ह इति—षष्ठीनिर्देशादन्त्यस्यादेश । श्व शाश्च शशौ तयो ।

## उवातिपडिभ्यस्त्तश्च ।३।१।८१॥

एभ्य परस्मादिधातो परस्य त्वाप्रत्ययस्य श्चादेश स्यात् । उवेच । समुविच ।

उवेति—च इत्यनुवर्त्तते । अकारान्तोयमादेश नित्य भवतीति उव + इत्वा इत्यत्र च्चादेशे वृद्धौ उवेन्च । सयुक्तह्रस्वे समुविन्च ।

## च्चे पडेरुदौ ।३।२।२९॥

पडेः परस्मिन्निधातौ परे पूर्वपरयोरुकारो वा स्यात् च्चे परे । पडुच ।

च्च इति—वा पूर्वपरयोरित्यनुवर्त्तते । पडि + इश इत्यत्र डकारोत्तरेकार-धातुरूपेकारयोरुकारादेशे पडुन्च । वैकल्पिकत्वादुकाराभावपक्षे ।

## अतिपडिभ्या यश्च्चे ।३।१।८२॥

अतिपडिभ्या परस्येधातोर्य इत्यादेश स्यात् च्चे परे । अइयच । पडियच ।

अतीति—परित्यनुवर्त्तते । अकारान्तोयमादेश । अतिपूर्वेधातोस्त्वा-प्रत्यये तस्य श इत्यादेशेऽनेनेधातोर्ये तकारस्य यकारे लोपे अइयश । पडिपूर्वके धातो पडियश ।

## पतेर्यागित्त्वि ।४।१।६१॥

पतेरुपसर्गस्य यागागम स्यात् त्वापरक इधातौ परे । पतियाइत्ता ।

पतेरिति—इत्वीत्यत्र इधातुस्त्वाप्रत्ययस्तत्र सप्तम्येकवचनम् । त्वापरक इधा-ताविति तदर्थ । पति + इत्ता इति स्थिते पतेराविति सूत्रेण सद्वित्वेऽनेन यागा-गमे प्रकृतिभावे पतियाइत्ता ।

## क्रमादिभ्यस्त्तस्तुर्वा ।२।३।१३५॥

एभ्य परस्य त्वाप्रत्ययस्य त्तु इत्यादेशो वा स्यात् । कमित्तु । आसइत्तु ।

सवित्तु । जाणित्तु । उड्डित्तु । तरित्तु । भुजित्तु ।

क्षमादिभ्य इति—क्षमधातोस्त्वाप्रत्ययेऽनेन त्तु इत्यादेशे यदादेशस्तद्वद्भवतीति न्यायात्स्सादीनामितीडागमे क्षमित्तु । आस्धातोस्त्वाप्रत्यये त्तु आदेशे इडागमे उचादित्वादयप्रत्यये यलोपे आसइत्तु । उत्पूर्वकड्डाधातोस्त्वाप्रत्यये त्तु इत्यादेशे इडागमे उड्डा+इत्तु इति स्थिते लोपोऽन्यतरस्येत्याकारलोपे उड्डित्तु । एवमग्रेऽपि । क्षम्, आस्, क्मिव्, रण्, खव्, चित, ठिन्द्, जहा, जाण्, ड्डय्, ड्डा, तर्, उद्+धर्, वि+ने, भव्, पास्, भुज्, मज्ज्, वज्, वि+विच्, विद्, सर्, मह्, हन् इत्यादिराकृतिगणोऽयम् ।

## उद्धरस्तो ।४।२।४३॥

उत्पूर्वकधर्धातोः परस्य त्तुप्रत्ययस्येण् न स्यात् । उद्धत्तु ।

उद्धर इति—इण् नेत्यनुवर्त्तते । क्षमादित्वाद्धर्धातोः परस्य त्वाप्रत्ययस्य त्तु इत्यादेशः । तस्मिन् सति स्सादीनामिति प्राप्त इडनेन निषिध्यते ।

## वेर्नेरत् त्तोः ।४।२।२९॥

वेः परस्य नेधातोरत् स्यात् त्तोः प्रत्ययस्येडागमश्च । निणइत्तु । विनइत्तु ।

वेरिति—इडित्यनुवर्त्तते । तस्य त्तोरित्यनेन सम्बन्धः । अदित्यस्य नेरित्यनेन सम्बन्धः । विपूर्वकनेधातोस्त्तुप्रत्ययेऽनेन धातोरन्त्यस्याकारे प्रत्ययस्येटि प्रकृतिभावे विणइत्तु । वा णकारः ।

## इदुदुपधात्तादिरतः ।२।४।५३॥

इकारोकारोपधधातोः परस्तभिन्नस्तादिः कृत् खित् स्यात् ।

इदुदुपधादिति—अत इत्यत्र न त अत इति नञ् समासः । तेन तभिन्न इति लभ्यते । खिदित्यनुवर्त्तते तात्पर्यं खिद्भावविधानेनेटि न खित्त्वम् ।

## गमादिभ्यस्तुमऽनिट् ।२।३।१३६॥

एभ्यः परस्य त्वाप्रत्ययस्य तुमित्यादेशो वा स्यात्सचानिट् । गतु । भेत्तु । भोत्तु । मोत्तु । वत्तु ।

गमादिभ्य इति—वा त्त इत्यनुवर्त्तते । वा इत्यस्य तुमित्यनेन सम्बन्धो न त्वनिटा । तेन तुमादेशो विकल्पेन भवति । तुम् तु नित्यमनिट् । गमधातोस्त्वाप्रत्ययस्य तुमादेशे मकारस्यानुस्वारे गतु । भिन्द्धातोस्तुमादेशे त्रयाणामित्यनुस्वारलोपे इदुदुपधादिति खिद्भावे वृद्धौ दकारस्य परसवर्णे भेत्तु । एवमेव

भुज्धातोर्भोत्तु । मुच्धातोस्तु मादेशे वृद्धौ मोत्तु । वन्च्धातोस्तुमादेशे त्रयाणामिति प्रथमचकारलोपे द्वितीयचकारस्य परसवर्णे वत्तु । गम्, गिण्ह्, च्छिद्, च्छुभ्, दिस्, उद्+धर्, भिन्द्, भुज्, मुच्, लभ्, वन्च् एते गमादयः ।

## छुभादिभ्यस्तडूणस्य ।४।१।६७॥

एभ्यः परस्योणस्य तडागमः स्यात् ।

छुभादिभ्य इति—नित्यत्वादिटोऽपवादोऽयम् । तेनैभ्यः परस्योणस्येण । छुभ्, भुज्, मुच्, दिस्, लभ्, विध्, हण्, एते छुभादयः ।

## गम्गिण्हच्छिद्भिद्भ्यो वा ।४।१।६८॥

एभ्यः परस्योणप्रत्ययस्य तडागमो वा ।

गम्गिण्हिति—ऊणस्य तट् वेत्यनुवर्त्तते । उदाहरणञ्च दर्शयत्यमे ।

## ऊणस्य वा मक् ।४।२।१३॥

अस्य प्रत्ययस्य मगागमो वा स्यात् । गतूण । गतूण । गमिऊण ।

ऊणस्येति—गम्धातोरूणप्रत्यये तडागमेऽनेन प्रत्ययस्य मगागमेऽनुस्वारे गतूण । तडागमाभावे इडागमे गमिऊण । तडागमस्य विशेषविहितस्येड्बाधकत्वेऽपि वैकल्पिकत्वेनैतत्प्रवृत्त्यभावे तत्प्रवृत्तौ बाधकाभावात् ।

## ऊणे निरो जिणष्टेः ।३।४।५४॥

निर परस्य जिण्धातोष्टेर्लोपः स्यादूणे परे । निज्जिऊण ।

ऊण इति—लोप इत्यनुवर्त्तते । षष्ठीनिर्दिष्टत्वादन्त्यस्य लोपप्राप्तौ टे इति—इणभागस्य टिसञ्ज्ञात्वात्तस्य लोपो भवति । निर्पूर्वकजिण्धातोरूणे कृते इडागमेऽनेन टिलोपे निज्जिऊण । रेफस्य परसवर्णः ।

## घेत् तुम्तूणतव्वेषु ।२।४।४९॥

एषु परेषु गिण्हधातोर्घेदादेशः स्यात् । घित्तु । घेत्तु । घेत्तूण । घेत्तूण । गिण्हिऊण ।

घेदिति—गिण्ह् इत्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेशः । तडागमविशिष्टस्योणस्य निर्देशेन गिण्हिऊणेत्यत्र नादेशः । गिण्हधातोस्ताप्रत्यये तस्य तुमादेशेऽनेन घेदादेशे सयुक्ते ह्रस्वे घित्तु, घेत्तु । गिण्ह्धातो रूणप्रत्यये तडागमेऽनेन घेदादेशे मगागमेऽनुस्वारे घेत्तूण । मगागमाभावे घेत्तूण । तडागमाभावे इडागमे गिण्हिऊण ।

## निरश्चिण उमूणयोर्णस्य च लोपः ।४।२।३८॥

निरः परस्य चिणः परयोरुमूणप्रत्यययोरिण् न स्याद्धातोर्णकारस्य लोपश्च स्यात् । निच्छिउ । निच्छिऊण ।

निर इति—इण्णेत्यनुवर्त्तते । तस्य प्रत्ययेन सम्बन्धः । योग्यत्वात् चिण इत्यस्य णस्येत्यनेन सम्बन्धः । तेन न प्रत्ययणकारलोपः । निर्पूर्वकचिण्धातोरुमि प्रत्यये णकारलोपे इटो निषेधे निच्छिउ । क्ष्मूचिर्णिति सूत्रेण चकारस्य द्वितीयाक्षरश्छकारः रेफस्य परसवर्णेन चकारः ।

## च्छुभस्तुमतूणयोर्भतयोर्ढः ।२।३।५०॥

उक्तधातुप्रत्ययसबन्धिभकारतकारयोः स्थाने ढादेशः स्यात् । छोढु । छोढूण । छुभिउ । छुभिय ।

च्छुम इति—भश्च तश्च भतौ तयोः । छोभ् तुमिति स्थिते भकारतकारयो स्थाने ढकारे छोढु । छोभ् + तूण इत्यत्र भकारतकारात्मकवर्णद्वयस्थाने ढकारः । उमि इडागमे छुभिउ । इये छुभिय ।

## दिसस्तुमतूणतव्वताराणां ठः ।२।३।१४८॥

दिसः परेषामेषा प्रत्ययाना तकारस्य ठकारः स्यात् ।

दिस इति—तस्येत्यनुवर्त्तते । आदेशेऽकार उच्चारणार्थः ।

## दिसोऽदितस्तुमतूणतव्वतारेषु ।२।३।१४२॥

दिस इकारस्याकारः स्यात्तुमतूणतव्वतारेषु परेषु । दट्ठु । दट्ठूण ।

दिस इति—दिस्धातोस्ताप्रत्ययस्य तुमादेशेऽनेनेकारस्याकारे तकारस्य ठकारे सकारस्य परसवर्णेन टकारे दट्ठु । ऊणप्रत्यये तु वडागमे तकारस्य ठकारे सकारस्य टकारे दट्ठूण ।

## सम उमि ।२।३।४४॥

सम परस्य त्थुणधातोः थो इत्यादेशः स्यादुमि परे । मथोउ ।

सम इति—त्थुण थो इत्यनुवर्त्तते । सम्पूर्वकत्थुण्धातोरुमि इडागमे वत्सहितस्य थो इत्यादेशे सथोउ । समः परस्य विधानात्केवलात्-थुणित्ता । थुणिउ । थुणिऊण । थुणियेति ।

## द. ।४।२।३१॥

दाधातोः परयोरुमूणयोरिण् न स्यात् । दाउ । दाऊण ।

द इति—उमूणयो इण् नैत्यनुवर्त्तते । स्मादीनामिति प्राप्तस्येटोऽनेन निषेधः ।

## लभस्तुमूतूणयोस्तस्य ध ।२।३।१४५॥

लभूसम्बन्धितुमूतूणसम्बन्धिनस्तकारस्य धकारः स्यात् । लद्धुं । लभिउं । लद्धूण । लभिय ।

लभ इति—लभूधातोस्तुमूप्रत्यये इटो निषेधेऽनेन तकारद्वयस्य धकारे भकारस्य परसवर्णे लद्धुं । उमि सतीडागमे लभिउं ।

## विंधो विन्तूणे ।२।३।२२॥

विंध्धातोर्विंदादेशः स्यात् तूणप्रत्यये परे ।

विंध इति—अनेकवर्णत्वात्सर्वादेशः ।

## तूण आदेर्धः ।२।३।२३॥

विंधसम्बन्धितूणस्यादेर्धकारः स्यात् । विद्धूण । विंधिय ।

तूण इति—विंध इत्यनुवर्त्तते । विंधधातोस्तूणप्रत्यये तस्य तडागमे तका रस्य धकारे धातोस्तकारस्य परसवर्णेन दकारे विद्धूण ।

## सुण उमूणयो ।४।२।३२॥

सुणधातो परयोरुमूणयोरिड्वा स्यात् ।

सुण इति—इड्वेत्यनुवर्त्तते । स्मादीनामिति विहितस्येट पक्षे निषेधक मिदम् । प्राप्तविभाषासु पक्षे निषेधस्यैव तात्पर्यविषयत्वात् । कार्यस्य सामान्यत एव सिद्धेः । सुणिऊण । सुणिउं । पक्षे वक्ष्यमाणसूत्रेण सोसादेशः अतएवानि टोरित्युपात्तम् ।

## अनिटोरुमूणयो सो ।२।३।१२४॥

सुण्धातोः सोसादेशः स्यादनिटि उमि ऊणे च । सोउं । सुणिउं । सोऊण । सुणिऊण ।

अनिटोरिति—सुण इत्यस्यानुवृत्तिः । ।इडभावपक्षे सुण्धातोरुमि सति सोसादेशे सोउं । एवं सोऊण । अन्यत्र सुणित्ता । सुणिय । इत्यादि ।

## क्रिणादिभ्य उम· ।४।२।३७॥

एभ्यः परस्योम्प्रत्ययस्येण् न स्यात् ।

क्रिणादिभ्य इति—इण् नेत्यनुवर्त्तते । क्रिण्, आ—क्खा, ण्हा, पा, ह्रा, एते क्रिणादय ।

## क्रिण उमो डेद् ।४।२।५४॥

क्रिणः परस्योम्प्रत्ययस्य डेडागमः स्यात् । केउ । अक्खाउ । ण्हाउ । पाउं । ह्राउ ।

क्रिण इति—क्रिण् + उमित्यत्रोमो डेडागमे डित्वाट्टेर्लोपे सयुक्तादेर्लोपे च केउ । आपूर्वकक्खाधातो अक्खाउ । सयुक्ते ह्रस्व । ण्हाधातो ण्हाउ । पाधातो पाउ । ह्राधातो ह्राउ ।

## ग्गहादिभ्य ऊणस्य ।४।२।५१॥

एभ्यः परस्योणप्रत्ययस्यैडागमः स्यात् । गहेऊण । सजमेऊण । पप्फोडेऊण ।

ग्गहादिभ्य इति—एडित्यनुवर्त्तते । इटोपपाद । रसादीनामित्यनेन प्राप्त इडनेन बाध्यते । ग्गह्धातोरूणप्रत्यये तस्यैडागमे गहेऊण । एवमन्यत्रापि । ग्गह्, स + जम्, प + प्फोड्, आ + मत, अव + यास्, वण्ण्, एते ग्गहादय ।

## गिण्हादिभ्य· ।४।२।४९॥

एभ्यः परस्योम्प्रत्ययस्यैडागम· स्यात् । गिण्हेउ । ढ्वेउ । वण्णेउम् ।

गिण्हादिभ्य इति—उम एडित्यनुवर्त्तते । इटोऽपवाद । उम्प्रत्ययोऽत्र सम्बन्धार्थको हेत्वर्थकश्च गृह्यते । अविशेषात् । गिण्ह्धातोरुमि एडागमे गिण्हेउ । एवमन्यत्रापि । गिण्ह्, प+अत्थ्, पला+अय्, घट्ट्, छड्ड्, ढ्वू, ट्टा, उद् + ढाल्, पाल्, मड्ड्, मोड्, लोक्, वच्, वण्ण्, वरिस्, वार्, सज्ज्, सह्, पडि + सेह्, एते गिण्हादयः ।

## आत पेसादेश्चादित· ।२।३।८२॥

आदन्तात्पेसादेश्च परस्येयप्रत्ययस्येकारस्याकारः स्यात् । जहाय । आयाय । समुदाय । विण्णाय । सधाय । पेमाय । गहाय । आघायाय ।

आत इति—इयस्येत्यनुवर्त्तते । विशेषण तदन्तस्येति परिभाषया आत इत्यनेन आदन्तधातोर्ग्रहणम् । प + इस्, ग्गह्, आ + घात् इत्येते पेसादय । जहा +

इय इत्यत्रेयस्येकारस्याकारे सवर्णदीर्घे अहाय । आपूर्वकदाधातो आयाय । समुपूर्वकदाधातोः समुदाय । विपूर्वकण्णाधातो विण्णाय । सम्पूर्वकधाधातोः सधाय । पपूर्वक इम्धातो पेसाय । गह्धातो गहाय । आपूर्वकघात्धातो, आघायाय । "आघायाय समुस्सय" उत्त० ५, ३२, ।

## इयस्य पेक्खादिभ्यो यस्यैत् ।२।३।८१॥

एभ्यः परस्य इयप्रत्ययस्य यकारस्यैकारो वा स्यात् । पेहाए । पेहाय । पसारिए । पसारिय । णिस्साए । णिस्साय ।

पेक्खादिभ्य इति—पेत्यनुवर्तते । षष्ठीनिर्दिष्टत्वाद्यकारोत्तराकारस्यैकारो भवति यकारस्य लोप । पपूर्वकेक्स्धातोरिये सति प्रत्ययेकारस्याकारे धातोरिहादेशेऽकारस्यैकारे वृद्धौ पेहाए । पपूर्वकसारधातोरियप्रत्यये पसारिए । "पाए पसारिए वावि न चिट्ठे गुरूणतिए" इति उत्त० १, १९, । निपूर्वकसयधातो णिस्साए । यकारस्य लोप । प+इक्ख्, प+सार् णिस्सय्, एते पेक्खादय ।

## वेर्धुणो धूय सेयस्य ।२।३।१५०॥

वेः परस्येयसहितस्य धुण्धातोर्धूयादेशो वा । विधूय । विहूय । विधुणिय ।

वेर्धुण इति—विकल्पोऽनुवृत्त्या लभ्यते । यकारोत्तराकार प्रयोगार्थं । विपूर्वकधुण्धातोरियप्रत्यये तत्सहितस्य धातोर्धूयादेशे विधूय । तदभावे विधुणिय ।

## वेरीरिये ने ।३।२।२७॥

वेः परस्य नेधातोरेकारादियप्रत्ययान्यवेकारे परे पूर्वपरयोरीकारादेश स्यात् । विणीय ।

वेरिति—पूर्वपरयोरित्यनुवर्त्तते । विपूर्वकनेधातोरियप्रत्यये एकारेकारयोरीकारे विणीय ।

## उपसर्गाद्गिण्हो गिज्झो माणपरेऽति च ।२।४।९८॥

अस्मात्परस्य गिण्हधातोर्गिज्झादेश स्यादिये माणपरकेऽति च परे । ओगिज्झिय । निगिज्झिय । परिगिज्झिय ।

उपसर्गादिति—उपसर्गात्किम् । गिण्हिय । अत्र गिज्झियेति माभूत् । ओपूर्वकगिण्हधातोरियप्रत्यये गिज्झादेशे ओगिज्झिय । माणपरके कर्मण्यति तु परिगिज्झमाणो । परिगृह्यमान इत्यर्थ ।

## व्युद्भ्यां सिरः ससः ।२।४।४६॥

विउद्भ्या परस्य सिर्धातोः ससादेशः स्यादिये । विउस्सिय ।

व्युद्भ्यामिति—इय इत्यनुवर्त्तते । सकारान्तोऽयमादेश । सित्त्वात्सर्वादेश । अकारस्तूच्चारणाय । विउपूर्वकसिर्धातोरिये सति ससादेशे परसवर्णे विउस्सिय ।

## इर्वेश्श्रित्विचस्त्तौ च वा ।२।४।४७॥

वेरुपसर्गात्परयोश्श्रित्विच्धात्वोरिसादेशो वा स्यादिये त्तौ च परे । वीइय । वीय । विचिंतिय । अणुवीइत्तु । वीइय । वीय । विविच्चिय । वीइत्तु ।

इरिति—चकारादिये इत्यनुकृष्यते । सान्तोऽयमादेशस्तेन सर्वस्य स्थाने भवति । विपूर्वकचिंत्धातोरियप्रत्ययेऽनेनेसादेशे धातूपसर्गयोर्दीर्घे प्रकृतिभावे वीइय । द्विधा दीर्घे वीय । आदेशाभावे विचिंतिय । अणुविपूर्वकचित्धातोस्तुप्रत्यये इडागमेऽनेनेसादेशे पूर्ववद्दीर्घे अणुवीइत्तु । वीइयेत्यादीन्यन्तिमानि चत्वारि रूपाणि विच्धातोर्बोध्यानि ।

## अणोश्चित्तश्चीति ।२।३।१५१॥

अस्मात्परस्येयप्रत्ययसहितस्य चित्धातोश्चीतिरादेशो वा । अणुचीइ । अणुचीति । अणुचिंतिय ।

अणोरिति—सेयस्य वा इत्यनुवर्त्तते । तथाचेयप्रत्ययसहितस्य चित चीतीत्यादेशे तकारस्य यकारे लोपे प्रकृतिभावे अणुचीइ । तकारश्रुतौ अणुचीति । आदेशाभावे अणुचिंतिय ।

## वेश्चित्विच इ ।२।३।८३॥

वे परस्य चित्विच्धात्वोः परस्येयस्य इसादेशो वा स्यात् । वीइ(१)अणु वीइ(२)।

वेरिति—इयस्येत्यनुवर्तते । इयप्रत्ययस्यानेनेसादेशे धातो पूर्वसूत्रेणादेशे वीइ । पक्षे रूपमुक्तम् ।

## पावादिभ्योऽप् च ।२।२।५०॥

एभ्योऽप्प्रत्यय स्यादुक्तेर्थे चकाराद्यथाप्राप्तम् ।

पावादिभ्य इति—एककर्तृकयो. पूर्वकाले इति सम्बध्यते । चकाराद्यथाप्राप्त

त्यादय प्रत्यया अपि भवन्ति यथाप्रयोगम् । प+आव्, अहि+इ (अध्ययने), उव+उज्, प+वज्, अभि+करव्, अइ+क्रम्, अभि+क्रम्, अव+क्रम्, निर्+क्रम्, परि+क्रम्, क्खिव्, अणु+गम्, आ+गम्, गिण्ह्, परि+चय्, जय् (यागे), परि+ट्ठव्, दिस्, वि+भज्, आ+रभ्, आ+रोह्, स+लव्, विउ+सिर्, समा+सीय्, एते पावादय । आकृतिगणोऽयम् ।

## पावादीनामनभिकखमपि ।३।३।२६॥

अभिकख वर्जयित्वा पावादिधातूनामन्त्यस्य द्वित्व स्यादपि परे । उववज्ज । अइक्कम्म । अणुगम्म । आगम्म ।

पावादीनामिति—द्विरित्यनुवर्तते । उव+उज्+अ इति स्थिते जकारस्य द्वित्वे त्रयाणामित्यनुस्वारलोपे उवउज्ज । मकारद्वित्वे अइक्कम्म, अणुगम्म, आगम्म इत्यादय । अनभिकखमिति किं अभिकखेत्यत्र द्वित्व माभूत् ।

## क्खिवादीनां पोऽपि ।३।१।८५॥

एषा पकारोऽन्तादेशः स्यादपि परे । खिप्प । पप्प । परिठ्प्प । आरोप्प । संलप्प ।

क्खिवादीनामिति—षष्ठीनिर्देशादन्त्यस्यादेश । क्खिव्धातोर्वकारस्य पकारे तस्य द्वित्वे खिप्प । प+आव् धातो पप्प । परि+ट्ठव् धातो परिट्ठप्प । आ+रोह् धातो आरोप्प । सम्पूर्वकलव् धातो सलप्प । क्खिव्, प+आव्, परि+ट्ठव्, आ+रोह्, सम्+लव् एते क्खिवादय ।

## गिण्हो गिज्झ ।३।१।८६॥

अस्य गिज्झादेशः स्यादपि परे । गिज्झ । परिगिज्झ ।

गिण्ह इति—गिण्ह्धातोरपि सत्यनेन गिज्झादेशे गिज्झ । अनेकवर्णत्वात् सर्वादेशः । अपीत्यनुवर्त्तते । आदेशेऽकार उच्चारणार्थं ।

## परिच्चयविउसिरोर्ज ।३।१।८७॥

अनयोरन्त्यस्य जकारः स्यादपि परे । परिच्चज्ज । विउसिज्ज । विभज्ज । दिस्स ।

परिच्चयेति—अपीत्यनुवर्त्तते । षष्ठीनिर्देशादन्त्यस्य जकार । एकत्र यकारस्यान्यत्र रेफस्य जकार । जकारे कृते द्वित्वम् । विपूर्वकभज्धातो विभज्ज । दिस्धातो दिस्स ।

## जयो जिट्ठः ।३।१।८८॥

यागार्थकजय्धातोर्जिट्ठादेशः स्यादपि । जिट्ठा ।

जय इति—अपीत्यनुवर्तते । अपि परे जय्धातोर्जिट्ठादेशे सवर्णदीर्घे जिट्ठा ।

## आतो रंभो ढत्त साप ।३।१।२२॥

आकारात्परस्य रभ्धातोरपमहितस्य स्थाने ढत्तमित्यादेशो वा स्यात् । आढत्त ।

आत इति—वेत्यनुवर्त्तते । अपा सह साप् तस्य साप । आपूर्वकरभ्धातोरपि कृते प्रकृतिप्रत्यययोरुभयो स्थाने ढत्तमित्यादेशे आढत्त । आदेशाभावे आरब्भ । समारब्भ । अपि परे पावादित्वाद् द्वित्वेऽनुस्वारलोपे पूर्वभकारस्य बकार ।

## वच्चादिभ्य आप् ।२।२।५१॥

*एभ्य आप्रत्ययः स्यादुक्तेऽर्थे । वचा ।*

वचादिभ्य इति—एककर्तृकयो पूर्वकाल इत्यनुवर्त्तते । वच्च्धातोरापि वचा उक्त्वेत्यर्थ. । वच्च्, दिस्, प+दिस् एते वचादय ।

## आपि दिसः ।३।३।२८॥

दिस्धातोरन्त्यस्य द्वित्व स्यादापि परे । दिस्सा । पदिस्सा ।

आपीति—द्विरित्यनुवर्त्तते । दिस्धातोरापि सकारस्य द्वित्वे दिस्सा ।

## एः पाद्दिस एद्वा ।३।१।८९॥

पात्परस्य दिसः सम्बन्धिन इकारस्यैकारो वा स्यादापि परे । पदेस्सा ।

एरिति—अपीत्यनुवर्तते । पपूर्वकदिस्धातोरापि सकारस्य द्वित्वेऽनेनेकारस्यैकारे पदेस्सा ।

## करो डियाणश्च ।२।२।५३॥

करधातोर्डियाण प्रत्यय. स्याच्चायथाप्राप्तम् । कियाण ।

कर इति—करधातोर्डियाणप्रत्यये टिलोपे कियाण ।

## पाउकर एर्वा ।२।२।५४॥

पाउपूर्वककरधातोस्त्वादिविषये एप्रत्ययो वा स्यात् । पाउकरे ।

पाउकर इति—त्त्वादिविषये एककर्तृकधात्वर्थयो पूर्वकालिकधात्वर्थे विद्य-

मानाद्धातोरेप्रत्यय स्यादित्यर्थः । ण्प्रत्यये पाउकरे भाद्बुष्कत्वेत्यर्थः । एतदभावे पाउकरेत्ता ।

## कर्हभ्यां तुथ ।२।२।५२॥

आभ्यां तुप्रत्ययश्चाद्यथाप्राप्तम् । कट्टु । हट्टु ।

कर्हभ्यामिति—चाद्यथाप्राप्तमिति । अतएव किवेत्यादि भवति । अन्यथा विशेषविहितत्वेनानेन बाधा न स्यात् । कृहृभ्यां तुप्रत्यये रेफस्य परसवर्णे कट्टु । हट्टु ।

इति ध्वदत्ते पूर्वोत्तरकालसम्बन्धार्थप्रक्रिया ।

---

## त्तएरुम् च क्रियार्थायां क्रियाया भविष्यति ।२।२।५५॥

क्रियार्थाया क्रियायामुपपदे भविष्यदर्थे धातोस्त्तएउम्प्रत्ययौ स्याता यथाप्रयोगम् ।

त्तएरुमिति—असन्देहार्थं न समास । क्रिया अर्थ प्रयोजन यस्या सा क्रियार्था तस्याम् । क्रियायामित्यत्र वर्त्तमाने इति शेष । तथाच क्रियार्थाया क्रियाया वर्त्तमाने धातावुपपदे इति निर्गलति । परञ्च क्रियार्थाया क्रियाया विद्यमानधातुघटित उपपदे सति प्रयोज्यक्रियावाचकधातोरेते प्रत्यया स्युरिति फलति । यथाश्रुत तु न सङ्गच्छते । क्रियाया धातोर्वोपपदत्वाभावात् । क्रियार्थाया क्रियायामित्यनेनैव समानकर्तृकत्वमपि लब्धम् । प्रयोज्यप्रयोजकक्रिययोर्विभिन्नाधिकरणत्वासम्भवात् । अतएव क्रियार्थोपपदे सति प्रत्ययविधायकेऽग्रेतनसूत्रे एककर्तृकेत्युक्तम् । क्रियाया किम् । भिक्षिष्ये इत्यस्य जटा । भिक्षार्था जटा । सा च द्रव्य न तु क्रिया । क्रियार्थाया किम् । धावतस्ते पतिष्यति दण्ड । अत्यत्र धावत इति क्रिया नतु असौ दण्डपातनार्था । धावन तु दण्डपतने हेतुर्भवति किन्तु नोद्देश्यम् ।

## एककर्तृकेषु सामर्थ्याद्यर्थेषु ।२।२।५६॥

समानकर्तृकेषु सामर्थ्येच्छादिपदार्थेषु धातुषूपपदेषु धातोस्त्तए उम् इत्येतौ

प्रत्ययौ स्याताम् । नो खलु मे भन्ते । कप्पइ वंदित्तए । नमंसित्तए । वंदिउम् । नमंसिउ ।

एककर्तृकेष्विति—इदञ्च सूत्रमक्रियार्थोपपदार्थम् । क्रियार्थोपपदे पूर्वेणैव सिद्धे । त्तएरुम् च इत्यनुवर्तते । वन्द्धातोरनेन त्तएप्रत्यये इडागमे वंदित्तए । तथाच नो कप्पइ वंदित्तए इत्यस्य न कल्पते वन्दितुम् इत्यर्थः । न वन्दनविषयकशक्त्याश्रय इति ततो बोधः । अत्र प्रयोज्यप्रयोजकभावाप्रतीतेः पूर्वेणासिद्धेरनेन व्यधायि । नेच्छति वंतय भोत्तुमित्यादेर्नेच्छति वान्तं भोक्तुमित्यर्थः । अत्र वान्तकर्मकभोजनविषयकेच्छाविरहो भासते । न तु प्रयोज्यप्रयोजकभावः । सामर्थ्यादिपदेन सामर्थ्यम्, इच्छा, ज्ञान, ग्लानिश्चेष्टा, सत्ता, लाभ इत्यादयो गृह्यन्ते ।

## उवदंसादिभ्यस्त्तएः ।४।२।५०॥

*एभ्यः परस्य त्तएप्रत्ययस्यैडागमः स्यात् । उवदसेत्तए । परियाएत्तए । निण्णवेत्तए । निण्णवित्तए । समभिलोएत्तए ।*

उवदंसादिभ्य इति—एडित्यनुवर्त्तते । उवपूर्वकदस्धातोस्त्तएप्रत्ययेऽनेनैडागमे उवदसेत्तए । परिपूर्वकदाधातोः परियाएत्तए । विपूर्वकण्णवृधातोः विण्णवेत्तए । सयुक्ते ह्रस्वे विण्णवित्तए । एवमन्यत्रापि । उव + दस्, कर्, निर् + जा, वि + ण्णव्, परि + दा, पार्, उद् + ल्घ्, समभि + लोक्, सगाम्, एते उवदसादयः ।

## सामर्थ्यवचनेषु ।२।२।५८॥

सामर्थ्यवचनेषूपपदेषु धातोरेतौ प्रत्ययौ स्याताम् । जे समत्था समुद्धत्तु ।

सामर्थ्येति—अनुवृत्तिस्तु पूर्ववत् । उपपदेष्विति शेषः । जे समत्था समुद्धत्तु इत्यस्य ये समर्थाः समुद्धर्तुमित्यर्थः । सामर्थ्यवाचकः समत्था इत्युपपदे सति समउद्पूर्वकधरधातोरनेन उम् प्रत्यये तरागमे रेफस्य परसवर्णेन तकारे समुद्धत्तु ।

## कालार्थेषु ।२।२।५९॥

कालार्थेषूपपदेषु धातोरेतौ प्रत्ययौ स्याताम् । कालो समयो वा भोत्तु ।

कालार्थेष्विति—कालवाचकः कालः समयो वेला इत्यादयः । एषूपपदेषु त्तएउमौ भवतः ।

## भाववाचकाश्च ।२।२।५१॥

भावे इत्यादिसूत्रविहिताः प्रत्ययाः क्रियार्थायां क्रियायां भविष्यति स्युः ।

भाववाचका इति—भावे इत्यादिसूत्रेण भावे विहिताः प्रत्ययाः क्रियार्थायां क्रियायामनेन भवन्ति भविष्यदर्थे ।

## उवादय इत्तएरिणड्डा ।४।२।३॥

उवात्परस्मादयूधातोः परस्येत्तएप्रत्ययस्येरिडागमो वा स्यात् । उवाइत्त्ि-त्तए । उवाइत्तए ।

उवादिति—आगमे णकारो नकारो ऽकार उच्चारणार्थः । उवपूर्वकायूधातोस्तए प्रत्यये इडागमे उव+अय्+इत्तए इति स्थितेऽनेन प्रत्ययस्येणडागमे यकारलोपे उवाइणित्तए । शुभादौ अइव । अइत्तुमित्यादिवत् ।

## पलाय उम ।४।२।४८॥

पलोपसर्गात्परस्मादयधातो' परस्योम' प्रत्ययस्यैडागमः स्यात् । पलाएउ ।

पलाय इति—एडित्यनुवर्त्तते । इटोऽपवादः । पलापूर्वकायूधातोरुमि प्रत्ययेऽनेनैडागमे यलोपे पलाएउ ।

## न परेश्चय' ।४।२।३६॥

परेश्चय. परस्य त्तएप्रत्ययस्येण्न स्यात् । परिचत्तए ।

न परेरिति—त्तणरिति इट् इति चानुवर्त्तते । परिपूर्वकचयूधातोस्त्तए प्रत्यये इटो निषेधे यलोपे परिचत्तए । त्तएग्रहणात्परिचइउमित्यादौ न निषेधः ।

## चरोऽएण् च ।२।२।६१॥

चर्धातोरएण् प्रत्ययः स्यादुक्तेऽर्थे चात्तएत्तुमो भवन्ति । चारए । चरित्तए । चरिउ ।

चर इति—क्रियार्थाया क्रियायामित्यनुवृत्ति । भविष्यतीति च । अतएवो केऽर्थे इति लभ्यते । चर्धातोरएणि प्रत्यये वृद्धौ चारए । अन्यच्च पूर्ववत् ।

## नेर्जुंजो योय. ।२।३।४५॥

ने. परस्य जुजूधातोर्योयादेश' स्यादुमि परे । निओइउ ।

नेरिति—उमीत्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । आदेशेऽकार उच्चार-

पार्थे. । निपूर्वकजुजुधातोरुमि प्रत्यये योयादेशे इडागमे यद्वपलोपे निओइउ । ओ इत्यादेशेन तु न निर्वाहः । पक्षे नियोइउमित्यस्यासिद्धे ।

## तरादिभ्य इट उमि ।३।२।५२॥

एभ्यः परस्येटो दीर्घो वा स्यादुमि । तरीउ, तरिउ । गहीउ, गहिउ ।

तरादिभ्य इति—दीर्घो वेत्यनुवर्त्तते । तर्धातोरुमि प्रत्यये इडागमे तस्य दीर्घे तरीउ । एवं गहीउ ।

## अनिटस्त्तएः प' ।२।३।९६॥

पासम्बन्धिनोऽनिटस्त्तएप्रत्ययस्य तकारयोर्यकारः स्यात् । पायए ।

अनिट इति—तयोरित्यस्य य इत्यस्य च सम्बन्धः । त्तएत्तोरित्यनेन विकल्पेनेटोऽभावे तकारयोर्यकारे पायए । अनिट किम् । पिनित्तए इत्यत्र माभूत् ।

## अएदआतौ च वदः ।२।२।६०॥

वद्धातोस्त्तएविषयेऽएत् अआत् प्रत्ययौस्तश्चायथाप्राप्तम् । वदए । वदआ । वदित्तए, वदित्तु । वदिउ ।

अएदआताविति—त्तएविषये क्रियार्थाया क्रियाया विद्यमाने धातावुपपदे भविष्यति । वद्धातोरएति प्रत्यये वदए । अआति प्रत्यये वदआ । चात्प्राप्ताना त्तएप्रभृतीना वदित्तए इत्यादि ।

## वच्चादिभ्य उमः ।४।१।६९॥

एभ्यः परस्य उमस्तडागमः स्यात् । वत्तु । भोत्तु । समुग्धत्तु ।

वच्चादिभ्य इति—वद्वित्यनुवर्त्तते । इटोपवादः । वच्च्+उमित्यत्र तडागमे त्रयाणामिति प्रथमचकारलोपे द्वितीयचकारस्य परसवर्णे वत्तु । भुज्धातोरुमि तडागमे भुजोऽत्यादावित्यनुस्वारलोपे इदुदुपधादिति णिद्वद्भावाद्वृद्धौ भोत्तु । वच्च्, भुज्, समुद्+धर्, इत्यादिराकृतिगणः ।

## उमि वा ।२।३।१२३॥

वरस्धातोर्वासादेशो वा स्यादुमि परे । वासिउ ।

उमीति—वरसो वास इत्यनुवर्त्तते । वरस्धातोरुमि प्रत्ययेऽनेन वासादेशे इडागमे वासिउ । एडागमे वासेउ ।

## रज्जो रएः ।२।३।१३४॥

रज्जुधातोरए इत्यादेशः स्यादुमि परे। रएउ।

रज्ज इति—उमीत्यनुवर्त्तते। अनेकवर्णत्वात्सर्वादेशः।

## भुजूवसस्त्तए: ।४।२।३४॥

आभ्यां परस्य त्तएप्रत्ययस्येडागमो वा स्यात्। भोत्तए। भुत्तए। भुजित्तए। वत्थए। वसित्तए।

भुजिति—समाहारद्वन्द्वे पञ्चम्येकवचनम्। इट्वेत्यनुवर्त्तते। भुज्धातोस्त्तए प्रत्यये इड्विरहेऽनुस्वारलोपे इदुदुपधाविति वृद्धौ जकारस्य परसवर्णे भोत्तए, सयुक्ते ह्रस्वे भुत्तए। इटि भुजित्तए। वस्धातोस्त्तएरिडभावे सात्थ इत्यनेन तद्‌-यस्य थकारे सकारस्य परसवर्णे वत्थए। इटि वसित्तए।

इति त्तुं-त्ते हेत्वथप्रक्रिया।

---

## न्तमाणौ ।२।१।३॥

वर्त्तमानभविष्यत्क्रियावृत्तेर्धातोर्न्तमाणप्रत्ययौ स्तः। अच्छतो। अच्छमाणो। करिन्तो। करेन्तो। करेमाणो। किज्जमाणो। कज्जमाणो। कीरतो। कीरमाणो। धागरमाणो। वियागरेमाणो। समज्जिणमाणो। वक्खतो। वक्खमाणो।

न्तमाणाविति—भविष्यति वर्त्तमाने धातोरित्यनुवर्त्तते। वर्त्तमानक्रियेत्यस्य वर्त्तमानकालवृत्तिक्रियेत्यर्थः। वर्त्तमानत्वञ्च प्रागेव परिष्कृतम्। अच्छ्धातोर्न्तप्रत्यये मध्येऽसि अच्छतो। एव माणप्रत्यये अच्छमाणो। कर्धातोर्न्तप्रत्यये मध्ये एमि प्रत्यये ह्रस्वे करिंतो। कर्धातो कर्मणि माणप्रत्यये क्रिणादिभ्यो ज्ज इत्यनेन ज्जप्रत्यये ज्जे करादीनामिति सूत्रेण ककारोत्तराकारस्येकारे रेफस्य परसवर्णेन जकारे त्रयाणामव्यवधाने पूर्वस्य लोपे किज्जमाणो। इकाराभावे कज्जमाणो। अत्कत्तादिभ्य इति सूत्रेणातिप्रत्यये स्वरस्येकारे कीरमाणो। वच्धातोर्भविष्यति न्तप्रत्यये अगतौ वश्च सछाविति सूत्रेण सप्रत्यये त्रिव्य-

ञ्जनसयोगे पूर्वस्य लोपेऽवशिष्टस्य चस्य परसवर्णेन ककारे वक्कतो । छप्रत्यये तु वच्चूधातोरुकारे वुच्छतो । वुच्छमाणो । भविष्यति त्यादिवत्कार्यं भवति भविष्यति माणेऽपि ।

## पुत. करो डोन्ते ।२।१।४४॥

पुत. परस्य करधातोः सम्बन्धिनोऽसोड इत्यादेशो वा स्यात् । पुक्तो, पुकरन्तो ।

पुत इति—असो वेत्यनुवर्त्तते । पुत्पूर्वककरधातोर्न्तप्रत्यये मध्ये जायमानस्यासो डादेशे टिलोपे परसवर्णे पुक्तो । एतदभावे पुकरतो ।

## अत्थमादिभ्यो न्ते ।४।१।५३॥

एभ्यः परस्यासो लोपो वा न्ते परे । अत्थमतो, अत्थतो । गमतो, गतो ।

अत्थमादिभ्य इति—असो वा लोप इत्यनुवर्त्तते । अत्थमधातोर्न्तप्रत्ययेऽसो लोपे त्रयाणामव्यवधान इत्यनेन पूर्वमकारलोपेऽत्थतो । गतो । लोपाभावे अत्थमन्तो । गमन्तो ।

## उंजादेर्माणे ।३।३।३५॥

अस्यान्त्यस्य द्वित्व वा माणे । उज्जमाणो । उजमाणो । सुम्भमाणो । खुभमाणो । दुस्समाणो । दुसमाणो । कस्समाणो । कसमाणो ।

उजादेरिति—द्विर्वेत्यनुवर्त्तते । उजूधातोर्माणे सति तस्मिन्ननेन जकारस्य द्वित्वेऽनुस्वारलोपे उज्जमाणो । न्ते तु उजन्तो । पक्षेऽपि उजमाणो । माणे इत्यत्र विषयसप्तमी । तेन माणविषयताया द्वित्वविधानेनानिमित्तिकत्वात्पूर्वमेव द्वि । अतएव न व्यवधानशङ्का ।

## आस ईण. ।२।१।४॥

आस्धातोरीण. प्रत्यय स्याद्वर्त्तमाने । आसीणो ।

*आस इति—वर्त्तमान इत्यनुवर्त्तते । आस्धातोरीणप्रत्यये आसीणो ।*

## न्तमाणयोरातो ज्जक् ।४।१।७१॥

आकारोपसर्गात्परस्येधातोर्ज्जगागम' स्याद् न्तमाणयो' परयो' । एज्जतो । एज्जमाणो । पेचेमाणो ।

न्तमाणयोरिति—णरित्यनुवृत्ति । कर्त्तरि न्तमाणयोरेवेदम् । कर्मणि तु ज्जप्रत्ययेनैव सिद्धे । यथा इज्जतो । इज्जमाणो । आपूर्वकेधातोर्न्तप्रत्ययेऽनेन

धातोर्ञ्ञागमे वृद्धौ पज्जतो । माणप्रत्यये पज्जमाणो । पपूर्वकपधातोर्माणे सति पादेर्मोढमाणानामिति पञ्ञागमे धातोञ्चिदागमे इकारस्य षकारे वृद्धौ पेक्खमाणो ।

## पडेर्माणे छ' खस्य ।३।१।७५॥

पडेः परस्येक्खधातोः खकारस्य छकारो वा माणे । पडिच्छमाणो । पडिक्ख-
माणो ।

इक्ख इति—इक्खो वेत्यनुवर्त्तते । आदेशेऽकार उच्चारणार्थः । पडिपूर्वकपे-
क्ख्धातोर्माणविषयेऽन्त्यस्य छकारे ककारस्य परसवर्णेन चकारे धातूपसर्ग-
सम्बन्धिनोरिकारयोर्दीर्घे संयुक्ते ह्रस्वे पडिच्छमाणो । न्तो तु पडिक्खन्तो । पडि-
महणादिक्खन्तो अवेक्खमाणो इत्यादौ न ।

## वे: क्किण आयण् माणे कर्मणि ।२।२।४४॥

वेः परस्मात्क्विणधातोरायद् प्रत्ययो वा स्यात्कर्मणि माणे परे । विक्कायमाणो ।

वे' किण इति—कर्मणीत्यत्र विहित इति शेष । तेन नानन्वयो माणे कर्मणि पदयो । विकल्पस्तु लभ्यतेऽनुवृत्त्या । किणादिभ्य इति विहितज्जस्य बाधक पक्षे । विपूर्वककिण्धातो कर्मणि माणे सति अनेनायद्वि प्रत्यये टिलोपे विक्काय-
माणो । पक्षे विकि नमाणो । वेरपादानात्मकिज्जमाणो इत्यत्र माण इत्युपादा-
नाद्विकिज्जतो इत्यत्र, कर्मणीत्युपादानाद्विकिणमाणो इत्यादौ नायद् ।

## पच्चक्खो माणपरे ।४।१।४७॥

पतिआपूर्वकक्खाधातोरन्त्यस्य लोप स्यान्माणपरकेऽसि परे । पच्चक्खमाणो ।

पच्चक्ख इति—धाऽसि लोप इत्यनुवर्त्तते । षष्ठीनिर्देशादन्त्यस्येति लभ्यते । पतिआपूर्वकक्खाधातोर्माणप्रत्यये मध्येऽसि प्रत्ययेऽनेनातो लोपे तकारोत्तरेका-
रस्य चकारे तकारस्य चकारे परसवर्णेन चकारे संयुक्ते नित्य ह्रस्वे पच्चक्खमाणो । असि किम् पच्चक्खायमाणो । चवादेशस्तु केवलाकारोपसर्गादेव । तेन न पच्चाच-
क्खमाणो इति ।

## गोवदलयोर्माणे ।४।१।६५॥

असन्तयोर्गोवदल्धात्वोर्यगागमो वा स्यान्माणे परे । गोवयमाणो । गोव-
माणो । दलयमाणो । दलमाणो । धायतो । धायमाणो । गायमाणो ।
जायमाणो । गायतो । जायतो । झायतो । झियायतो ।

गोवदलयोरिति—यगित्यनुवर्त्तते । गोव्धातोर्माणप्रत्यये मध्येऽसि तदन्तस्य यगागमे गोवयमाणो । आगमेऽकार प्रयोगार्थं । असन्तनिर्देशेनासन्तयोरिति लभ्यते । ग्घाधातोर्माणप्रत्यये मध्ये यप्रत्यये घायमाणो । एवमन्यत्राप्याकारान्ताद्बोध्यम् ।

## छड्ड इय' ।२।१।८७॥

छड्डधातोरियप्रत्ययो वा माणे । छड्डियमाणो । छड्डमाणो । छड्डेमाणो ।

छड्ड इति—माणे वेत्यनुवर्त्तते । छड्डधातोर्माणप्रत्यये मध्ये इयप्रत्यये छड्डियमाणो । न्ते तु छड्डन्तो । पक्षे छड्डमाणो ।

## इराढो येज्जयोर्माणपरयो' ।२।१।८५॥

आपूर्वकढाधातोरिकारादेशो वा माणपरकयोर्येज्जपरयोः । आढियमाणो । आढायमाणो । आढाइज्जमाणो । आढिज्जमाणो ।

इराढ इति—वेत्यनुवर्त्तते । आपूर्वकढाधातोर्माणप्रत्यये मध्ये यप्रत्ययेऽनेनेकारे आढियमाणो । माणग्रहणादाढायन्तो इत्यत्र न । एवमन्येऽपि । विशेषविहितत्वाद्विकरण सर्वं प्रबाध्य मध्ये इज्जप्रत्यये प्रकृतिभावे आढाइज्जमाणो ।

## कित्तादिभ्यो न्ते ।२।१।८४॥

एभ्योऽयप्रत्ययो वा स्यान्न्ते परे । कित्तयन्तो । दरिमयन्तो । दीवयन्तो फासयन्तो । हीलयन्तो ।

कित्तादिभ्य इति—अयो वा इत्यनुवर्त्तते । अकार उच्चारणार्थं । कित्त्धातोर्न्तेऽयप्रत्यये मध्येऽसि कित्तयन्तो । पक्षे कित्तन्तो । एवमन्यत्रापि । कित्त्, जोस्, तिप्प्, दरिस्, दीव्, पूर्, फास्, वज्ज्, घत्त्, हील्, एते कित्तादयः । उचादिगणपाठेन तत्सिद्धावपि माणेऽप्ययप्रसग स्यात्तन्निवारणार्थमेतत्पृथक्सूत्रम् ।

## जिण एस् ।२।१।८५॥

जिणधातोरेस्प्रत्ययो वा स्यान्न्ते परे । जिणेन्तो । जिणन्तो

जिण इति—न्ते वेत्यनुवर्त्तते । जिण्धातो प्रथमगणस्थत्वाद् प्राप्त एस् अनेन विधीयते । जिण्धातोर्न्ते मध्ये एसि जिणेन्तो पक्षे असि जिणन्तो ।

## तप्पादिभ्यो माणे ।२।१।८६॥

एभ्यो एस्प्रत्ययो वा स्यान्माणे परे । तप्पेमाणो । देवेमाणो । पमज्जेमाणो । लूसेमाणो ।

तप्पादिभ्य इति—एस् वेत्यनुवर्त्तते। तप्पादिधातूना प्रथमगणस्थत्वाद-प्राप्त एस् विकल्पेनानेन विधीयते। तप्धातोर्माणे मध्ये एसि तप्पेमाणो। तप्, देव्, प+मज्ज्, लस्, एते तप्पादय।

## धमो माणे ।३।३।२५॥

धम्धातोरन्त्यस्य द्वित्व स्यान्माणे। धम्ममाणो।

धम इति—द्विरित्यनुवर्त्तते। षष्ठीनिर्देशादन्त्यस्येति लाभ।

## बुसद्दहो माणस्य ।४।१।२०॥

बुसदुपसर्गपूर्वकदह्धातुभ्या विहितस्य माणस्यादेर्लोपो वा स्यात्। बुयाणो, बुयमाणो। सद्दहाणो, सद्दहमाणो। बुवाणो, बुवमाणो।

बुसद्दह इति—लोपो वेत्यनुवर्त्तते। आदेरिति च। बुधातोर्माणप्रत्यये मध्ये यप्रत्यये मकारलोपे बुयाणो। व्यवधानेऽपि न क्षति। ततो विहितत्व-सत्त्वादव एवाह विहितस्येति। तथाचात्र विहितपदाध्याहारेण पञ्चमी बोध्या। दह्धातो सद्दहाणो। यप्रत्ययाभावे बुवाणो। बुवमाणो।

## माणपरेऽसि वा दिसो ह॰ ।३।१।६॥

दिस्धातोर्हकारो वा माणपरेऽसि। देहमाणो। देसमाणो।

माणपरे इति—असीत्यनुवर्त्तते। दिस्धातोर्माणप्रत्यये मध्येऽसि सकारस्य हकारे प्रेक्षणेऽर्थे इकारस्य वृद्धौ देहमाणो। न्तप्रत्यये तु दिसतो। तत्र वृद्धि-हकारयोरविधानात्।

## बीहो भय॰ ।२।३।२॥

बीह्धातोर्भयादेशो वा न्तमाणयोः परयोः। भयतो। भयमाणो। बीहतो। बीहमाणो।

न्तमाणयोरिति—आदेशोऽय व्यञ्जनान्त। परञ्च मध्येऽस प्रवृत्तिर्भवति। बीह्धातोर्न्तमाणविषये भयादेशे न्तमाणयो कृतयोर्मध्येऽसि भयतो। भयमाणो।

## न्ते परे ।२।३।३१॥

परेः परस्य माधातोर्मिणादेशो न्ते परे। परिमिणतो।

न्ते इति—मो मिण इत्यनुवर्त्तते। परिपूर्वकमाधातोर्न्तविषये मिणादेशो

मिणस्य ग्यादिगणे पाठाभावाद्यस्याप्राप्तावपि परिमिणतो । अन्यत्र मायतो । विमायतो । माणे परिमायमाणो । अनेकवर्णत्वात्सर्वादेश ।

## न्ते ।४।१।४१॥

रभोऽनुस्वारस्य लोपो न्ते परे । रभतो । रभमाणो ।

न्ते इति—अनुस्वारस्य लोपो रभ इत्यनुवर्त्तते । रभ्धातोर्न्तविषये नकारलोपे न्तप्रत्ययेऽसि रभतो । आरभतो । माणपरे रभमाणो । आरभमाणो ।

## न्ते वा ।२।३।१११॥

रञ्ज्धातोरगादेशो वा न्ते परे । रगतो । रज्जतो ।

न्ते वेति—रञ्जो रग इत्यनुवर्त्तते । न्तविषये रञ्ज्धातोरगादेशे न्तप्रत्ययेऽपि रगतो । माणे परे रज्जमाणो । रज्जेमाणो । तृतीयगणत्वादसेसो प्रवृत्ति ।

## ल्लिय सासो लेन्तमाणयोर्वा ।२।३।१॥

असा सहितस्य ल्लियधातोर्ले इत्यादेशो वा स्याद्न्तमाणयोः । लिंतो, लेंतो । लियतो । लेमाणो, लियमाणो । लीयतो । लीयमाणो ।

ल्लिय इति—असा सह सास्तस्य साम । ल्लियधातोर्न्तप्रत्यये मध्येऽसि तत्सहितधातोर्ले इत्यादेशे सयुक्ते ह्रस्वे लिंतो । माणेपरे लेमाणो । लीयन्तो । लीयमाणो इति तु लीधातो ।

## नेर्न्तज्जयोर्ली सासो ।२।३।११९॥

ने. परस्यास्सहितस्य ल्लियधातोर्ली इत्यादेश स्याद् न्तेज्जयो । निलिन्तो, निलींतो ।

नेर्न्तज्जयोरिति—ल्लिय इत्यनुवर्त्तते । न्तप्रत्यये विकरणविशिष्टस्य ली इत्यादेशे सयुक्ते ह्रस्वे निलिन्तो । ह्रस्वाभावे निलीन्तो । अतएव दीर्घ आदेश कृत ।

## ये ह्र परेर्न न्तमाणपरे ।३।१।१७॥

न्तमाणपरके ये परे परे परस्य ह्राधातोरिकारो न स्यात् । परिहायतो । परिहायमाणो ।

ये ह्र इति—इरित्यनुवर्त्तते । परिपूर्वकह्राधातोर्न्तप्रत्यये मध्ये यप्रत्यये परिहायतो । अन्यत्र तु हीयतो । हीयमाणो । निहीयतो । निहीयमाणो ।

इति कृदन्ते वर्तमानप्रक्रिया ।

## इतो भूते भावकर्मणोरितनन्त कर्तरि ।२।१।४८॥

भूतेऽर्थे वर्तमानाद्धातोरितप्रत्ययो भावकर्मणोरितवन्तश्च कर्तरि स्यात् । मक्किय । रम्बिय । चिकिगिन्छिय । निसेमियं । निरिक्खिय । लज्जिय । निरिक्खियवन्तो ।

इत इति—भूतस्य भूतपूर्वम् । तत्र सकर्मकेभ्य कर्मण्यकर्मकेभ्यो भाव इतप्रत्ययो भवति । इतवन्तस्तु कर्त्रर्थव सकर्मकेभ्योऽकर्मकभ्यश्च भवति । यद्यपि नव तेतवन्तयोश्च प्रयोग क्वचिदेव लभ्यते तथापि सम्भवमात्रेणात्र तद्विधानम् । सक्कियमित्यादीनि कर्मोदाहरणानि । लिज्जियमिति भावोदाहरणम् । निरिक्खियवन्तो इति कर्त्रुदाहरणम् ।

## असादिभ्यस्तस्तवन्तश्च ।२।१।४९॥

भूतेऽर्थेऽसादिगणपठितेभ्यो धातुभ्यो भावकर्मणोस्तप्रत्यय' कर्तरि तवन्तश्च स्यात् । अत्थ । विधत्थ । णियत्थ । आसत्थ । इद्ध । इट्ठ । किण्ण । गाढ ।

असादिभ्य इति—भूते भावकर्मणो कर्तरि इति पदत्रय पूर्वसूत्रादनुवर्त्तते । भावकर्मणोरित्यस्य तप्रत्ययेन सम्बन्ध । कर्त्तरीत्यस्य तव ते न सह सम्बन्ध । सामान्यभूतपूर्वसूत्रापवादरूप विशेषसूत्रमिदम् । अस्धातोस्तप्रत्यये सात्थ इति सूत्रेण तकारस्य थकारे सकारस्य परसवर्णे तकारे अत्थ । विपूर्वकध्वस्धातोर्विधत्थ । त्रयाणामित्यनेनानुस्वारस्य लोप । निपूर्वकयस्धातोर्णियत्थ । आपूर्वकस्सस्धातोरासत्थ । वस्, अस्, गस्, धम्, यस्, सस्, स्सस्, इत्येतेष्वेव सान्तेषु सात्थ इति सूत्रस्य प्रवृत्तिरिति प्रदर्शनार्थं मान्तानामुदाहरणानि । अन्येषा सान्तानामिसादिगणे पाठात्तकारस्य ठकार इति रहस्यम् । इद्धमित्यत्र इधादिभ्य इत्यनेन तकारस्य धकार । इट्ठमित्यत्र इसादिभ्य इति ठकार । किण्णमित्यत्र किरादिभ्य इति नकार । गाढमित्यत्र गाहादिभ्य इत्यनेन ढकार । धातोर्हकारस्य तु लुणादित्वाल्लोप ।अस्, इध्, इस्, उज्, कर्, कस्, किर्, किलिस्स्, क्लिस्, कीर्, कम्, किस्, कोस्, क्खि, उव-गम्, नि गम्, पडि-गम्, विगम्, स गम्, गा, गुर्, ग्धा, घुस्, चम्, चिण्, चुक्क्, चुय्, छुभ्, उत्-छिद्, वि छिंद्, परि छिंद्, छिव्, छुह्, जम्, जहा, जा, जिण्, जुज्, जुज्झ्, जूह्, ज्या, झिझ्, डी, डु, तम्, तव्, तिप्प्, त्थर्, त्थुण्, थभ्, दस्, दा, दिप्प्, दिस्, दिह्, दुस्, दुह्, दह्, द्धस्, धम्, धुण्, धोव्, नद्ध्, नम्, नस्स्, नह्, निह्, ने, न्ना, न्हा, पज्ज्, पव्, पाउण्, पुस्, पधु, वीह्,

मुञ्ज्, मुड्, भम्, भञ्ज्, भम्, भिद्, भुज्, मज्ज्, मन्न्, मर्, माद्, मिला, मुच्, मुञ्ज्, मुम्, म्हि, यम्, रस्, रञ्ज्, रम, रिप्, रुभ्, रुञ्ज्, रुद्, रुह्, रुभ्, लिप्, लुप्, लुभ, ल्हिप्, वच्, वम्, वर्, वरस्, वह्, वा, विध्, विच्, विज्, विज्ज्, विस्, सक्क्, सद्, सर्, सव्, प-सह्, सिञ्च्, सिलिस्, सुञ्ज्, सुण्, सुम, सुस्स्, आ स्मम्, वि स्सम्, हण्, हा, हुण् एते असादय । अत्र ये सोपसर्गा निर्दिष्टास्ते तत्तदुपसर्गपूर्वका एवात्र गणे बोध्या ।

## कत्तादिभ्यो वा ।२।१।५०॥

कत्तादिगणपठितेभ्यस्ततवन्तौ वा स्याता पूर्वोक्तेऽर्थे । उकत्त, उक्कत्तिय । उक्खित्त, उक्खिविय । गय, गमिय । आइण्ण, आयरिय । पुट्ठ, पोसिय । पुट्ठय, पुट्ठवतो । पोसियव, पोसियवन्तो ।

कत्तादिभ्य इति—भूते भावकर्मणो कर्त्तरि तस्तवन्त इत्येतेपामनुवृत्ति पूर्वसूत्रात् । पूर्वसूत्रेण नित्य विहितौ ततवन्तावनेन विकल्प्येते । पक्षे इतेतवन्तौ भवत इति । क्तो भावकर्मणोरन्य कर्त्तरीत्यादिविवेकस्तु पूर्ववत् । उकत्+त इति स्थिते त्रयाणामिति पूर्वतकारलोपे उकत्त । इते उक्कत्तिय । उत्पूर्वकक्खिव्-धातोरुक्खित्त, उक्खिविय । गम्धातोर्गय, गमिय । आपूर्वकचर्धातोराइण्ण, आयरिय । आइण्णमित्यत्र किरादित्वान्नकार । पोस्धातो पुट्ठ, पोसिय । पुट्ठमित्यत्र इसादित्वात्तस्य ठकार सयुक्ते ह्रस्वश्च । पुट्ठव, पुट्ठवतो इति तवन्तस्योदाहरणम् । पोसियव, पोसियवतो इति त्वितवन्तयोरुदाहरण बोध्यम् । कत्, वि अज्, नि कर्, वि आ कर्, सत्-कर्, उद्-कस्, किलाम्, वि-कीर्, उत्-कम, आ-क्खा, क्खिव्, उद् खण्, क्खुम्, गम, आ गम्, गस्, गाह्, गिज्झ्, गीर्, गुह्, घस्, चर्, चय्, छाद्, छिद्, जर्, ज्झाम्, तर्, तस्, तुस्, वित्थर्, स त्थर्, उद्-दिस्, आ-दीन्, प नम्, भव्, पीण्, पुच्छ्, पुर्, पोस्, फास्, भय्, मा, रस्, लव्, लुच्, वड्ढ्, सम् वर्, विद्, विह्, सस्, सज्ज्, सम, सास्, सिर्, उत स्सस्, णिर् स्सस्, हण्, हर्, हरिस्, हव्, एते कत्तादय ।

## त्थुणादीना ततवन्तयो ।३।४।४०॥

एषामन्त्यस्य लोप' स्यात् ततवन्तयो' परयोः । थुओ । अभित्थुओ । गूढो । जितो । उण्णओ । हतो । रतो । ततो । हतव । हतवतो । जितव । जितवतो । गयन । गयवतो । पीओ । पीई ।

स्थुणादीनामिति—लोप इत्यनुवर्त्तते । षष्ठीनिर्देशादन्त्यस्य लोप । स्थुण्-धातोस्तप्रत्यये णलोपे थुओ । गूह्धातोस्तप्रत्यये गाह्यादित्वात्तस्य ढकारेऽनेना न्त्यलोपे गूढो । जिण्धातोर्जितो । उत्पूर्वकनम्धातोः उण्णओ । हण्धातोर्हतो। रम्धातोरतो । तन्धातोस्ततो । हतमित्यादीनि तवन्तस्योदाहरणानि । स्थुण्, कर्, उत-खण्, गम्, गाह्, अव-गुर्, गूह्, चिण्, च्छुभ्, जम्, जिण्, जूह्, ज्झाम्, झिझ्, तन्, त्थर्, धुण्, धोव्, नम्, पाउण्, पीण्, कुम्, मन्न्, मर्, रम्, रुह्, वर्, वह् (ऊह्), विह्, सर्, प-सह्, सुण्, हण्, हर्। एते स्थुणादय ।

## इधादिभ्यो ध ।२।४।२॥

एभ्य परस्य तस्य धः स्यात् । इद्ध । समिद्ध । जुद्ध । निउत्तो । पउत्तो । जुद्धव । जुद्धवतो । इद्धव । इद्धवतो ।

इधादिभ्य इति—ततवन्तयोरादेरित्यनुवर्त्तते । इध्धातोस्तप्रत्ययेऽनेन तस्य धकारे धकारस्य परसवर्णेन दकारे इद्ध । जुज्झ्धातोर्जुद्ध । तकारस्य धकारे झकारस्य परसवर्णेन दकारे व्यञ्जनत्रयसयोगाज्जस्य लोप । निपूर्वकजुज्धातो र्निउत्तो । जकारस्य यकारे लोप । पउत्तो इत्यत्र यलोपे प्रकृतिभाव । केवलात्तु-जुत्तो । जुद्धवमित्यादीनि तवन्तस्योदाहरणानि । इध्, खुभ्, गिज्झ्, जुज्झ्, थम्, दिह्, दुह्, नद्ध्, नह्, निह्, बध्, बुज्झ्, रुभ्, लभ्, लुभ्, विध्, सिज्झ्, सुज्झ् । एते इधादय ।

## आरभो वा ।२।४।३॥

आपूर्वकरभ्धातो॰ परस्य तस्य धो वा स्यात् । आरद्ध ।

आरभ इति—ततवन्तयोरादेर्द्ध इत्यनुवर्त्तते । आ+रभ्+त इति स्थिते तकारस्य धकारे भकारस्य परसवर्णेन दकारे श्रयाणामित्यनुस्वारलोपे आरद्ध । पक्षे—

## आतो रंभो ढत् ।२।४।१९॥

आत परस्य रभ्धातोर्ढदित्यादेशो वा स्यात् ततवन्तयो॰ । आढत्त ।

आतो रभ इति—ततवन्तयोरित्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । आ+रभ्+त इत्यत्र धातोर्ढदादेशे दकारस्य परसवर्णेन तकारे आढत्त । आरब्धमित्यर्थ ।

## इसादिभ्यष्ठ आदेस्ततवन्तयो ।२।४।१॥

इसादिगणपठितेभ्यो धातुभ्य परस्य तस्य ठ स्यात् । इट्ठ । धुट्ठ । तुट्ठ । पुट्ठ । मट्ठ । समट्ठ । विट्ठ । सिलिट्ठ ।

इसादिभ्य इति—इस्धातोस्तप्रत्ययेऽनेन तकारस्य ठकारे सकारस्य परसवर्णेन टकारे इट्ठ । घुसधातोर्घुट्ठ । तुसधातोस्तुट्ठ । पुन्छ्धातोस्तप्रत्यये तकारस्य ठकारे छकारस्य परसवर्णेन चकारे त्रयाणामिति प्रथमचकारलोपे पुट्ठ । भस्धातोर्भट्ठ । सपूर्वकमज्ज्धातो समट्ठ । त्रयाणामित्यनेन प्रथमजकारस्य लोप' । विस्धातोर्विट्ठ, पविट्ठमिति । सिलिस्धातो सिलिट्ठ । सर्वत्र सकारस्य परसवर्णेन टकार । इस्, कस्, किलिस् निर्-उव-क्विस्, पडि क्रोस्, घस्, घुस्, तस्, तुस्, दस्, दिस्, दुस्, नस्स्, पुच्छ्, पोस्, फास्, भस्, स-मज्ज्, मुस्, रुस्, वरस्, विस्, सास्, सिर्, सिलिस्, हरिस् । एते इसादय ।

## निर. पुच्छ उतोऽत् ।२।४।२०॥

निर' परस्य पुच्छ्धातोरुकारस्याकारो वा स्यात्तवतयोः । निप्पट्ठ । निप्पुट्ठ ।

निर. पुन्छ इति—वा ततवतयोरित्यनुवर्त्तते । निर्पूर्वक्पुच्छ्धातो निप्पट्ठ । उकारस्याकारो वा भवति ।

## फास्वरस्हरिसां पुर्वुर्हिसः ।२।४।३२॥

एपा क्रमेण पुस् वुस् हिस् इत्येते आदेशा स्युस्ततवतयो । पुट्ठो । वुट्ठो । हिट्ठो ।

फास् इति—ततवतयोरित्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । फास्धातोस्तप्रत्यये पुसादेशे इसादिभ्य इति सूत्रेण ठादेशे परसवर्णे पुट्ठो । वरस्धातोर्वुसादेशे तकारस्य ठकारे वुट्ठ । हरिस्धातोस्तप्रत्यये चकारे परसवर्णे हिट्ठ । फास्हरिसो क्त्वादित्वात्पक्षे इतप्रत्यये फासिय । हरिसियमिति ।

## चरादीनामिरुपधाया ।२।४।३६॥

एपामुपधाया इकारो बहुल स्यात्ततवन्तयो' । उक्कित्तो । उक्कत्तो । चिण्णो । जिण्णो । तिण्णो । पवित्तो ।

चरादीनामिति—ततवन्तयोरित्यनुवर्त्तते । उत्पूर्वक कत्तधातोस्तप्रत्ययेऽनेनात इकारे व्यञ्जनत्रयसयुक्ते पूर्वतस्य लोपे दस्य परसवर्णेन ककारे उक्कित्तो । चर्धातोस्तप्रत्यये तस्य नत्वे रेफस्य परसवर्णेऽनेनेकारे चिण्ण । जर्धातोर्जिण्ण । तर्धातोस्तिण्ण । पपूर्वकवत्त्धातो पवित्तो । बहुलग्रहणात् क्वचिन्नित्य क्वचिद्विकल्प । चर्, उद्-कत्त्, उद्-कम्, जर्, तर्, प वत्त्, एते चरादय ।

## उद कसो वा सलोपो ।२।४।४॥

उद' परस्मात्कस्धातो' परस्य ततवन्तयोरादेस्तस्य सकारो लोपश्च वा भवत

## च्छह इते ।२।३।२७॥

च्छिन्धातोश्छहादेशः स्यादितप्रत्यये परे । छहियं । छिन्न । छिन्नन्तो ।

छह इति—च्छिद् इत्यनुवर्तते । अनेन वर्णात्परसवर्णादेश । च्छिद्धातोरित प्रत्यये च्छहादेशे छहिय । तप्रत्यये तु छिन्न । दकारात्परस्य तकारस्य नकारे दस्य परसवर्णे नकारे अनुस्वारस्य त्रियत्रासयोगाल्लोपः । अतएव 'वेयगच्छहिय अगन्छहिय करेह' इति सूत्र० २।२।३५,। इति ।

## फुसादिभ्योड ।२।४।११॥

एभ्य. परस्य तस्य डः स्यात् । फुड । णिव्वुड । पाउड । णीहड । परिवुडो । सवुडो ।

फुसादिभ्य इति—ततवन्तयोरादेरित्यनुवर्त्तते । फुस्धातोस्तप्रत्यये तस्य डकारे त्थुणादित्यात्सकारलोपे फुड । पाउण्धातो पाउड । "हेमतेसु अवाउडा" दस० ३,१२,। निर्पूर्वकहर्धातो णीहड । परिपूर्वकवर्धातो परिवुडो । सपूर्वकवर्धातो सवुडो । फुस्, पाउण्, णुवुड्, परिवर्, स-वर्, हर्, एते फुसादय ।

## करादिभ्यो वा ।२।४।१४॥

करादिभ्य' परस्य तस्य डो वा स्यात् । कड, कय । सुकड, सुकय । दुकड, दुकय । पुरेकड, पुरेकय । पुराकड, पुराकय । उत्थड, उत्थय । मडो । गुड़ो । मिओ । मओ । णिव्वुडो, णिव्वुओ ।

करादिभ्य इति—ततवन्तयोरादेर्डो इत्यनुवर्त्तते । कर्धातोस्तप्रत्यये तस्य डकारे त्थुणादित्वाद्रेफलोपे कड । पक्षे तकारस्य यकारे कय । सोपसर्गात्कर्धातोर्यदि स्यात्तदा सुदुरपुरेपुराभ्य एव स्यान्नान्योपसर्गादिति प्रदर्शनार्थं करादिगणे तत्तदुपसर्गाणामुपादानम् । मर्धातो फुसादिगणे पाठादुकार । चरादिगणे पाठादिकार । निपूर्वकवर्धातोरपि फुसादित्वादुकार । बाहुलकानित्यमिति । कर्, आ-कर्, दुर्-कर्, पुरा-कर्, पुरे-कर्, सु-कर्, उत्-त्थर्, वित्थर्, स-त्थर्, मर्, निर्-वर्, सर्, एते करादय ।

## त्थरो वेश्च्छितु ।२।४।२३॥

वे' परस्य त्थरश्च्छिदादेशो वा स्यात्तवन्तयो' । निच्छिन्न ।

त्थर इति—ततवन्तयोर्वेत्यनुवर्त्तते । विपूर्वकत्थर्धातोस्तप्रत्ययेऽनेन धातोश्छिच्छदादेशे किरादित्वात्तस्य नकारे दकारस्य परसवर्णेन नकारे निच्छिन्न । विस्तीर्णमित्यर्थ । च्छिदादेशस्यैव किरादौ पाठाद्यदा न च्छिदादेशस्तदा करादित्वात्तस्य डकारो भवतीति बोध्यम् ।

## संविभ्यां त्थरो ड• ।२।४।६७॥

सविभ्यां परस्य त्थर् धातोर्डकारादेशो वा स्यादितेतवन्तयोः । सथडिय । सथरिय । सथड । वित्थडिय । वित्थरिय । वित्थड ।

सविभ्यामिति—इतेतवन्तयोर्वेत्यनुवर्त्तते । सम्पूर्वकत्थर्धातोरितप्रत्ययेऽनेन रेफस्य डकारे सथडिय । डकाराभावे सथरिय । नमादित्वादिताभावे तप्रत्ययस्य डकारे सथड । एवमग्रेऽपि ।

## उन्निरोभ्य• सरो डढौ ।२।४।९॥

उन्निरोभ्य• परस्मात्सर्धातो• परस्य तस्य डढौ पर्यायेण स्याताम् । ऊसडो । ऊसढो । ऊसिओ । णीसडो । णीसढो । णीसिओ । समोसढो । समोसरिओ ।

उन्निरोभ्य इति—ततवन्तयोरादेरित्यनुवर्त्तते । तस्येति फलितार्थ । उच्च निश्च ओश्चेति द्वन्द्व । उदुपसर्ग निरुपसर्ग ओ उपसर्गश्च । उत्पूर्वक्सर्धातोस्तप्रत्यये तस्य डकारे त्थुणादित्वादन्त्यलोपे ऊसडो । तस्य ढकारे ऊसढो । पक्षे इतप्रत्यये धरादित्वाट्टिलोपे उसिओ ऊसिओ वा । एवमन्यत्रापि । समोपूर्वक्सर्धातोस्तु समोसढो । इतप्रत्यये समोसरिओ । समोसडो इति तु नोपलभ्यते ।

## उदातो हडो हु• ।२।४।९९॥

उदात• परस्य तप्रत्ययान्तहर्धातोर्हुरित्यादेशो वा स्यात् । उदाहू । उदाहडो । उदाहिओ । उदाहरिओ ।

उदात इति—वेत्यनुवर्त्तते । उद्+आ+हडो इति स्थितेऽनेन प्रकृतिप्रत्यययोरुभयो स्थाने हु इत्यादेशे उदाहू । पक्षे उदाहडो । इप्रत्यये धरादित्वाट्टिलोपे उदाहिओ । तदभावे उदाहरिओ ।

## समो हरो घ इते ।२।४।८१॥

समः परस्य हर्धातोर्हकारस्य घकारो वा स्यादिते परे । सघिओ । सहिओ । सघरिओ । सहरिओ ।

सम इति—आदेरित्यनुवर्तते। सपूर्वकदह्धातोरितप्रत्ययेऽनेन आदेशे टिलोपे सधिओ। टिलोपाभावे घादेशे सघरिओ। तप्रत्यये सड्ढो।

## गिज्झो गढः ।२।३।३८॥

अस्य गढादेशः स्यादिते परे। गढिओ।

गिज्झ इति—इत इत्यनुवर्तते। अनेकवर्णत्वात्सर्वादेश। गिज्झधातोरित प्रत्यये गढादेशे गढिओ।

## गाहादिभ्यो ढः ।२।४।६॥

एभ्यः परस्य तस्य ढः स्यात्। गाढ। गूढ। जूढ। दड्ढ।

गाहादिभ्य इति—ततवन्त्वयोरादेरित्यनुवर्तते। गाहधातोस्तप्रत्यये तस्य ढकारे त्युणादित्वाद्धकारलोपे गाढ। गुह्धातोर्गूढ। जूह्धातोर्जूढ। त्युणादित्वाद्ध-लोपः। दह्धातोस्तस्य ढकारे हकारस्य परसवर्णेन डकारे दड्ढ। गाह्, गुह्, च्छुभ्, जहा, जूह्, दह्, मुग्ध्, रुह्, षड्ढ्, वह्, व्हिद्, पा-सह्, एते गाहादयः।

## रुहादीनामादेः ।२।४।२५॥

एषामादेः स्वरस्य दीर्घः स्यात्तवन्तयोः। रूढ। दुरूढ। समभिरूढं। कीय। खीण। उच्छूढ। झीण। लीण। उव्वीढ।

रुहादीनामिति—ततवन्तयोर्दीर्घ इत्यनुवर्तते। स्वरस्येत्युपतिष्ठते। रुह्-धातोस्तप्रत्यये तस्य ढकारे त्युणादित्वाद्धकारलोपेऽनेन दीर्घे रूढ। क्षिधातो-स्तप्रत्यये किरादित्वात्तस्य नकारेऽनेन दीर्घे खीण। उत्पूर्वकच्छुभ्धातो-स्तस्य ढकारेऽन्त्यलोपे दीर्घे उच्छूढ। झिझ्धातो किरादित्वात्तस्य नकारेऽ-न्त्यलोपे दीर्घे झीण। लियूधातोस्तस्य नकारेऽन्त्यलोपे सयुक्तादेर्लोपे दीर्घे लीण। उत्पूर्वकव्हिद्धातोरुव्वीढ। रुह्, किण्, क्खि, च्छुभ्, झिझ्, लिय्, व्हिद्, एते रुहादयः।

## जहो ज ।२।४।२८॥

जहाधातोर्जादेशः स्यात्तवन्तयोः। जढ।

जह इति—ततवन्तयोरित्यनुवर्तते। अकारान्तोयमादेशस्तेनानेकवर्ण-त्वात्सर्वस्य भवति। जहाधातोस्तप्रत्यये जादेशे गाहादित्वात्तस्य ढकारे जढमिति।

## वड्ढोऽत उत् ।२।४।३९॥

अस्यात उकारः स्यात्तवन्तयोस्तौ च । वुड्ढो ।

वड्ढ इति—तवन्तयोस्तौ इत्यनुवर्त्तते । वड्ढस्तप्रत्यये गाहादित्वात्तस्य ढकारे त्रयाणामित्यादिव्यञ्जनलोपेऽनेनाकारस्योकारे वुड्ढो । तावित्यस्योदाहरण तु वुड्ढी ।

## वह ऊह् ।२।४।२९॥

अस्य धातोः स्थान ऊहादेशः स्यात्तवन्तयोः । ऊढ । उव्वूढं । निव्वूढ ।

वह इति—तवन्तयोरित्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । वह्धातोस्तप्रत्यये ऊहादेशे तस्य ढकारे ष्टुणादित्वादन्त्यलोपे ऊढ । उत् वि ऊढ इत्यत्रेकारस्य वकारे व्यञ्जनत्रयसयुक्ते तस्य लोपे उव्वूढ । एव निर् वूढ=निव्वूढ ।

## मुज्झपवोर्मूप्पू ।२।४।२३॥

मुज्झ्पव्धात्वोः क्रमेण मूप्पू इत्येतावादेशौ स्याता तवन्तयोः । मूढ । पुय । उवप्पुय ।

मुज्झति—अनुवृत्ति पूर्ववत् । मुज्झ्धातोस्तप्रत्यये गाहादित्वात्तस्य ढकारेऽनेन मू इत्यादेशे मूढ । समूढ । पव्धातोस्तप्रत्यये प्पु इत्यादेशे तस्य यकारे पुय ।

## भजादिभ्यो ग ।२।४।८॥

एभ्यः परस्य तस्य गः स्यात् । भग्गो । उम्मुग्गो । उम्मग्गो । लग्गो, रुग्गो । उव्विग्गो ।

भंजादिभ्य इति—तवन्तयोरादेरित्यनुवर्त्तते । भज्धातोस्तप्रत्यये गकारादेशो त्रिव्यञ्जनसयोगेऽनुस्वारलोपे परसवर्णे भग्गो । उत्पूर्वकमज्ज्धातोस्तप्रत्यये तस्य गकारे कसादित्वादुकारे त्रयाणामित्याद्यजकारलोपे द्वितीयजकारस्य पर सवर्णे उम्मुग्गो । रुज्धातो रुग्गो । उत्पूर्वकविज्धातोरुव्विग्गो । भन्, मज्ज्, रुज्, लग्, विज्, एते भजादय ।

## चुक्कादिभ्य कः ।२।४।१०॥

एभ्य परस्य तस्य कः स्यात् । चुक्क । छुक्क । पक्क । सुक्क ।

चुक्कादिभ्य इति—तवन्तयोरादेरित्यनुवर्त्तते । चुक्क्धातोस्तप्रत्यये तस्य

फकारे व्यञ्जनपरे प्रथमव्यञ्जनलोपे फुस । लुट्धातोर्णप्रत्यये फादेशे लुफ । पच्धातोर्णप्रत्यय पफ । गुस्म्धातोर्णप्रत्यये फादेशे व्यञ्जनत्रयसंयुक्ते पूर्वमकारलोपेऽवशिष्टस्य परमवर्णे गुफ । घुषर्, पच्, लुट्, गुस्स्, एते घुफादय ।

## मुचादिभ्य ।२।४।१७॥

एभ्य परस्य तप्रत्ययस्य क्को वा । मुक्को । मुत्तो । रिक्क । रित्त । छिक्क । छिन्न । विनित्त । विचित्त ।

मुचादिभ्य इति—वा तनवन्तयोरादेरित्यनुवर्त्तते । मुच्धातोस्तप्रत्यये तकारस्य ककारे त्रिव्यञ्जनसयुक्ते ऽनुस्वारलोपे परमवर्णे मुक्को । पक्षे चकारस्य तकारे मुत्तो । एव रिक्कादय । मुच्, छिद्, रिच्, विच्, एते मुचादय ।

## पुरेस्स्तस्य वा ।२।४।६१॥

पुरे परस्य तप्रत्ययसहितस्य कर क्खडादेशो वा स्यात् । पुरेक्खडो । पुरेकडो । पुरेकओ ।

पुरेरिति—कर क्खड इत्यनुवर्त्तते । पुरेरिति पञ्चम्यन्तम् । पुरे+कर्+त इति स्थितेऽनेन क्खडादेशे पुरेक्खडो पुरस्कृत इत्यर्थ । आदेशाभावे कर्धातोस्तप्रत्यये कृतादिभ्य इति सूत्रेण तस्य डकारे स्थुणादित्वाद्रेफस्य लोपे कडेति निष्पन्ने पुरेशब्देन समास । उपात्परस्य करस्तु उपात्कर इति सूत्रेण क्खडादेशे उवक्खड्+त इति स्थिते कृतादिभ्य इत्यनेन तस्य डकारे स्थुणादित्वात्पूर्वडकारस्य लोपे उवक्खडो । कृतादित्वादितप्रत्यये तु उवक्खडिओ ।

## वेरात् ओद्धपरके करि ।२।४।१०५॥

वे. परस्याकारोपसर्गस्यौदादेश स्याद्धपरके कर्धातौ परे । वोगडो । वोयडो ।

वेरात इति—वेरित्यनुवर्त्तते । विआ+कडो इत्यवस्थायामनेनौकारादेशे वेरिकारस्य वकारे सयुक्तादेर्लोपे वोगडो । कस्य ग । गस्य यकारे वोयडो । डकाराभावे वाकओ । विआगओ ।

## धरादीनामिलेतवन्तयोर्वा ।४।१।२७॥

एषा टेर्लोपो वा स्यादितेतवन्तयो परयो । उद्धिओ । सभिओ । आइओ । आसिय । उस्सिओ ।

धरादीनामिति—टेर्लोप इत्यनुवर्त्तते । उत्पूर्वकधर्धातोरितप्रत्यये टेर्लोपे

उद्धिओ । पक्षे उद्धरिओ । सपूर्वकभर्धातो सभिओ, समरिओ । आपूर्वक-दर्धातोर्ध्देर्लोपे दकारस्य यकारे लोपे आइओ । पक्षे आयरिओ । उत्पूर्वक-स्सय्धातो उसिसओ उच्छ्रित इत्यर्थे । आपूर्वकसिच इते टिलोपे आसिय । धर्, दर्, भर्, स्मय्, सर्, सिच्, हर्, एते धरादय ।

## आतो लग्ग इतेतवन्तयो ।४।१।५०॥

आत' परस्य लग्गधातोरन्त्यस्य लोपः स्यादितेतवन्तयो' । आलइय ।

आत इति—लोप इत्यनुवर्त्तते । आपूर्वकलग्ग्धातोरितप्रत्ययेऽनेनान्त्य-गकारलोपे आलगिय । गकारस्य यकारे लोपे आलइय ।

## पलोट्ट आदेस्ततवन्तयोः ३।४।५५॥

पपूर्वकलोट्ट्धातोः परस्य तस्य लोपः स्यात् । पलोट्ट ।

पलोट्ट इति—ततवन्तयोरादिस्तकार एवेत्युक्त तस्येति । प-लोट्टस्तप्रत्यये तकारस्य लोपे पलोट्ट ।

## अभेरजोऽत इत् ।२।३।४०॥

अभे' परस्याज्धातोरकारस्येकारो वा स्यादिते परे। अब्भिगिए। अब्भगिए।

अभेरिति—इते वेत्यनुवर्त्तते । अभिपूर्वकाज्धातोरितप्रत्ययेऽनेन धातो-रकारस्येकारे उपसर्गेकारस्य भकारे पूर्वभकारस्य परसवर्णेन बकारे अब्भि-गियो । पक्षेऽब्भगिओ ।

## पलेर्होऽत्थे ।४।४।५३॥

पलेर्हकारः स्यात् त प्रत्ययान्तास्धातौ परे । पल्हत्थो ।

पलेरिति—अत्थे इति अस्धातोस्तप्रत्ययान्तरूप तदाह—तप्रत्ययान्तेति । तस्मिन् परे पलेरिकारस्य हकारे पल्हत्थो—पर्यस्त इत्यर्थ ।

## वे परेरोच्च. ।४।४।५४॥

वे परस्य परेरोचादेश' स्यात्तप्रत्ययान्तास्धातौ परे । वोचत्थो ।

वेरिति—अत्थे इत्यनुवर्त्तते । तस्मिन् परे परेरोचादेशे स्वरयोरव्यवधाने वेरिकारलोपे वोचत्थो । ओचादेशो व्यञ्जनान्त । पर्यस्त इत्यर्थ ।

## उवाद्वट्टे ।४।२।१॥

उवात्परस्येधातोर्वडागम स्यात्ते परे । उववेओ ।

उवादिति—एरित्यनुवर्त्तते । आगमेऽकारो नोच्चारणार्थं । तेन उवपूर्वके धातोस्तप्रत्यये वडागमे वकारोत्तराकारेण धातोर्वृद्धौ उववेओ–उपेत इत्यर्थं ।

## ए' परेस्तस्य ।४।१।७०॥

परिपूर्वकेधातोः परस्य तप्रत्ययस्य तडागमः स्यात् । परित्तो ।

एरिति—तडित्यनुवर्त्तते । परिपूर्वकेधातोस्तप्रत्यये तस्य तडागमे दीर्घे सयुक्ते नित्य ह्रस्वे परित्तो ।

## सम' कुचोऽणितयो' ।४।१।४२॥

समः परस्य कुचोऽनुस्वारस्य लोप' स्यादणि परे इते च । सकुइओ । कतो । निक्खतो । किलतो । आयतो । ततो । दतो । धतो । सतो ।

सम इति—अनुस्वारस्य लोप इत्यनुवर्त्तते । सम्पूर्वक-कुच्धातोरितप्रत्ययेऽनुस्वारलोपेऽसयुक्तचस्य यकारे लोपे सकुइओ । निपूर्वककमृधातो निक्खतो । किलामृधातो क्लितो । सयुक्ते ह्रस्वः । आपूर्वकचमृधातोः आयतो । तमृधातोस्ततो । दमृधातोर्दतो । धमृधातोर्धतो । स्समृधातो सतो ।

## योजने जोयो इताविततवन्तयो' ।२।४।६५॥

जोय्धातोर्डतौ पर्यायेण स्त इततवन्तयोर्योजनेऽर्थे । जोडिय । जोतिय ।

योजन इति—इतावित्यादेशद्वय । तयैकस्मिन् स्थाने न सम्भवत्त आह पर्यायेणेति तथा च फलत एषोऽर्थो लभ्यते षष्ठीनिर्देशेनान्त्यस्य तौ भवत । आदेशे चाकार उच्चारणार्थं । योजनार्थकजोय्धातोरितप्रत्यये यस्य डकारे जोडिय । जोडियवतो । अन्यत्र जोइय तकारे जोतिय ।

## परे' क्कोस ।२।४।५६॥

परे' परस्य क्रोमृधातोरादेर्लोप. स्यात्ततवन्तयो' । परिहुट्टो ।

परेरिति—आदेर्लोप इति ततवन्तयोरिति चानुवर्त्तते । परिपूर्वकक्रोम्-धातोस्तप्रत्ययेऽनेनादे ककारस्य लोपे परिकुट्टो । तस्य टकारे मकारस्य परसवर्णेन टकारः । अपूर्वत्वाभावात्तथगुक्तम् । परिकुट्टवतो ।

## आत क्त्तो वा घा. ।२।४।२१॥

आत परस्य क्खाधातोर्घादेशो वा स्यात् ततवन्तयो. । आघाओ । आगातो । अक्खातो ।

आत इति—तवतयोरित्यनुवर्त्तते । आपूर्वकक्राधातोस्तप्रत्यये घादेशे आघाओ । पक्षे सयुक्ते ह्रस्वे अक्त्राओ । आघातवतो । अक्राातवतो । अन्यत्र त्राओ । विक्त्राओ । पक्त्राओ ।

## ज्झामो म· ।२।४।१६॥

ज्झामृधातो· परयोस्ततनतयोरादेर्मकारो वा । झामो, झायो । झामवतो । झायवतो ।

ज्झाम इति—ततवतयोरिति आदेरिति वेति चानुवर्त्तते । ज्झामृधातोस्तप्रत्ययेऽनेन तकारस्य मकारे धातोरन्त्यस्य लोपे झामो । पक्षे तकारस्य यकारे झायो ।

## गसो घ· ।२।४।५॥

अस्यादेर्धकार· स्यात्ततवन्तयोः । घत्थो ।

गस इति—आदेरिति ततवन्तयोरिति चानुवर्त्तते । गस्धातोस्तप्रत्यये 'सात्थ' इत्यनेन तस्य थकारे सकारस्य परसवर्णे आदेरनेन घकारे घत्थो ।

## अवस्य गुये ।४।२।२२॥

अस्योपसर्गस्य मगागम स्यात्तप्रत्ययान्तगुरुधातौ । अवगुय ।

अवस्येति—गुये इति गुरुधातोस्तप्रत्यये त्थुणादित्वाद्रस्य लोपे तकारस्य यकारे सप्तम्या रूपम् । अत एवाह—तप्रत्ययान्तेति । मगित्यनुवर्त्तते । अव + गुय इति स्थिते मगागमेऽनुस्वारे—अवगुय ।

## चयोऽतट् ।२।४।१३॥

चय्धातो· परस्य तप्रत्ययस्यातडागमः स्यात् । चियत्त ।

चय इति—तस्येत्यनुवर्त्तते । चय्धातोस्तप्रत्ययेऽतडागमे चरादित्वादुपधाया इकारे चियत्त । आगमे तकारोत्तराकार उच्चारणार्थ ।

## विपरिभ्यामदितोश्चिणो ज· ।२।४।९७॥

आभ्या परस्य चिण्धातोरादेर्जकारो वा स्याददितोः परयोः । परिचिय ।

विपरिभ्यामिति—आदेर्वेत्यनुवर्त्तते । अत्र यथासख्यमन्वय । तद्यथा वे परस्याति परे परस्य चेते चिण्धातोरादेर्जकारो वा स्यादित्यर्थ । परिपूर्वकचिण्धातोरितप्रत्ययेऽनेन चकारस्य जकारे त्थुणादित्वादन्त्यलोपे परिजिय । पक्षे परिचिय । अत उदाहरण तु विजयो । विचयो ।

## धुणो दीर्घः ।२।४।२४॥

अस्य स्वरस्य दीर्घो वा ततवतयोः । धूत । धुत ।

धुण इति—वा ततवतयोरित्यनुवर्त्तते । धुण्धातोस्तप्रत्ययेऽनेन दीर्घे त्धुणादित्वाण्णस्य लोपे धूत । धूतवतो । दीर्घाभावे धुत ।

## आनिर्भ्यामिदीतौ नेः ।२।४।२२॥

आभ्यां परस्य नेधातोरिदीतौ पर्यायेण स्याताम् ततवन्तयोः । आणिय । आणीय । णीणिय । णीणीय ।

आनिर्भ्यामिति—वा ततवतयोरित्यनुवर्त्तते । आपूर्वकनेधातोस्तप्रत्यये ह्रस्व इकारे आणिय । दीर्घे आणीय । णीणिय इत्यत्र निर्निय इति स्थिते अरसादित्वाद् दीर्घे रेफस्य लोपे नकारयोरुभयोर्णत्वम् । तवते आणियवतो । आणीयवतो । णीणियवतो ।

## वीहो भी ।२।४।३१॥

अस्य भीरादेशः स्यात्ततवतयो । भीय । भीत ।

वीह इति—ततवतयोरित्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । वीहूधातोस्तप्रत्यये भी इत्यादेशे तस्य यकारे भीय ।

## आतो दिहूदीवोर्ल ।२।४।१५॥

आतः परयोर्दिहूदीवूधात्वोरादेर्लो वा ततवतयोः । आलिद्ध । आइद्ध । आलित्त । आदित्त ।

आत इति—ततवतयोरित्यनुवर्त्तते । आदेर्वेति च । आदेशेऽकार उच्चारणार्थ । आपूर्वकदिहूधातोस्तप्रत्यये इधादिभ्य इत्यनेन तस्य धकारे हकारस्य परसवर्णेन दकारेऽनेन सूत्रेण धातोरादेर्लकारे आलिद्ध । तदभावे दस्य यकारे लोपे प्रकृतिभावे आइद्ध । आपूर्वकदीवूधातोस्तप्रत्यये आदेर्लकारे वकारस्य परसवर्णेन तकारे सयुक्ते ह्रस्वे आलित्त । लकाराभावे आदित्त ।

## गहृ इत ।३।३।५४॥

अस्मात्परस्येतो दीर्घो वा स्यात् । गहीय । गहिय । गहीयव्व । गहियव्व ।

गहृ इति—दीर्घो वेत्यनुवर्त्तते । गहूधातोरितप्रत्यये तत्सम्बन्धिन इतो

दीर्घे गहीय । इत इति सामान्यतयोपादानेनागमसम्बन्धिप्रत्ययसम्बन्धिनोरुभयोर्ग्रहणादुभयमुदाहृतम् । गाहूधातोस्तव्वे मतीटि दीर्घे गहीयव्व ।

## दूस इणे णौ ।२।१।५१॥

अस्माद्धातोर्भूतेऽर्थे इण ईण इत्येतौ प्रत्ययौ स्त' ।

दूस इति—भूते इत्यनुवर्त्तते । णकारो नेत्संज्ञक । तेन वृद्धेरप्राप्तौ वक्ष्यमाणसूत्रेण विधीयते ।

## दूस इणेणयो' ।३।२।६॥

अस्योपधाया वृद्धि' स्यादिणेणयोः परयो' । दोसिणो । दोसीणो ।

दूस इति—उपधाया वृद्धिरित्यनुवर्त्तते । दूस्धातोर्भूते इणेणयो प्रत्यययोरनेन वृद्धौ दोसिणो । दोसीणो । दूषित पर्युषितमन्नमित्यर्थ ।

## रडातो गमि क्वचित् ।४।२।१०॥

आत उपसर्गस्य गम्धातौ परे क्वचिद्रडागमः स्यात् । अणुरागय । गतिरागती ।

रडात इति—आदुपसर्गस्य गम्धातौ परे न सर्वत्र रडागमो भवति । किन्तु क्वचिदेव प्रयोगेऽत उक्त क्वचिदिति । तेन सागय सुसागयमित्यत्र नागम । अणुरागयमित्यत्र भवति । उदाहृतञ्च—'सागय खदया' सुसागय खदया' अणुरागय खदया" इति भग० २, १, एवमेव 'गतिरागति करेज्जा' भग० ७४, १, प्रयोगद्वयदर्शनेनैव तु निश्चीयते यत्किञ्चित्पूर्वकत्व एवायमागम नत्वपूर्वस्यात इति।

## भरो हु' ।२।४।२०॥

भर्धातोर्हुरित्यादेश' स्याक्तक्तवतयोः । निहुत ।

भर इति—क्तक्तवतयोरित्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । निपूर्वकभर्धातोस्तप्रत्ययेऽनेन हु इत्यादेशे निहुत । निभृतमित्यर्थ । तवन्ते हुतवतो ।

## भवूसवूहवामूस्तौ टे ।२।४।२८॥

एषा टेरूसादेश' स्यात्क्तयो परयोः । भूतं । सूत । हूत ।

भवूसविति—क्तक्तवतयोरित्यनुवर्त्तते । सित्त्वात्सर्वादेश । अवूभागोऽत्र टिसंज्ञकस्तस्योसादेशो भवतीति भवूधातोस्तप्रत्ययेऽनेनावूभागस्योसादेशे भूत । सवूधातोरव ऊसादेशे सूत । हवूधातोरूसादेशे हूत । तवते भूतवतो । सूतवतो । हूतवतो ।

## वस उस् ।२।४।७।।

अस्य धातोरुसादेशः स्यात्तवतयोः । उत्थो । वुत्थो ।

वस इति—ततवतयोरित्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । वसूधातोक्तप्रत्ययेऽनेनोसादेशे सात्थ इति सूत्रेण थकारे परसवर्णे वत्थो । अत एव 'वुत्था समय निबद्ध' इति गाथा० ८, सङ्गच्छते ।

## वा वस उस् ।२।३।३९।।

वसूधातोरुसादेशो वा स्यादिते परे । उसिय, वसिय । परिउसिय । परिवसिय ।

वा इति—अनेकवर्णत्वात्सर्वादेश । इत इत्यनुवर्त्तते । वसूधातोरितप्रत्यये उसादेशे उसिय । पक्षे वसिय । एवमग्रेपि ।

## जेमादीनाम् ।२।४।७०।।

एषां स्वरस्य ह्रस्वो नित्यं स्यादितेतवन्तयो परयोः । जिमिय । खुडिय । फुडिय । मुइय । लइय । लुलिय ।

जेमादीनामिति—स्वरस्येत्युपतिष्ठते । ह्रस्व इतेतवन्तयोरित्यनुवर्त्तते । जेमूधातोरितप्रत्ययेऽनेन ह्रस्वे जिमिय । इतवते जिमियवतो । क्खोड्धातो खुडिय । फ्फोड्धातो फुडिय । मोद्धातोर्मुइय । रोय्धातो रुइय । लाधातोर्लइय । लोल्धातोर्लुलिय । जेम्, क्खोड्, फ्फोड्, मोद्, ला, लोल्, एते जेमादय ।

## खादीनां ह्रस्व ।२।४।६९।।

खादीना स्वरस्य ह्रस्वो वा स्यादितेतवन्तयो' । खइय । खाइय । जुसिय । जोसिय । रुइय । रोइय ।

खादीनामिति—इतेतवन्तयोर्वा इत्यनुवर्त्तते । खाधातोरितप्रत्यये ह्रस्वे खइय। तदभावे खाइय । जोसूधातो जुसिय, जोसियमिति । रोय्धातो रुइय । रोइय ।

## पाज् ज्जल उलो वा ।२।४।६६।।

पात्परस्य ज्जल्धातोरुलादेशः स्यादिते परे । पउलिओ ।

पाजिति—इते इत्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । लान्तोऽयमादेश । पपूर्वकज्जल्धातोरिते प्रत्ययेऽनेनोलादेशे प्रकृतिभावे पउलिओ । प्रज्वलित इत्यर्थ । अन्यत्र जलिय उज्जलिय ।

इति ह्रदन्ते भूतार्थप्रक्रिया ।

## कर्त्तरि तारा कणौ ।२।२।१॥

धातोस्तारोऽकण् च प्रत्ययौ स्त. कर्त्तरि । गतारो । मतारो । भोत्तारो । पन्नत्तारो । वत्तारो । कारको । हारको । सुतोसओ ।

कर्त्तरीति—धातो प्रत्यय इत्यनुवर्त्तते । कर्तृत्वलक्षणञ्च पुरोदितमेव । गम्धातोस्तारप्रत्यये मकारस्यानुस्वारे गतारो । अर्हेऽर्थेऽपि तारप्रत्ययो भवति गतु अर्हो गतारो । मन्न्धातोस्तारे प्रत्यये त्रयाणामित्यनेन प्रथमनकारलोपे द्वितीय-नकारस्यानुस्वारे मतारो । भुज्धातोस्तारप्रत्यये त्रयाणामित्यनुस्वारलोपे इदुदुप-धत्वे सपन्ने तारस्य णिद्वद्भावाद्वृद्धौ भोत्तारो । पपूर्वकन्नवूधातो पन्नत्तारो । वच्च्धातोस्त्रयाणामिति प्रथमचकारलोपे द्वितीयचकारस्य परसवर्णे तकारे वत्तारो । कर्धातोरकणप्रत्यये णित्त्वाद्वृद्धौ कारको । एव हारको । अत्राधिकारेऽसमानोऽ-पवादप्रत्ययो विकल्पेन बाधक ।तादृशस्त्रीप्रत्ययस्तु नित्यमेव भवति । क्वचित्क-र्मण्यप्यकण् भवति यथा सुतोसिज्जइत्ति सुतोसओ । सुपूर्वकतुस्धातो प्रेरणाया-मेणि प्रत्यये तदन्तात्कर्मणि अकणि प्रेरणार्थे लोपे सुतोसओ ।

## एस्तारे ।३।२।७॥

इधातोर्वृद्धि. स्यात्तारे । अज्झेयारो ।

एरिति—वृद्धिरित्यनुवर्त्तते । अहिपूर्वकेधातोस्तारप्रत्यये वृद्धौ हात्परस्ये-कारस्य झकारे हकारस्य परसवर्णेन अज्झेयारो ।

## एस्तारे क्किणूजिणोष्टे ।२।३।१४४॥

क्किणूजिणधात्वोष्टेरेसादेशः स्यात्तारे । विक्केयारो । जेयारो ।

एरिति—विपूर्वकक्किणूधातोस्तारप्रत्ययेऽनेन टिभागस्यैसादेशे विक्केयारो । जिणधातोर्जेयारो । विपूर्वकाद्विजेयारो ।

## इतड्गज्जादिभ्यस्तारस्य ।४।२।११॥

गज्जादिभ्यः परस्य तारस्येतडागम स्यात् । गज्जित्तारो । पगब्भित्तारो । चिट्ठित्तारो ।

इतडिति—आगमे टकारष्टित्कार्यार्थ ।अकार उच्चारणार्थ ।गज्ज्धातोस्तार-प्रत्ययेऽनेन तारस्येतडागमे गज्जित्तारो। एवमन्यत्रापि। गज्ज्, ईर्, कड्ढ्, प-गब्भ्, नि-गिण्ह्, उत् चल्, चिट्ठ्, आ च्छिद्, उद्-च्छोल्, जण्, जागर्, परा जिण्, नि-ज्झा, तास्, उद् दव्, प-धार्, ने, निर्-मव्, थरस्, आ हार्, एते गज्जादय ।

## इणूतारयोर्वस्सो वास: ।२।३।१३२॥

वसधातोर्वासादेशः स्यादिणूतारप्रत्यययोः परयोः । वासित्तारो । वासी ।

इणिति—अकार उच्चारणार्थः । वसो गणादिषु पाठात्तारस्येतडागमे वासादेशे वासित्तारो । इणूप्रत्यये वासी ।

## आतो यगकणि ।४।१।६४॥

आदन्तस्य धातोर्यगागमः स्यादकणि परे । अक्खायगो । दायगो । दायए ।

आत इति—धातोरित्युपतिष्ठते तद्विशेषणादातस्तदन्तविधिः । तेनादन्तस्येति लभ्यते । आपूर्वकक्खाधातोरकणि प्रत्यये यगागमे सयुक्ते ह्रस्वे अक्खायगो । कस्य गः । दाधातोर्दायगो ।

## जणूजागर्भ्यामिइतड्वा ।४।२।१२॥

आभ्यां परस्य तारप्रत्ययस्याइतडागमो वा स्यात् । जणइत्तारो । जागरइत्तारो ।

जणिति—तारस्येत्यनुवर्तते । जणूधातोस्तारप्रत्यये तस्याइतडागमे जणइत्तारो । एवं जागरइत्तारो । पक्षे पूर्वसूत्रेण इतडागमे जागरित्तारो ।

## उच्चलोऽइकणू ।२।२।९॥

उत्पूर्वकचलूधातोरइकणूप्रत्ययः स्यात्कर्तरि । उच्चावइओ ।

उच्चल इति—कर्तरीत्यनुवर्तते । णित्त्वाद्वृद्धिः । उत्पूर्वकचलूधातोरइकणूप्रत्यये णित्त्वादुपधाया वृद्धौ उच्चालइओ ।

## उद्विजोऽणकणू ।२।२।२॥

उत्पूर्वकविजूधातोरणकणूप्रत्ययः स्यात्कर्तरि । उव्वेयणगो ।

उद्विज इति—धातोः प्रत्यय कर्तरीत्यनुवर्तते । णित्त्वादुपधाया वृद्धि । उद् + विज् + अणक इत्यत्र जकारस्य यकारे ककारस्य गकारे वृद्धौ उव्वेयणगो ।

## वेर्लुपो लोव ।२।३।११४॥

वे परस्य लुपूधातोर्लोवादेश स्यादकणि परे । विलोवओ ।

वेरिति—कर्त्रर्थेऽकणि परे विपूर्वकलुपो लोवादेशे विलोवओ । आदेशे अकार उच्चारणार्थं । अकणीत्यनुवर्तते ।

## सुणः सव ।२।३।११३॥

सुण' सवादेशः स्यादकणि । सावगो ।

सुण इति—अकणीत्यनुवर्त्तते । सुणः सवादेशेऽकणो णित्वादुपधावृद्धौ फकारस्य गकारे सावगो । श्रावक इत्यर्थ. ।

## आतोऽके थस्य छ ।२।४।८८॥

आतः परस्य त्थर्धातोस्थस्य छो वा स्यादकप्रत्यये परे। अच्छरए। अत्थरए।

आत इति—वा त्थर् इत्यनुवर्त्तते । आपूर्वकत्थर्धातो त्थुणादित्वादक-प्रत्यये थस्य छकारे तकारस्य परसवर्णेन चकारे सयुक्ते ह्रस्वे अच्छरए । छकाराभावे अत्थरए ।

## ओतो घट्टोऽकणि हः ।२।४।८९॥

ओतः परस्य घट्टधातोरादेर्हकारः स्यादकणि परे । ओहट्टए ।

ओत इति—आदेरित्यनुवर्त्तते । ओपूर्वकघट्टधातोरकणि प्रत्यये धातोरादेर्हकारे ओहट्टए । केवलाच घट्टगो । वृद्धिस्तु न । उपधाया विधानात् ।

## जयो वो जयेऽकणि ।२।३।११२॥

जयेऽर्थे वर्त्तमानस्य जय्धातोरन्त्यस्य वः स्यादकणि । जावए ।

जय इति—षष्ठीनिर्देशादन्त्यस्य भवति । जय्धातोरकणि प्रत्ययेऽनेन यस्य वकारे उपधाया वृद्धौ जावए । अन्यत्र जायगो ।

## जावस्य योऽकणि ।२।४।९२॥

आवप्रत्ययान्तजाव्धातोरादेर्यकारः स्यादकणि । यावए ।

जावस्येति—आदेरित्यनुवर्त्तते । जाव्धातोरकणि कृते आदेर्जकारस्य यकारे यावए । प्रेरणार्थकावप्रत्ययान्तनिर्देशोऽय जावस्येति ।

## त्थुणादिभ्योऽक ।२।२।३॥

एभ्यः कर्त्तरि अकः स्यात् ।

त्थुणादिभ्य इति—कर्त्तरीत्यनुवर्त्तते । अकणोऽपवादोऽयमक । त्थुण्, ईर्, कड्ढ्, आ करिस्, फड्, निर् कम्, पडि-चर्, जण्, आ त्थर्, आ-दीव्, प क्रव्, एते त्थुणादय ।

## स्थुणस्थवोऽणादकेषु ।२।३।१२५॥

अस्य धातोस्थवादेश' स्यादणादकेषु परेषु । थवए । खणकः ।

स्थुण इति—अनेकवर्णत्वात्सर्वादेश । स्थुण्धातोरकप्रत्ययेऽनेन थवादेशे थवए । आदेशेऽकार उच्चारणार्थ । अणश्चाश्चाकश्चेति द्वन्द्व । खण्धातोरकप्रत्यये खणको ।

## आतो दीवो लोऽकाणयो ।२।४।७६॥

आतः परस्य दीव्धातोरादेर्लकारो वा स्यादकाणयोः परयोः । आलीयगो । आलीवगो । आदीवगो ।

आत इति—आदेर्वेत्यनुवर्त्तते । आपूर्वकदीव्धातोरकणि प्रत्यये दस्य लकारे आलीयगो । वस्य य । पक्षे आदीवगो । तस्यालीत्तो । आलीवियो इति इतस्य । , अनस्यालीवण ।

## नेर्न्हवो ण्होऽके ।२।३।१३१॥

ने' परस्य न्हव्धातोर्ण्हादेश. स्यादके । णिण्हगो ।

नेरिति—निपूर्वकन्हव्धातोरकप्रत्यये ण्हादेशे णिण्हगो । कस्य ग ।

## लिपो लेवोऽडाकयो ।२।३।१२६॥

लिंप्धातोर्लेवादेशः स्यादडाकयो. । लेवगो । उवलेवए ।

लिंप इति—अनेकवर्णत्वात्सर्वादेश । लिंप्धातोरकप्रत्यये लेवादेशे लेवगो । उवलेवगो ।

## अकणिणणनादणिज्जाणीयप्रेरणार्थेषु बुज्झादेर्जेझयो ।२।३।१२२॥

एषु परेषु बुज्झादेर्धातोर्जकारझकारयोर्हकार स्यात् । बोहए । जोहए ।

अकणीति—इ इत्यनुवर्त्तते । अकण् च इण् चाण् चाश्चाश्चाणिजश्चाणीयश्च प्रेरणार्थश्चेति द्वन्द्वः । बुज्झ्धातोरकणि प्रत्ययेऽनेन जझयोर्हादेशे उपधाया वृद्धौ बोहए । जुज्झ्धातोर्जोहए । एव सयुक्तजझघटितमुदाहरणमूह्यम् । बुज्झ् कुज्झ् जुज्झ् मुज्झ्प्रभृतयो बुज्झादय । उज्झ्धातोर्जझघटितत्वेपि तस्य बुज्झादिगणे न पाठ ।

## ग्गहादिभ्य इण् ।२।२।४॥

एभ्य इण् प्रत्ययः स्यात्कर्त्तरि । गाही । परिक्खेवी । उवगारी । आउट्टी । अभिकखी । बोही । जोही ।

ग्गहादिभ्य इति—कर्त्तरीत्यनुवर्त्तते । ग्गह्धातोरिणि प्रत्यये उपधाया वृद्धौ गाही । परिपूर्वकक्खिव्धातो परिक्खेवी । उवपूर्वककर्धातोरुवगारी । आपूर्वककुट्टधातोरिणि आउट्टी । अत्र न वृद्धि । उपधाया म्वरत्वाभावात् । कस्धातोरभिकसी । बुज्झ्धातोरिणि कृते जझयोर्हकारे वृद्धौ बोही ।

## इणणोर्जुंजो जुगः ।२।३।१३०॥

जुज्धातोर्जुगादेशः स्यादिणणो' । जोगी । अणुजोगी । अभिजोगी । सजोगी । विओगी ।

इणणोरिति—अनेकवर्णत्वात्सर्वादेश । जुज्धातोरिणि प्रत्ययेऽनेन जुगादेशे वृद्धौ जोगी । बहुश्रमापनोदाय उदाहरणबाहुल्य न शङ्कासरणिमायातुमर्हति । अणुजोगो । अभियोगो इत्यादि वक्ष्यते ।

## इणि पाद्वो वट्ट' ।२।४।८८॥

पात्परस्य वट्टधातोरादेर्गकारः स्यादिणि । पागट्टी ।

इणीति—आदेरित्यनुवर्त्तते । पपूर्वकवट्टधातोरिणि प्रत्यये अनेन धातोरादेर्गकारे उपसर्गस्य यस्योणदेज्जा० गट्टीति सूत्रेण दीर्घे पागट्टी ।

## अरेरौ ताच्छील्ये ।२।२।५॥

धातोस्ताच्छील्येऽर्थेऽरेरौ प्रत्ययौ स्त' कर्त्तरि । आकखिरो । णच्चिरो । उम्मीलिरो ।

अरेरानिति—कर्त्तरीत्यनुवर्त्तते । आपूर्वककन्धातोरिरप्रत्यये आकखिरो । णच्च्धातोर्णच्चिरो । उद्पूर्वकमील्धातोरुम्मीलिरो ।

## अरे बहुलम् ।३।३।२१॥

धातोरन्त्यस्य द्वित्व स्यादरे परे । बहुलम् । इस्सरो । ईसरो । नस्सरो । भास्सरो ।

अरे इति—द्विरित्यनुवर्त्तते । ईस्धातोररप्रत्यये द्वित्वे सयुक्ते ह्रस्वे इस्सरो । नसधातोर्नस्सरो । भास्धातोर्भास्सरो ।

## भिक्खादिभ्य उः ।२।२।६॥

एभ्य उः स्यात्कर्त्तरि ताच्छील्ये । भिक्खू । इच्छू ।

भिक्खादिभ्य इति—ताच्छील्ये कर्त्तरीत्यनुवर्त्तते । भिक्खधातोरुप्रत्यये भिक्खू । इच्छधातोरिच्छू । भिक्ख् । इच्छ् । दिस् । दक्ख् । जाण् । पलिमथ् । विद् । सह् । एते भिक्खादयः ।

## पादिंसुर्भवः ।२।२।७॥

पपूर्वकभव्धातोरिंसुः प्रत्ययः स्यात्ताच्छील्ये । पभविंसु ।

पादिति—ताच्छील्ये कर्त्तरीत्यनुवर्त्तते । पपूर्वकभव्धातोरिंसुप्रत्यये पभविंसु । प्रभवशील इत्यर्थः ।

## अधिकरणेऽण् ।२।२।४५॥

अस्मिन्नर्थे धातोरण् स्यात् । आरामो ।

अधिकरणे इति—धातोरित्यनुवर्त्तते । आपूर्वकरम्धातोरणि प्रत्यये वृद्धौ आरामो ।

## इच्छावति लभो लिच्छश्चो ।२।२।४१॥

लभ्धातोरिच्छावत्यर्थे उः प्रत्ययः स्याद्धातोर्लिच्छादेशश्च । लिच्छू ।

इच्छावतीति—लभ्धातोरुप्रत्यये लिच्छादेशे लिच्छू । लाभेच्छावानित्यर्थः ।

## जो ड पञ्चमीसप्तम्योः ।२।२।८॥

पञ्चम्यन्ते सप्तम्यन्ते चोपपदे जाधातोर्डः स्यात् । अंगओ । पकज । पावसए ।

जो ड इति—कर्त्तरीत्यनुवर्त्तते । अगाओ जायइति अगजो । अगपूर्वकजाधातोर्डप्रत्यये टिलोपे अगजो । पआपूर्वकवस्धातोरति प्रत्यये वसादेशे पावसो । पावसे जातो पावसए ।

## इत्त खणादिभ्यः करणे ।२।२।४२॥

एभ्य करणे इत्त प्रत्ययः स्यात् । खणित्त । पवित्त ।

इत्त इति—करणेऽर्थे खणुधातोरित्तप्रत्यये खणित्त । एवमन्येऽपि ।

## आत सुपि ।२।२।१०॥

सुबन्त उपपदे आदन्ताद्धातोर्डः प्रत्ययः स्यात् । देहत्थो । अधट्ठो ।

आत इति—प्रत्ययग्रहणे तदन्तविधानादाह सुयन्तेति । धातोरित्यनुवर्त्तते । तद्विशेषणेन तदन्तविधेराह आदन्तान्निति । देहपूर्वकट्ठाधातोर्डप्रत्यये टिलोपे ठस थकारे टकारस्य परसवर्णेन तकारे देहत्थो ।

## अडो लिपो वा ।२।२।११॥

लिप्धातोरडः प्रत्ययो वा कर्त्तरि । लेवडो, लेवगो ।

अड इति—कर्त्तरीत्यनुवर्त्तते । लिप्धातोरडप्रत्यये लेवादेशे लेवडो । तदभावेऽकणि लेवगो ।

## तव्वो वसः ।२।२।१२॥

वस्धातोः कर्त्तरि तव्व. प्रत्यय' स्यात् । वत्थव्वो ।

तव्व इति—कर्त्तरीत्यनुवर्त्तते । वस्धातो कर्त्तरि तव्वप्रत्यये तस्य थकारे सकारस्य परसवर्णे वत्थव्वो ।

## विदो डिरनुपपदेऽपि ।२।२।१३॥

विद्धातोर्डिप्रत्ययः स्यात्कर्त्तरि कर्मण्युपपदेऽनुपपदे वा । वी । धम्मवी । नाणवी ।

विद इति—कर्त्तरीत्यनुवर्त्तते । धम्मपूर्वकविद्धातोर्डिप्रत्यये टिलोपे धम्मवी । नाणपूर्वकविद्धातोर्नाणवी । उप्रत्यये धम्मविऊ ।

## निसयुसद्भ्यां जा ।२।२।४६॥

निपूर्वाभ्यामाभ्या जा' प्रत्यय. स्यादधिकरणे ।

निसयुसद्भ्यामिति—सयुसद्धात्वोर्द्वन्द्व कृत्वा निपूर्वकश दैन कर्मधारयोत्तर मध्यपदस्य पूर्वशब्दस्य लोपे द्विवचने निसयुसद्भ्यामिति । तेन प्रत्येक निशब्देन सम्बन्ध ।

## इर्जि सयुसदो ।२।३।५४॥

अनयोरत इकारो वा स्याद् जाप्रत्यये परे । निमिज्जा । निमज्जा ।

इरिति—अत इत्यनुवर्त्तते । निपूर्वकसद्धातोर्जाप्रत्यये धातोरत इकारे निसिज्जा । दकारस्य परसवर्णेन जकार । तदभावे निसज्जा ।

## आत सव डणि ।२।३।४०॥

आतः परस्य सव्धातोरादेर्द्विर्वा स्यादिणि परे । अस्सावी ।

आत इति—आदेर्द्विर्वेत्यनुवर्त्तते । आपूर्वकसभ्धातोरिणि प्रत्ययेऽनेन धातोरादेर्द्वित्वे सयुक्ते ह्रस्वे अस्सावी ।

## सुवः साः ।२।३।९८॥

सुव्धातोः सा आदेशः स्यादिणि परे । साई ।

सुव इति—इणीत्यनुवर्त्तते । सुव्धातोरिणि प्रत्ययेऽनेन सादेशे साई । प्रकृतिभावान्न सन्धि ।

## अण् कर्मणि ।२।२।१५॥

कर्मण्युपपदे धातोरण् प्रत्ययः स्यात्कर्त्तरि । सुवण्णगारो । मणिकारो ।

अणिति—कर्त्तरीति चानुवर्त्तते । सुवण्णं करेईति सुवण्णाकारो सुवण्णपूर्वककर्धातोरणि उपधावृद्धौ सुवण्णकारो । एवमन्येऽपि ।

## हरादिभ्योऽप् ।२।२।१४॥

एभ्योऽप् स्यात्कर्त्तरि । हरो । चरो । धरो ।

हरादिभ्य इति—कर्त्तरीत्यनुवर्त्तते । हर्धातोरपि प्रत्यये हरो । चर्धातोश्चरो । धर्धातोर्धरो ।

## करादिभ्योऽन् ।२।२।१६॥

कर्मण्युपपदे करादिधातुभ्योऽन् प्रत्ययः स्यात् । निसाकरो । दिवाकरो ।

करादिभ्य इति—कर्त्तरीत्यनुवर्त्तते । निस करेइ निसाकरो । निसापूर्वककर्धातोरनि प्रत्यये । निसाकरो ।

## तित्थादीनां करादिषु बहुलम् ।४।२।२३॥

एषां शब्दानां मगागमो बहुलं स्यादन्प्रत्ययान्तकरादिपरेषु । तित्थकरो । तित्थंकरो । आयतमो । आयंतमो । आयदमो । आयंदमो । परतमो । परंतमो । जुगंधरो । पुरंदरो । मेघंकरो । भोगंकरो ।

तित्थादीनामिति—मगिति चानुवर्त्तते । बहुलग्रहणात्कचिद्विभाषा कचिन्नित्यम् । यथा तित्थकरप्रभृतौ वा भवति जुगंधरप्रभृतौ नित्यमेव । मेघंकरा, भोगंकरा इत्येतद्द्वयं दिक्कुमार्यो नाम ।

## तारादिषु भयादेः ।४।२।२४॥

भयादेरुपपदस्य मगागमः स्यात्तारादिषु परेषु । भयंतारो । सेयंकारो ।

तारादिष्विति—मगित्यनुवर्त्तते। भयतारो इत्यस्य भयात्त्रायत इत्यर्थः। पञ्चम्यन्तभयोपपदे चाधातोरप्रत्यये मगागमे सयुक्तादेर्लोपे भयतारो। सेयकारो इत्यत्राणप्रत्ययः।

## गमो गा अनि ।२।३।१२६॥

गम्धातोर्गसादेशो वाऽनि परे। तुरगो। तुरगमो।

गम इति—वेत्यनुवर्त्तते। तुरपूर्वकगम्धातोरनि प्रत्यये गमादेशे तुरगो। थादीना करादिष्विति मगागमः। आदेशेऽकार उच्चारणार्थः।

## वियाभ्यां क्ख इतो वा ।२।२।१८॥

वियापूर्वकक्खाधातोरित प्रत्ययो वा स्यात्।

वियाभ्यामिति—कर्त्तरीत्यनुवर्त्तते।

## वियाभ्यां क्खो ह्यः ।२।४।४५॥

वियापूर्वकस्य क्खाधातोर्ह्यसादेशः स्यादिये परे। वियाह्यियो। वियाक्खायगो।

वियाभ्यामिति—इये इत्यनुवर्त्तते। वियापूर्वकक्खाधातोरियप्रत्यये ह्यसादेशे वियाह्यियो। आदेशेऽकार उच्चारणार्थः। पक्षेऽकणि प्रत्यये यगागमे वियाक्खायगो।

## घातस्तुनू च ।२।२।१९॥

घात्धातोस्तुनू प्रत्ययौ स्तश्चाधथाप्राप्तम्।

घात इति—कर्त्तरित्यनुवर्त्तते। चकार उत्सर्गप्रत्ययसमुच्चायकः।

## घातो घन्तुन्वो ।२।३।१४३॥

घात्धातोर्घमादेशः स्यात्तुनुप्रत्यययोः। घत्तू। घन्नू। घाती। घातको।

घात इति—अनेकवर्णत्वात्सर्वादेशः। घात्धातोस्तुप्रत्यये घमादेशेऽनुस्वारे घत्तू। नुप्रत्यये घन्नू परसवर्णेन मस्य नः।

## नदादिभ्योऽन ।२।२।२०॥

एभ्योऽनः प्रत्ययः स्यात्कर्त्तरि। नदणो। जयाद्दणो। णिट्ठुयणो। णिट्ठुह्णो। जयणी।

नदादिभ्य इति—कर्त्तरीत्यनुवर्त्तते। नद्धातोरने प्रत्यये णत्वे नदणो।

जणपूर्वकादणधातोर्जणाहणो । णिपूर्वकट्ठुदधातोरप्रत्यये मयौ णिट्ठुद्दोऽकानयो रिति सूत्रेण वकारे णिट्ठुवणो । जणधातोर्णणणी क्रियाय । अभिक्रणेऽने भार्या-याचकत्वम् । कर्त्तरि तस्मिन्मातृराचकत्वम् । नद्, इक्र्, अण्, जाय्, नि-ट्ठुय्, उत्तास्, धाव्, थीह्, विज्, प वेम्, एते नन्दादय ।

## वेरिक्ख इतो य. ।२।३।१०७।।

वे' परस्येक्खधातोरिकारस्य यकार' स्यादने परे । वियक्खणो ।

वेरिक्ख इति—अने इत्यनुवर्त्तते । विपूर्वकेक्खधातोरप्रत्यये इकारस्य यकारे वियक्खणो । आदेशेऽकारो नोच्चारणार्थं ।

## अन ।२।२।४३।।

करणेऽर्थे धातोरन. प्रत्यय. स्यात् । करण । कारण ।

अन इति—करणे इति चानुवर्त्तते । कधातो करणेऽनप्रत्यये करण । प्रेर-णाप्रत्ययान्तादने कारण ।

## पञ्चम्यां त्तोर ।२।२।२१।।

पञ्चम्यन्त उपपदे त्ताधातोरः प्रत्यय स्यात् । भयतारो ।

पञ्चम्यामिति—कर्त्तरीत्यनुवर्त्तते । भयपूर्वकत्ताधातोरप्रत्यये मगागमे सयुक्तादेर्लोपे भयतारो ।

## दिसो दक्खो वो ।२।३।२५।।

दिस्धातो. कर्त्तरि दक्ख इत्यादेश' स्यादुप्रत्यये । दक्खू । देमी । देसगो । दट्ठारो ।

दिस इति—सादेशेऽकार उच्चारणार्थं । दिस्धातोरुप्रत्यये दक्खादेशे दक्खू । पक्षे यथाप्राप्त प्रत्यया भवन्तीति दर्शयति देसीति । तारप्रत्यये दट्ठारो । दिसात्तव्वेति सूत्रेण तस्य ठकारे इकारस्याकारे परसवर्णे ।

## न्नो ड्ड' ।२।२।१७।।

कर्मण्युपपदे न्नाधातोर्डुप्रत्यय स्यात् । धम्मन्नू ।

न्न इति—कर्मणीत्यनुवर्त्तते । धम्मपूर्वकन्नाधातोर्डुप्रत्यये टिलोपे धम्मन्नू ।

## अत सयो जे ।३।१।८३।।

सय्धातोरत एकारः स्याद् जापरे । सेज्जा । अभिसेज्जा ।

अत इति—एरित्यनुवर्त्तते । सय्धातोर्जप्रत्ययेऽनेनात एकारे परसवर्णेन यस्य जकारे सेज्जा । सयुक्ते ह्रस्वे सिज्जा ।

## अम्हादिषु दिसादः ।२।२।२२॥

एषूपपदेषु दिस्धातोरप्रत्ययः स्यात्कर्त्तरि ।

अम्हादिष्विति—दिसात् अ इति पदद्वयम् । कर्त्तरीत्यनुवर्त्तते । आदिना तुम्ह, ज, त, क, इम, एत, समान, भवत इत्यादयो गृह्यन्ते ।

## अम्हादेर्दिसे ।३।२।४१॥

अप्रत्ययान्तदिस्धातावम्हादेर्दीर्घोऽन्तादेशः स्यात् ।

अम्हादेरिति—दिसे इति त्वप्रत्ययान्तदिस्धातो रूपम् । अतएवाहाप्रत्ययान्तेति । दीर्घ इत्यनुवर्त्तते । अम्ह, तुम्ह, ज, त, एत, एते पञ्च शब्दा अम्हादय ।

## तुम्हादेर्दिसस्य दस्य रः ।४।४।१८॥

तुम्हादे परस्याप्रत्ययान्तदिसधातोरादेर्दस्य रः स्यात् । अम्हारिसो । तुम्हारिसो । जारिसो । तारिसो ।

तुम्हादेरिति—आदेरित्यनुवर्त्तते । दस्येति विशेषोपादानादन्त्यस्य षष्ठ्या इति परिभाषा न प्रवर्त्तते । तुम्ह+दिस इति स्थिते अम्हादेरिति सूत्रेण दीर्घेऽनेन दस्य रेफे तुम्हारिसो । एव अम्हारिसो इत्यादय । तुम्ह, अम्ह, ज, त, क, इम, एत, समान, एते तुम्हादय ।

## ताल्लो वा ।४।४।९१॥

तशब्दात्परस्य दिसस्य दस्य लो वा स्यात् । तालिसो ।

ताल्ल इति—दिसस्य दस्येत्यनुवर्त्तते । त+दिस इति स्थिते तस्य दीर्घेऽन्तादेशेऽनेन दिसस्य दस्य लकारे तालिसो । पक्षे रकारे तारिसो इति तूक्तमेव ।

## एत् ।४।४।२२॥

अप्रत्ययान्तदिसधातौ परे इमस्यैकारोऽन्तादेशो वा स्यात् । इमेरिसो ।

एदिति—इमस्य दिसे वेत्यनुवर्त्तते । इमस्यैकारान्तादेशे दस्य रेफे इमेरिसो ।

## एरिसस्य वा ।४।४।२१॥

इमशब्दस्यैसादेशो वा स्यादप्रत्ययान्तदिस्धातौ परे । एरिसो ।

एरिति—दिसे इत्यनुवर्त्तते। सिद्धान्तसर्वादेशः। इमस्यैसादेशे दकारस्य रेफे एरिसो।

## क्ख एस सस्य ।४।४।९९॥

एमः परस्य दिसस्य सस्य क्खो वा स्यात्।

क्ख इति—दिसस्य वेत्यनुवर्त्तते।

## एस क्खे ।४।४।९२॥

इमादेशादेसः परस्य दिसस्य दस्य लो वा स्यात् सस्य क्खादेशे झलि। एलिक्खो।

एस इति—दिसस्य दस्य वा स इत्यनुवर्त्तते। इम+दिस इत्यत्रेमस्यैकारे सस्य क्खादेशे दस्य लकारे एलिक्खो।

## दिसे कस्येदेतो ।४।४।३०॥

कशब्दस्येकारैकारौ पर्यायेण भवतोऽप्रत्ययान्तदिसधातौ। कीरिसो। केरिसो।

दिसे इति—कस्य ईदेतावित्ति पदद्वयम्। ईच्चेति द्वन्द्व। षष्ठीनिर्दिष्टत्वादन्त्यस्य ककारोत्तराकारस्यादेशः। क+दिस इति स्थितेऽनेनेकारादेशे दस्य रेफे कीरिसो। एकारादेशे तु केरिसो। कीदृश इत्यर्थः।

## काद्दिसस्य दे ।४।१।१८॥

कशब्दात्परस्य दिस्शब्दस्य दिभागस्य वा लोपः स्यात्। कीसो। केसो।

कादिति—वा लोप इत्यनुवर्त्तते। क+दिस इत्यत्र दिसे कस्येति सूत्रेण ककारोत्तराकारस्येकारादेशेऽनेन दिभागस्य लोपे कीसो। एकारादेशे तु केसो।

## समानाच्छ ।४।४।२०॥

समानशब्दात्परस्य दिसशब्दस्य सस्य च्छादेशो वा। सरिच्छो। सरिसो

समानादिति—दिसस्य सस्येत्यनुवर्त्तते। वेति च। समानपूर्वकदिसधातोरप्रत्यये दकारस्य रेफादेशेऽनेन सस्य च्छादेशे सरिच्छो तदभावे सरिसो।

## गत्यर्थाकर्मकसिक्खादिभ्य कर्त्तरि च ।२।१।५३॥

एभ्यो धातुभ्यो भूते तदतौ क्तः कर्त्तरि चात्कर्मणि भावे च। वेयणा मे खप गवा। मच्चुमुह तु पत्ते। अस्सिए सुखी। विजयघोसे""निक्खतो।

तो हं नाहो जाओ । पासायालोअणे ठिओ । बावत्तरीकलाओ अ सिक्खिए ।
देव सिलिट्ठो ।

गत्यर्थेत्यादि—भूते भावकर्मणोरित्यनुवर्तते । भावकर्मणो सामान्यतया विधानेऽपि कर्त्तरि विशेषतो विधायकेनानेन बाधो माभूदत्त कर्मणि भावे चेति पुनरप्युपादानम् । कुत्र कर्त्तरि क्व वा भावे क्वचन वा कर्मणि प्रत्यय इति तु योजनया बोध्यम् । यथात्रैवोदाहरणे कर्त्तरि विधानादेवानुक्ते कर्मणि द्वितीया । उक्ते कर्त्तरि प्रथमा सिद्ध्यति । वेयणेत्यादेर्वेदना मे क्षय गता इत्यर्थ । इत्युत्त० २०।३३, अत्र गमधातो कर्त्तरि त । आवस्सयक्खमतरादीनामपि गतिविशेषवाचित्वात्तेभ्य कर्त्तरि त । मच्चुमुह तु पत्ते इत्यत्र पपूर्वकाप्धातो कर्त्तरि त । से नाहिई मच्चुमुह तु पत्ते इत्युत्त०२०।४८॥ असिए मुणीत्यत्र आपूर्वस्सयधातो कर्त्तरीत प्रत्यय । पव्वज्जामस्सिए मुणी प्रव्रज्यामाश्रितो मुनिरिति तदर्थ । विजयघोसे निक्खतो इत्यत्र निर्पूर्वकक्रमधातो कर्त्तरि त । एव से विजयघोसे निक्खतो इति उत्त० ।२५।४४, अकर्मकमुदाहरति तोह इति जाओ इत्यत्र जाधातो कर्त्तरि तप्रत्यय । तोह नाहो जाओ इत्युत्त० २०।३५। पासायालोअणे ठिओ इत्यत्र कर्त्तरीत प्रत्यय । बावत्तरी कलाओ अ सिक्खिए इत्यत्र कर्त्तरि इत प्रत्यय आदिना सिलिसादिर्माह्य ।

## मतीच्छाऽर्चार्थेभ्यस्तेतौ वर्त्तमाने च ।२।१।५२॥

एदर्थकधातुभ्यो वर्त्तमाने चाद्भूते च तइतौ स्त' । अम्ह विइयाणि । रन्नो इट्ठा । से निय मे धम्मे इच्छिते पडिच्छिते अभिरुइए ।

मतीति—भूते भावकर्मणोरित्यनुवर्तते । मतिश्चेच्छा चार्चा चेतीतरेतरयोगद्वन्द्वो मतीच्छाऽर्चा । तेऽर्था येषान्ते मतीच्छाऽर्चार्थास्तेभ्यो मतीच्छाऽर्चार्थेभ्य इति । द्वन्द्वात्पर पूर्वो वा य श्रूयते स लभते प्रत्येक सम्बन्धमिति न्यायादर्चान्तद्वन्द्वान्तश्रूयमाणार्थशब्दस्य मत्यादिपु प्रत्येक सहसम्बन्धाज् ज्ञानार्थकेत्यादि लब्धम् । ननु भूते सामान्यतया विधानेन तेनैव सिद्धौ भूतार्थसमुच्चयार्थचकारो व्यर्थ इति चेन्न वर्त्तमाने विशेपतया विधायकेनानेन बाध स्यादतस्तस्यावश्यकत्वात् । वर्त्तमानार्थतयोगे षष्ठी भवति । भूतार्थकतयोगे तन्निषेध । यथा मूलोक्तोदाहरणे षष्ठी समभून्माभूच्च तुब्भेहिं अणुमन्निओ इत्यादौ । तुब्भेहिं अणुमन्निओ इत्युत्त० ।१९।२३। अम्ह विइयाणीत्यत्रानेन

वर्त्तमाने विद्धातोरियप्रत्यये सति षष्ठी भवति। चित्ताणि अम्ह विइयाणि लोए इत्युत्त० ।१२।१३। रन्नो इट्टेत्यत्रेस्धातोर्वर्त्तमाने त । "सेणियस्स सेविय रन्नो इट्टा" इति नाया० १।३२। मे धम्मे इच्छिते इत्यत्रेच्छूधातोरितप्रत्यय । सेविय मे धम्मे इच्छिते पडिच्छिते अभिरुइए इति नाया० ।१।३२।

## पीणो डिय. ।२।१।५४॥

पीण्धातोर्डियप्रत्यय स्यादुक्तेर्थे। पिए। पिओ।

पीण इति—धातो प्रत्यय कर्त्तरि वर्तमाने भूते इत्यनुवर्त्तते। डित्त्वाट्टि-लोप। पीण्धातोर्डियप्रत्यये टिलोपे यकारलोपे पिए, पिओ इति। इट्ठे कन्ते पिए मणुन्न इति नाया० १,१,।

इति कृदन्ते कत्रर्थप्रक्रिया।

---

## कृत्या अणिज्जाणीयतव्वाः ।२।१।५५॥

धातुभ्य एते प्रत्ययाः स्युर्भावकर्मणोस्ते च कृत्यसंज्ञका। अच्चणिज्ज। अच्चणीय। अच्चियव्व। एसणिज्ज। एसणीय। एसियव्व।

कृत्या इति—भावकर्मणोरित्यनुवर्त्तते। भावकर्मणोरधिकारे विहिता एते प्रत्यया वक्ष्यमाणाश्च कृत्यसंज्ञका भवन्ति। अच्च्धातोरणिज्जप्रत्यये अच्चणिज्ज। अणीयप्रत्यये अच्चणीय। तव्वप्रत्यये रसादीनामितीडागमे तकारस्य यकारे अच्चियव्व। एवमन्यत्रापि।

## लुभादिभ्योऽणिज्जाणीयौ ।२।१।५६॥

लुभादिभ्य परावणिज्जाणीयप्रत्ययौ णितौ स्याताम्। लोभणिज्ज। लोभणीय। मोहणिज्ज। मोहणीय।

लुभादिभ्य इति—णिदित्यनुवर्त्तते। तस्य द्वित्वेन वचनविपरिणामः। लुभ्धातो रणिज्जे णित्त्वाद्वृद्धौ लोभणिज्ज। मल्हद्धातोरुपधाया वृद्धौ मल्हणिज्ज। मुह्धातोरणिज्ज उकारस्योत्कारे णित्त्वाद्वृद्धौ मोहणिज्ज। एव लोभणीय-मित्यादपि। लुभ्, मुह्, क्षुभ् आकृतिगणोऽयम्।

## पच्चक्खादिभ्यस्तव्वस्यैङ् ।४।२।५२॥

पचक्खादिभ्य• परस्य तव्वप्रत्ययस्यैडागम' स्यात्। पचक्खाएयव्व। पट्ठवेयव्व। वड्ढेयव्व। आरुहेयव्व।

पचक्खादिभ्य इति—स्सादीनामिति प्राप्तस्येटोऽपवाद । पडि आपूर्वक-क्खाधातोस्तव्वप्रत्ययेऽनेनैडागमे प्रकृतिभावे तकारस्य यकारे पचक्खाएयव्व। पपूर्वकट्ठव्धातो पट्ठवेयव्व। वड्ढ्धातोर्वड्ढेयव्व। आपूर्वकरुह्धातोरारुहे-यव्व। पडि आ क्खा, ण्ड्, उद्-चार्, चाव्, निर्-जा, प-ट्ठव्, परि-साव्, उद्-द्दव्, अणु-भव्, पूर्, आ-रुह्, ल्न्, आ-लोक्, वड्ढ्, आ हर्, (हर्-प्रे०) एते पचक्खादय।

## वज्जादिभ्यो वा ।४।२।५३॥

वज्जादिभ्यः परस्य तव्वस्य वैडागमः स्यात्। वज्जेयव्व। वज्जियव्व। सुणेयव्व। सुणियव्व।

वज्जादिभ्य इति—तव्वस्यैडित्यनुवर्त्तते। वज्ज्धातोस्तव्वप्रत्यये एडागमे वज्जेयव्व। तदभावे स्सादीनामितीडागमे वज्जियव्व। वज्ज्, सुण्, आ-घव्, इत्यादयो वज्जादय।

## गमादिभ्यस्तव्वस्य ।४।२।४०॥

एभ्य' परस्य तव्वस्येडागमो न स्यात्। गतव्व। घेत्तव्व। णायव्व। णेयव्व। दायव्व। दट्ठव्व। वत्तव्व। हतव्व

गमादिभ्य इति—इट् नेत्यनुवर्त्तते। गम्धातोस्तव्वे मकारस्यानुस्वारे गतव्व। घेत्तुतूणेति गिण्हो घेदादेशे घेत्तव्व। ज्ञाधातोर्णायव्व। णेधातोर्णेयव्व। दाधातोर्दायव्व। दिसस्तव्वे दिसस्तुमिति तकारस्य ठकारे दिस इत इति इकार-स्याकारे दट्ठव्व। वच्च्धातोस्तव्वे त्रयाणामिति पूर्वचकार लोपे द्वितीयचकारस्य परसवर्णे वत्तव्व। हणो णकारस्य नकारेऽनुस्वारे हतव्व। गम्, गिण्ह्, जोय्, त्थुण्, दा, दिस्, वीह्, भुञ्ज्, वच्च्, वह्, हण्, एते गमादय।

## निक्खिवादिभ्यस्तव्वस्य ।४।२।३५॥

एतेभ्यः परस्य तव्वस्येडागमो वा स्यात्। निक्खेत्तव्व। निक्खिवियव्व।

निक्खिवादिभ्य इति—वेडित्यनुवर्त्तते। विकल्पेनेड्निषेधे तात्पर्यम्। इदुदुपधादिति तव्वस्य णिद्भावे उपधावृद्धौ वकारस्य परसवर्णेन नकारे निक्खे-

त्तव्य । इति तु निक्लियवियव्य । नि-क्लिय्, नि-सीद्, सुण्, एते निक्लिवाद्य ।

## सुणः सोरनिटि तव्वे ।२।३।४१॥

अस्य धातो' सोरादेश स्यादनिटि तव्वे परे । सोअव्व ।

सुण इति—इडूरहिततव्वे सुणधातो सो इत्यादेशे सोअव्व । इडैटोगु सुणियव्व । सुणेयव्वमिति दर्शितमेव ।

## जोयसीदोस्तव्वे ।३।४।८१॥

तव्वे परेऽनयोरन्त्यस्य लोप स्यात् । निमीयव्व । निसीइयव्व । सजोयव्व ।

जोयिति—लोप इत्यनुवर्त्तते । षष्ठीनिर्दिष्टत्वादन्त्यस्य लोप । निपूर्वकसीद्धातोस्तव्वमत्ययेऽनेन दकारलोपे निसीयव्व । विकल्पेनेडागमे तु निसीइयव्वं । ओयस्तु गमादिगणे पाठादनिट्कत्वेन मजोयव्वमिति ।

## वुज्झस्तव्वस्य ।२।३।१४६॥

बुज्झः परस्य तव्वस्य तस्य ध स्यात् । बोद्धव्व ।

बुज्झ इति—तस्य ध इत्यनुवर्त्तते । बुज्झ्धातोस्तव्वप्रत्यये तकारस्य धकारे त्रयाणामिति जकारस्य लोपे झकारस्य परसवर्णेन दकारे इदुदुपधायिति तव्वस्य णिद्भावादूद्धौ बोद्धव्व ।

## वहो ढ ।२।३।१४७॥

वहः परस्य तव्वस्य तस्य ढ' स्यात् ।

वह इति—तव्वस्य तस्येत्यनुवर्त्तते ।

## वहष्टेरोत् ।२।३।४२॥

वह्धातोष्टेरोकार. स्यादनिटि तव्वे परे । वोढव्वं । निवोढव्व ।

वह इति—अनिटि तव्व इत्यनुवर्त्तते । वह् तव्व इत्यत्र टिभागस्यौकारे तव्वस्य तस्य ढकारे वोढव्व । निपूर्वकत्वे निवोढव्व ।

## थोस्थुणोऽति च ।२।३।४३॥

त्थुण्धातोस्थो इत्यादेशः स्यादनिटि तव्वेऽति च परे । थोयव्व ।

थोरिति—अनिटि तव्व इत्यनुवर्त्तते । त्थुण्धातोस्तव्वप्रत्ययेऽनेन थो इत्यादेशे थोयव्व ।

## भास्तव्वे ।२।३।३॥

वीहृधातोर्भादेशः स्यात्तव्वे परे। भायव्व।

भा इति—वीह इत्यनुवर्त्तते। अनेकवर्णत्वात्सर्वादेश। वीहृधातो-
त्यये भादेशे भायव्व।

## किणादिभ्यो डेतव्वः ।२।१।५६॥

एभ्यो डेतव्वप्रत्ययः स्याद्भावकर्मणो'। केयव्व। भेयव्व।

किणादिभ्य इति—भावकर्मणो कृत्या इति पदद्वयमत्रानुवर्त्तते।
ातोर्डेतव्वप्रत्यये टिलोपे केयव्व। भिद्धातोष्टिलोपे भेयव्व।

## होरिव्वस्तव्वस्य ।२।३।१४९॥

परस्य तव्वप्रत्ययस्येव्वादेशो वा स्यात्। होइव्व। होयव्व। होतव्व।

होरिति—वेत्यनुवर्त्तते। होधातोस्तव्वप्रत्ययेऽनेनेव्वादेशे प्रकृतिभावे
व। पक्षे तव्वे तकारस्य यकारे होयव्व। होतव्व।

## घातादिभ्यो णिम ।२।१।५८॥

धातुभ्यो णिमप्रत्ययः स्याद्भावकर्मणोः। उग्घाइम। संचारिम।
तारिम। खाइम। साइम। समुच्छिमं।

घातादिभ्य इति—धातो प्रत्यय भावकर्मणोरित्यनुवर्त्तते। णिमप्रत्यये
स्येत्त्वादुपधावृद्धि। उत्पूर्वकघात्धातोर्णिमप्रत्यये तकारस्य यकारे
उग्घाइम। सपूर्वकचर्धातोरुपधावृद्धौ सचारिम। तर्धातोर्वृद्धौ तारिम।
धातोर्दकारलोपे प्रकृतिभावे खाइम। स्साद्धातोर्दकारलोपे साइम। सपूर्वक-
धातो समुच्छिम। घात्, खाद्, सम्-चर्, तर्, पत्, मज्ज्, स-मुच्छ्,
्, स्साद्, आ हर्, निर्-हर्, एते घातादय।

## धरादिभ्य इम ।२।१।५९॥

धरादिभ्य इमप्रत्यय' स्यादुक्तेर्थे। धरिम। पूरिम।

धरादिभ्य इति—अनुवृत्ति पूर्ववत्। इमप्रत्यये णित्वाभावान्न वृद्धि।
धातोरिमप्रत्यये धरिम। पूर्धातो पूरिम। धर्, पूर्, लुण्, ए
दय।

## इमे ल्लुणो ला ।२।३।२९॥

लुण्धातोर्लादेशः स्यादिमे परे । लाइम ।

इम इति—भावकर्मणोरित्यनुवर्त्तते । लुण्धातोर्लादेशः इमप्रत्यये भावे लाइम ।

## गोवादिभ्य पः ।२।१।५७॥

एभ्यो धातुभ्यः पप्रत्ययः स्याद्भावकर्मणोः । गुप्प । छिप्प । टप्प । आणप्प । पप्प ।

गोवादिभ्य इति—धातो प्रत्यय भावकर्मणोरित्यनुवर्त्तते । गोव्धातौ पप्रत्यये वकारस्य परसवर्णेन पकारे सयुक्ते ह्रस्वे गुप्प । गोप्यमित्यर्थः । छिव् धातौ छिप्प । स्पृश्यमित्यर्थः । ढव्धातोः टप्प । स्थाप्यमित्यर्थः । आपूर्वक-णव्धातौ आणप्प । आज्ञाप्यमित्यर्थः । पपूर्वकाव्धातौ पप्प । प्राप्यमित्यर्थः । असमानोपपादो विकल्पेन बाधक इति न्यायात्पक्षे सामान्यतया विहिता अपि प्रत्ययाः स्युरिति । गोव्, च्छिव्, ढव्, आ णव्, प-आव्, एते गोवादय ।

## खो डज्जडड्डौ ।२।१।६५॥

खाधातोर्डज्जडड्डौ प्रत्ययौ स्तो भावकर्मणोः । खज्ज । खड्ड ।

ख इति—भावकर्मणोरित्यनुवर्त्तते । खाधातोर्डज्जप्रत्यय डित्वाट्टिलोपे खज्ज । डड्डप्रत्यय खड्ड । ननु जड्डविधानेऽपि सयुक्ते ह्रस्वे रूपसिद्धौ डित्व-करण व्यर्थमिति चेन्न । तत्र बहुलग्रहणसम्बन्धेन पक्षे खाज्ज इत्यनिष्टसम्भावना-भिया तथाकरणात् ।

## नेर्य ।२।१।६४॥

नेधातोर्य प्रत्यय स्यात् । नेय । निणेय ।

नेरिति—भावकर्मणोरित्यनुवर्त्तते । नेधातोर्यप्रत्यये नेय ।

## करणार्थेभ्यो डिचडित्तिमौ ।२।२।६२॥

एभ्यो धातुभ्यो डिचडित्तिमौ भवत । किच । कित्तिम ।

करणार्थेभ्य इति—करणार्थककर्कायुव्भ्यो धातुभ्यो डिचडित्तिमप्रत्य-ययो सतोष्टिलोपे किच । कित्तिम ।

## असोऽलण् भक्ष्ये ।२।१।७५॥

असधातोर्भक्ष्यरूपकर्मणि अल्लण् आसल ।

अस इति—भावकर्मणोरित्यनुवर्त्तते । तत्र भक्ष्यरूपे कर्मणि प्रत्ययविधानेन क्षेपणीयकर्मणि न प्रत्ययोऽय भवति । अस्धातोरलणि प्रत्यये वृद्धौ आसल । भक्ष्यमित्यर्थ ।

## डाय पच ।२।१।८९॥

पच्धातोर्डायप्रत्ययः स्याद्भावकर्मणोः । पाय ।

डाय इति—मण्डूकप्लुत्या भावकर्मणोरित्यनुवर्त्तते । डकारष्टिलोपार्थ । पच्धातोर्डायप्रत्यये टिलोपे पाय । पक्तु योग्यमित्यर्थ ।

## करादिभ्य इयण् ।२।१।६०॥

करादिभ्यो धातुभ्य इयण् प्रत्ययः स्यात् । कारिय । धारिय । पेहिय । समुप्पेहिय ।

करादिभ्य इति—भावकर्मणोरित्यनुवर्त्तते । कर्धातोरियणि प्रत्यये वृद्धौ कारिय । असमानापवादत्वात् पक्षे करणिज्ज करणीय करियव्वमित्यादि । धर्धातोर्धारिय । पपूर्वकेक्ख्धातो पेहिय । समुप्पपूर्वकत्वे समुप्पेहिय ।

## करो जचौ च ।२।१।६१॥

कर्धातोर्जचौ प्रत्ययौ स्तश्चाद्यथाप्राप्तम् । कज्ज । कच्च ।

कर इति—अनुवृत्ति पूर्ववत् । कर्धातोर्जप्रत्यये परसवर्णेन रेफस्य जकारे कज्ज । चप्रत्यये कच्च । यथाप्राप्तमित्यनेनाणिज्जादय सगृह्यन्ते ।

## दादिभ्य इय ।२।१।६२॥

एभ्य इयः प्रत्ययः स्यादुक्तार्थे । देय । चरिय । भविय । अक्खेय । विन्नेय । मेय । पमेय । धेय । गेय ।

दादिभ्य इति—दाधातोरियप्रत्यये वृद्धौ देय । चर्धातोश्चरिय । भवधातोर्भविय । आपूर्वकक्खाधातोरियप्रत्यये वृद्धौ सयुक्ते ह्रस्वे अक्खेय । सयुक्तादेर्लोपे आखेय । विपूर्वकन्नाधातोर्विन्नेय । माधातोर्मेय । धाधातोर्धेय । दा, चर्, भव्, क्खा, न्ना, मा, धा, गा, सिज्ज्, कर्, धर्, जागर्, जीव्, तुर्, एते, दादय । आकृतिगण ।

## सदो धोडिय ।२।१।६३॥

सद. परस्माद्धाधातोर्डिय प्रत्यय. स्यात् ।

सद इति—अनुवृत्ति पूर्ववत् ।

## सदो धो ढो डिये ।२।४।९१॥

सद' परस्य धाधातोरादेर्ढकारः स्याड्डिये परे । सड्ढिय ।

सद इति—आदेरित्यनुवर्त्तते । ध इत्यस्य धाधातोरित्यर्थः । सद्पूर्वकधाधातोर्डियप्रत्यये धातोरादेर्ढकारे परसवर्णे सड्ढिय । इयप्रत्यये सद्धेय ।

## अद् गरिहादिभ्यः ।२।१।६६॥

एभ्यो धातुभ्योऽत्प्रत्ययः स्याद्भावकर्मणो । गरिह । समुप्पेह । भक्ख । वच्च ।

अदिति—धातो प्रत्यय भावकर्मणोरित्यनुवर्त्तते । गरिह्धातोरमत्यये गरिह । समुप्पपूर्वकेक्सधातोरिहादेशेऽति समुप्पेह । भक्ख्धातोर्भक्ख । वच्च्धातोरति वच्च । वाच्यमित्यर्थः । एते चत्वारो वक्ष्यमाणा गमादयश्चैकविंशतिरेव पञ्चविंशतिर्गरिहादय ।

## गमादीनामति भावकर्मणो. ।२।३।२२॥

एषामन्त्यस्य द्वित्व स्याद्भावकर्मवाचिन्यति परे । गम्म । खण्ण । घत्त ।
पुञ्ज । फुस्स । विभज्ज । भव्व । सेव्व ।

गमादीनामिति—द्विरित्यनुवर्त्तते । षष्ठीनिर्दिष्टत्वादन्त्यस्य द्वित्व भवति । गम्धातोरति मकारस्य द्वित्वे गम्म । खण्धातो खण्ण । घात्धातोर्घत्त । सयुक्ते ह्रस्व । पूज्धातो पुञ्ज । जकारद्वित्वे सयुक्ते ह्रस्व । विपूर्वकभज्धातोर्विभज्ज । भव्धातोर्भव्व । सेव्धातो सेव्व । गम्, गिण्ह्, घात्, च्छुभ्, जुज्, डह्, दुह्, रह्, पूज्, फुस्, भज्, भुज्, रम्, राह्, वच्च्, विद्, सलह्, साह्, सिच्, सेव्, हुण्, एते गमादय ।

## डहादीनां झ ।२।३।११॥

एषामन्त्यस्य झकार स्यादति । डज्झ । दज्झ । रज्झ । आरज्झ । सज्झ ।

डहादीनामिति—अतीत्यनुवर्त्तते । डह्धातोरति प्रत्ययेऽन्त्यस्यानेन झकारे गमादित्वेन द्वित्वे पूर्वस्य परसवर्णे डज्झ । दह्धातोर्दज्झ । अनापूर्वस्य सयुक्तस्येति सूत्रेण पूर्वदस्य लोप । राह्धातोरज्झ । अत्र सयुक्ते ह्रस्व । साह्धातो सज्झ । अत्रापि स ।

## दुहादीनामति ।२।२।४॥

एषां स्वरस्य वृद्धिः स्यादति । दोज्झ । छोब्भ । भोज्ज । कोप्प । गेज्झ । गिज्झ ।

दुहादीनामति—वृद्धिरित्यनुवर्त्तते । दुह्धातोरति प्रत्ययेऽन्त्यस्य झकारे द्वित्वे पूर्वस्य परसवर्णेऽनेन वृद्धौ दोज्झ । च्छुभ्धातोरति प्रत्ययेऽनेन वृद्धौ भस्य द्वित्वे पूर्वभस्य परसवर्णेन बकारे अपूर्वस्य सयुक्तस्येति सूत्रेण चकारस्य लोपे छोब्भ । भुज्धातोर्भोज्ज । कुप्धातो कोप्प । गिण्ह्धातोरति प्रत्ययेऽन्त्यस्य झकारे त्रिव्यञ्जनसयुक्ते णस्य लोपे पूर्वस्य परसवर्णे वृद्धौ गेज्झ ।

## जुजो गः ।२।३।२१॥

अस्यान्त्यस्य गकारोऽति । जोग्ग ।

जुज इति—अतीत्यनुवर्त्तते । जुज्धातोरति प्रत्ययेऽन्त्यस्य गकारे द्वित्वे त्रिव्यञ्जनसयुक्तेऽनुस्वारलोपे वृद्धौ जोग्ग ।

## सिंचः कः ।२।३।१३॥

अस्यान्त्यस्य कोऽति । सेक । अभिसेक ।

सिंच इति—अतीत्यनुवर्त्तते । सिंच्धातोरति प्रत्यये कादेशे द्वित्वे त्रिव्यञ्जनसयुक्तेऽनुस्वारलोपे वृद्धौ सेक ।

## विदो ज' ।२।३।१२॥

अस्यान्त्यस्य ज' स्यादति । वेज ।

विद इति—षष्ठीनिर्देशादन्त्यस्येति लभ्यते । अतीत्यनुवर्त्तते । विद्धातोरवि प्रत्ययेऽन्त्यस्य जकारे द्वित्वे वृद्धौ वेज्ज ।

## सलह सघ' ।२।३।४॥

अस्य सघादेशोऽति । सग्घ ।

सलह इति—अनेकवर्णत्वात्सर्वादेश । अनुवृत्ति पूर्ववत् । सलह्धातोरवि प्रत्यये सघादेशे द्वित्वे पूर्वघस्य परसवर्णे सग्घ ।

## हुणो हव' ।२।३।५॥

अस्य धातोर्हवादेशोऽति । हव्व ।

हुण इति—अनेकवर्णत्वात्सर्वादेश । हुणधातोरति प्रत्यये हवादेशे द्वित्वे हुव ।

## छिदादिभ्यो डेज्ज ।२।१।६७॥

एभ्यो डेज्ज. साद्भावकर्मणो । छेज्ज । भेज्ज । मेज्ज । केज्ज । मरेज्ज । देज्ज । हेज्ज ।

छिदादिभ्य इति—भावकर्मणोरित्यनुवर्त्तते । छिद्धातोर्डेज्जप्रत्यये टित्त्वा ट्लोपे छेज्ज । भिदो भेज्ज । माधातोर्मेज्ज । क्रिणधातो केज्ज । सपूर्वकसरा-धातो सरिज्ज । मरेज्ज । दाधातोर्देज्ज । हर्धातोर्हेज्ज । वैकल्पिक रूपमूह्य स्वयमेव ।

## डेज्जे ज्ञो ध. ।२।४।९०॥

ज्ञाधातोरादेर्धादेशः स्याड्ढेज्जे । धिज्ज । धेज्ज ।

डेज्ज इति—आदेरित्यनुवर्त्तते । ज्ञाधातोर्डेज्जप्रत्यये ज्ञस्य धादेशे टिलोपे सयुक्ते ह्रस्वे धिज्ज । ह्रस्वाभावे धेज्ज ।

## डोनेर्हण ।२।१।६८॥

नेः परस्य हणधातोर्डः प्रत्ययः स्यात्कर्मणि । निहो ।

ड इति—भावकर्मणोरित्यनुवर्त्तते । अस्य धातो सकर्मकत्वात्कर्मण्येव प्रत्ययसम्भवादाह कर्मणीति । निपूर्वकहणधातोर्डप्रत्यये टिलोपे निहो ।

## पते रे' ।२।१।६९॥

पतेः परस्मादिधातोर्ड. प्रत्यय स्यात् । पत्तियो ।

पतेरिति—डो भावकर्मणोरित्यनुवर्त्तते । पतिपूर्वकेधातोर्डप्रत्यये पडिपति-परिभ्यो य इति सूत्रेण यादेशे टिलोपे पत्तियो । पतेर्द्विरौ इति सूत्रेण यस्य द्वित्वम् ।

## सुखदु खार्थेषु ख ईसिदु सुपु ।२।१।७०॥

एषूपपदेषु धातो ख' स्याद्भावकर्मणो । दुप्परिचयो । सुजहो । दुरुद्धरो । सुलहो । दूमहो ।

सुखदु'खार्थेष्विति—भावकर्मणोरित्यनुवर्त्तते । दुप्परिचयोत्ति "दुप्परिच-या इमे कामा" उत्त० ८।६। दु खेन कृच्छ्रेण परित्यज्यन्ते दुप्परित्यजा इत्यर्थ । दुरपरिपूर्वकचयधातो खप्रत्यये खकारस्येत्सज्ञाया लोपे रेफस्य परसवर्णेन पकारे दुप्परिचया । अत्र दु शब्द कृच्छ्रार्थ । सुजहोत्ति "नो सुजहा अधीर-

पुरिसेहिं" उत्त० ८।६। सुखेन अकृच्छ्रेण हीयन्ते सुहाना इत्यर्थ । अत्र सुपूर्वकजहाधातो खप्रत्यये अकारेवशिष्टे लोपोन्यतरस्येति धातोराकारलोप । दु पूर्वकस्य चोदाहरणमनेकविध यथा "दुरणुचरे पायवजणस्स" नाया० १।२३। अत्र चतुर्थी तादर्थ्ये । "गधहत्थि दूरूढा समाणी" नाया० १।३२। अत्र तु कर्त्तरि तप्रत्यय । गतिविशेषार्थत्वात् ।

## पाद् ह्रस॰ खे दधयो॰ ।२।३।१२३॥

पात्परस्य ह्रस्धातोर्दकारस्य धकारस्य च हकार॰ स्यात् खे परे । दुप्पहसो ।

पादिति—ह इत्यनुवर्त्तते । दुर्पपूर्वकह्रस्धातो खप्रत्यये हकारादेशे दुप्पहसो ।

इति कृदन्ते भावकर्मप्रक्रिया ।

---

## अणदना भावे ।२।२।४७॥

एते प्रत्यया भावे स्यु॰ । कारो । हारो । भारो । धारो । करो । हरो । भरो । धरो । करण । हरण । भरण । धरण । अब्भगण । उवजण ।

अणदेति—धातोरित्यनुवर्तते । कृधातोरणि प्रत्यये 'उपधावृद्धौ' कारो । एवमन्येऽपि । अति तु करो । हरो । अनप्रत्यये करण । हरण । नस्य ण । अभिपूर्वकाज्धातोरनप्रत्यये 'अभेरजो ग' इति सूत्रेण गकारे उपसर्गसम्बन्धिन इकारस्य भकारे पूर्वभकारस्य परसवर्णे अब्भगण । उव + अजन इत्यत्र दीर्घे सयुक्ते ह्रस्वे नस्य णत्वे उवजण ।

## वे परेश्चासे ।२।४।१०४॥

वे॰ परस्य परेरन्त्यस्य चकारो वाऽणन्तासधातौ परे । विवचासो । विवज्ञासो । विपरियासो ।

वेरिति—वेत्यनुवर्त्तते । आसे इति तु अणन्तास्धातोर्निर्देशः । अतएवाद्याणान्तेत्यादि । विपरिपूर्वक्वासधातोरणि प्रत्ययेऽनेन परिसम्बन्धिन इकारस्य चकारे परसवर्णेन रेफस्य चकारे परय वकारे विवच्चासो । एतदभावे रेफपर-

त्वेनेकारस्य नकारे वेफस्य परसवर्णे णियप्पामो। तदभावे सगददाणोर्डहिति सूत्रेण धातोरादारस्य यद्वागमे विपरियासो।

## अत्यभिप्पाभ्यामत्ति ।३।१।८०॥

आभ्यां परस्येधातोरयादेशः स्यादति परे। अयओ। अभिप्पाओ।

अत्यभिप्पाभ्यामिति—अय इत्यनुवर्त्तते। अतिपूर्वकेधातोरति प्रत्यये इधातोरयादेशे उपसर्गसम्बन्धिन इकारस्य यकारे तकारस्य परसवर्णे यकारे यकारलोपे प्रकृतिभावे अयओ। केवलपोपसर्गात्परस्य धातोर्मा भूदित्याह अभिप्पेत्याह। अभिप्पपूर्वकादभिप्पाओ।

## उदात्क्खक्कौ करोऽति वा ।२।४।१४॥

असात्परस्य करधातोरादे क्खक्कौ वा भवतोऽति परे। उवक्खरो। उवक्करो। उवकरो।

उदादिति—आदेरित्यनुवर्त्तते। उवपूर्वककरधातोरति प्रत्ययेऽनेन धातोरादे क्खादेशे उवक्खरो। क्कादेशे उवक्करो। तदभावे उवकरो।

## उद. कसोऽदणो ।३।२।२३॥

उदः परस्य कसधातोरन्त्यस्य द्वित्वं वा स्यादति चाणि च। उक्कस्सो। उक्कसो।

उद इति—वा द्विरित्यनुवर्त्तते। उद्पूर्वककसधातोरति प्रत्ययेऽणि वाऽन्त्यस्य द्वित्वे दकारस्य परसवर्णे उक्कस्सो।

## टे किणादीनामय् ।२।३।२५॥

एषां टेरयादेशः स्याददणनेषु। खओ। कओ। चओ। चयण। पणयो।

टेरिति—अदणनेष्विति चानुवर्त्तते। किणूधातोरति प्रत्ययेऽनेन टेरयादेशे यस्य लोपे प्रकृतिभावे कओ। खिणधातोः खओ। चिणूधातोश्चयो। अने चयण। पपूर्वकणेधातो पणयो। किणू, खिण, चिणू, णे इत्यादय किणादयः।

## गोव फोऽदणनेषु वा ।२।३।३४॥

सम. परस्य गोवूधातोरन्त्यस्य फकारो वा स्याददणनेषु। सगोफो। सगोवो।

गोव इति—सपूर्वकगोवूधातोरति प्रत्ययेऽन्त्यस्य फादेशे सगोफो।

## नेर्घातो ह ।३।३।७६॥

ने परस्य घातूधातोर्घदेर्हकारो वा। निहातो, निघातो।

नेरिति—नादेरित्यनुवर्त्तते । निपूर्वकघात्धातोरति प्रत्ययेऽणि वाऽऽदेईकारे निहातो ।

## डियोऽने ।३।१।५४॥

उतः परस्य डीधातोर्डादेशः स्यादने परे । उड्डाण ।

डिय इति—उत डा इत्यनुवर्त्तते । उत्पूर्वकडीधातोरने डादेशे नकारस्य णकारे दकारस्य परसवर्णे उड्डाण ।

## ट्ठ उदोऽने ।३।२।७८॥

उदः परस्य ट्ठाधातोरन्त्यस्य लोपो वाऽने । उत्थण । उत्थाण ।

ट्ठ इति—लोपो वेत्यनुवर्त्तते । उत्पूर्वकट्ठाधातोरने प्रत्यये 'उपसर्गाट्टस्थ' इति सूत्रेण थादेशेऽनेनातो लोपे उत्थण । तदभावे उत्थाण । समुत्थणमिति ज्ञातानवमाध्ययने प्रयुक्त दृश्यते ।

## उदस्थभ खोऽदनयो' ।२।४।७५॥

उदः परस्य थंभ्धातोरादेः खकारः स्यादति परेऽने च । उक्खभो । उक्खभण ।

उद इति—आदेरित्यनुवर्त्तते । उत्पूर्वकथभ्धातोरत्ति प्रत्ययेऽनेन धातोरादे खकारे दकारस्य परसवर्णे उक्खभो । अनप्रत्यये उक्खभण ।

## फास' फरिसो वा ।२।३।२८॥

अस्य फरिमादेशो वा स्याददनयोः । फरिसो । फासो ।

फास इति—अदनयोरित्यनुवर्त्तते । फास्धातोरति प्रत्ययेऽनेन फरिसादेशे फरिसो ।

## उज्जो योऽने वावः ।२।३।१०४॥

उत्पूर्वकजोयधातोरन्त्यस्य वकारः स्यादने परे । उज्जोवण ।

उज्जो य इति—षष्ठीनिर्देशादन्त्यस्येति लभ्यते । उत्पूर्वकजोय्धातोरनप्रत्ययेऽनेन यकारस्य वकारे उज्जोवण ।

## मुसो मरिसोऽदनयोः ।२।३।२६॥

आतः परस्य मुस्धातोर्मरिसादेश' स्याददनयो' । आमरिसो । आमरिसण ।

मुस इति—अनेकवर्णत्वात्सर्वादेश । आदेश सान्त । आपूर्वकमुस्धातोरति प्रत्यये मरिसादेशे आमरिसो । अनप्रत्यये आमरिसण ।

## वेर्मसः ।२।३।२७॥

वेः परस्य ग्रसधातोर्मसादेशोऽदनयोः । वीमसो ।

वेरिति—अदनयोरित्यनुवर्त्तते ग्रस इति च। विपूर्वकग्रसधातोरति प्रत्यये मसादेशे वेर्दीर्घे वीमसो ।

## सज्जः सङ्गः ।२।३।६॥

सज्ज्धातोः सङ्गादेशः स्यादति । अतिप्पसगो ।

सङ्ग इति—अतीत्यनुवर्त्तते । अतिप्पपूर्वकसज्ज्धातोरति प्रत्यये सगादेशे अतिप्पसगो । अनेकवर्णत्वात्सर्वादेशः ।

## सिरः सग्गोऽदितो ।२।३।१२०॥

अस्य धातोः सग्गादेशः स्याददितो । उसग्गो । समग्गो । निसग्गो । विओसग्गो ।

सिर इति—अनेकवर्णत्वात्सर्वादेशः । उद्पूर्वकसिर्धातोरति प्रत्यये सग्गादेशे उससग्गो । एवमन्येऽपि ।

## सकुचादिभ्योऽनातौ ।२।४।५४॥

एभ्यः परानतौ णितौ भवतः । सिलेसो । निक्खेवो । खोभो । देसो । बोहो । सोधो । सिलेसण । खेवण । खोभण । देसण । बोहण । सोधण । कोहण ।

सकुचादिभ्य इति—णिदित्यनुवर्त्तते । सिलीस्धातोरति प्रत्ययेऽनेन णिद्भावे वृद्धौ सिलेसो। यद्यप्यणप्रत्ययेनापि सिद्धयति सिलेसादिः तथाप्यतिसिलीम इति मा भूदिति णित्त्वविधानमतः निपूर्वकक्षिव्धातोरति निक्खेवो । खुभ्धातो खोभो । न्सिधातोर्देसो । बुज्झ्धातोरति प्रत्यये बुज्झादित्वाज्झयोर्हादेशे वृद्धौ बोहो । एवमन्येऽपि । सकुच् । कुज्य् । क्षिव् । सिज्ज् । खुभ् । दिस् । बुज्झ् । विज् । विस् । सुज्झ् । सिलीस् । भुज् । रिच् । लिप् । मुच् । एते सकुचादयः । आकृतिगणः ।

## समः खुभो हो वा ।२।३।२०॥

समः परस्य खुभ्धातोरन्त्यस्य हकारो वा स्यादति । सखोहो । सखोभो ।

सम इति—अतीत्यनुवर्त्तते । सपूर्वकखुभ्धातोरति प्रत्ययेऽन्त्यस्य हकारे णिद्भावे वृद्धौ सखोहो । पक्षे सखोभो ।

## सोचो गो वाऽणतो. ।३।३।१४१॥

अस्यान्त्यस्य गो वाऽणतो' । सोगो । सोचो ।

सोच इति—सोच्धातोरणि प्रत्ययेऽन्त्यस्य गकारे सोगो ।

## ओः पाओ' करकरणयोः ।२।४।५७॥

पाउशब्दस्यौकारान्तादेशः स्यात्करकरणशब्दयोः । पाओकरो । पाओकरण ।

ओरिति—पाउ+करो इति स्थितेऽनेनोकारस्यौकारे पाओकरो ।

## अवात्कसोऽणि ।३।३।३८॥

अस्मात्परस्य कस्धातोरादेर्द्धित्व नाऽणि । अवकासो ।

अवादिति—आदेर्द्धित्वमित्यनुवर्त्तते । अवपूर्वककस्धातोरणि धातोरादेर्द्धित्वे वृद्धौ अवकासो ।

## करिसो णिति न ।३।२।१५॥

करिस्धातो स्वरस्य वृद्धिर्न णिति । करिसो ।

करिस इति—वृद्धिरित्यनुवर्त्तते । करिस्धातोरणि वृद्धेर्निषेधे करिसो ।

## अहेरुवादणि पज्जः पय ।२।३।११५॥

अहे' परस्मादुवोपसर्गात्परस्य पज्ज्धातोः पयादेश' स्यादणि । अज्झोववाओ ।

अहेरिति—अहिउवपूर्वकपज्जधातोरणि धातोरनेन पयादेशे तरह्भ्यश्च-जझा इति सूत्रेण हकारात्परस्येकारस्य झकारे हकारस्य जकारे अज्झोववाओ । यकारस्य लोपे प्रकृतिभाव ।

## रुजादीनां ग' ।२।३।२४॥

एपामन्त्यस्य गो वाऽणि । रोगो । पागो । भागो । वइरेगो । जोगो ।

रुजादीनामिति—अणीत्यनुवर्त्तते । षष्ठीनिर्देशादन्त्यस्य गकार' । रुज्धातोरणि वृद्धावनेन गकारे रोगो । पच्धातो पागो । भज्धातोर्भागो । विअतिपूर्वकरिच्धातोरणि प्रत्यये उपधावृद्धौ चकारस्य गकारे वकारोत्तरेकारस्य यकारे सयुक्तादेर्लोपे तकारस्य यकारे लोपे प्रकृतिभावे वइरेगो ।

## भुजादीनामदणनेषु ।४।१।४३॥

एपामनुस्वारलोप स्यादणनेषु । भोगो । भोजण । भुत्ती ।

भुंजादीनामिति—अनुस्वारस्य लोप इत्यनुवर्तते। भुजूधातोरणि प्रत्ययेऽनुस्वारलोपे रुजादीना ग इति गकारे वृद्धौ भोगो। एवमन्येऽपि। भुजोऽन्यादावित्ति सूत्रेण विकल्पेन प्राप्तो लोपोऽनेन नित्यं विधीयते। भुज्। निउज्। मुच्। छिद्। छिन्द्। भिद्। एते भुजादय। आकृतिगणोऽयम्।

## अणि पच क ।२।३।२२॥

अस्यान्त्यस्य कोऽणि परे। पागो। पाको।

अणीति—पच्धातोरणि ककारादेशे वृद्धौ गकारे पागो, पाको।

## रञ्जोऽणि ।३।४।४१॥

अस्यान्त्यस्य लोपोऽणि। रागो।

रञ्जो इति—लोप इत्यनुवर्तते। रञ्जूधातोरणि अन्त्यस्य लोपे रुजादित्वाद्गकारे वृद्धौ रागो।

## लिपो डाउ ।२।२।२७॥

अस्माद्भावे डाउः प्रत्ययः स्यात्। लाऊ। लेवो। लेवण।

लिप इति—भावे इत्यनुवर्त्तते। लिप्धातोर्डाउप्रत्यये डित्त्वाट्टिलोपे लाऊ। असमानोऽपवादप्रत्ययो विकल्पेन बाधक । तेन लेवो इत्यादि सिध्यति। लेवो इत्यत्राणि प्रत्यये भुजादीनामिति सूत्रेणानुस्वारलोपे उपधावृद्धौ पस्य व । अन प्रत्यये तु सकुचादित्वाण्णिद्वद्भावे वृद्धि ।

## लिंपुच्छिदोरने ।४।१।४५॥

अनयोरनुस्वारस्य लोपो वा स्यादने परे। अणुलेवण। अणुलिंपण। आलेवण। आलिंपण। छिंदण। छेयण।

लिंपुच्छिदोरिति—अनुस्वारस्य लोपो वेत्यनुवर्त्तते। अनुपूर्वकलिंप्धातोरने प्रत्ययेऽनुस्वारस्य लोपे सकुचादित्वाण्णिद्वद्भावे वृद्धौ पस्य वकारे अणुलेवण। एवमालेवण। उभयत्र नो ण। छिंद्धातोरनेऽनुस्वारलोपे वृद्धौ छेयण। लोपाभावे छिंदण।

## वेर्विच ।२।३।२३॥

वे परस्य विच्धातोरन्त्यस्य ककार स्यादणि। विवेगो। विवेको।

वेरिति—अणीत्यनुवर्त्तते कश्च। विपूर्वकविच्धातोरणि ककारे कस्य चानादेरे संयुक्तस्य को गयौ इति सूत्रेण गकारे विवेगो। णिति वृद्धि ।

## अयने ।३।१।७९॥

अहेः परस्येधातोरयादेशो ना स्यादने । अज्झयण ।

अयिति—अहेर्वाणरित्यनुवर्त्तते । अहिपूर्वकेधातोरने प्रत्ययेऽयादेशे इकारात्परस्येकारस्य झकारे इस्य परसवर्णे अज्झयण ।

## अहेर्झओ ।२।२।५६॥

अहेरन्त्यस्य झकार: स्यादिधातौ परे ।

अहेरिति—तरहेभ्य इत्यनेनामवर्णे विधानात्सवर्णे झकारविधानार्थमिदम् । पूर्वसूत्रेण विकल्पेनायादेशविधानादयादेशाभावे अहि+इ+अन इत्यत्रानेनोपसर्गेकारस्य झकार ।

## एरने ।३।२।३३॥

इधातोरने परे पूर्वपरयोः पूर्वसवर्णदीर्घ: स्यात् । अज्झीण ।

एरिति—पूर्वपरयो पूर्वस्य सवर्णे दीर्घ इत्यनुवर्त्तते । अहिपूर्वकेधातोरने प्रत्यये अहेरिति सूत्रेणान्त्यस्य झकारे परसवर्णेऽनेन सूत्रेण पूर्वसवर्णदीर्घे अज्झीण ।

## उ पाभ्यां वरो वा ।२।३।१०८॥

आभ्या परस्य वरधातोर्वस्योमादेशो वाऽने परे । पाउरण ।

उर इति—अने इत्यनुवर्त्तते । सित्त्वात्सर्वादेश । अतएवाकारसहितवकारस्योकारे पाउरण । प्रकृतिभावान्न सन्धि । पक्षे प्रावरण वस्त्रमित्यर्थ ।

## आणुपेभ्यो मिलो ण्व: ।२।३।१०९॥

एभ्य: परस्य मिलाधातोर्ण्वादेशो वाऽने परे । अण्वाण । अणुण्वाण । पण्वाण ।

आणुपेभ्य इति—अनेकवर्णत्वात्सर्वादेश । आश्च अणुश्च पश्चेति द्वन्द्वे । आणुपास्तेभ्य आणुपेभ्य । आदेशश्चाकारान्त । तेन सवर्णदीर्घ । आपूर्वकमिलाधातोरने प्रत्यये ण्वादेशे सयुक्ते ह्रस्वे अण्वाण । एवमणुण्वाण, पण्वाणमिति । अन्यत्र तु मिलाण ।

## रञ्जो रग: ।२।३।११०॥

रञ्जधातो रगादेशोऽने परे । रगण ।

रञ इति—अने इत्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । रञ्जधातोरने प्रत्यये रगादेशे रगण । आदेशेऽकारोऽन्त्य उच्चारणार्थ ।

## लीयो लेगो ।२।३।११७॥

लीय्धातोर्ल इत्यादेशो वा स्यादने परे लेगं । लीयग ।

लीय इति—अन इत्यनुवर्तते । लीय्धातोरने प्रत्यये ले इत्यादेशे णत्वे लेग । लोपोऽन्यतरस्येति सूत्रेणाकारलोप । पक्षे लीयण ।

## अवादूसो वस. ।२।३।१०५॥

अवात्परस्य वसधातोरूसादेश स्यादने परे । अवऊसण ।

अवादिति—अने इत्यनुवर्तते । अनेकवर्णत्वात्सर्वादेशः । अवपूर्वकवस् धातोरनेऽनेऊसादेशे णत्वे प्रकृतिभावे अवऊसणमुपवसनमुपवास इत्यर्थः ।

## परेरुस ।२।३।१०६॥

परेः परस्य वस्धातोरुसादेश स्यादने परे । पज्जुसण ।

परेरिति—वसोऽने इति पदद्वयमनुवर्तते । अनेकवर्णत्वात्सर्वादेश । परिपूर्वकवस्धातोरुसादेशे इकारस्य जकारे रेफस्य परसवर्णे नकारस्य णकारे पज्जुसण ।

## सुण्हुणोः सवहनावने ।२।३।१२८॥

अनयोः सवहवादेशौ क्रमेण वा स्तोऽने परे। सवण। सुणण। हवण। हुणण ।

सुण्हुणोरिति—वेत्यनुवर्तते । सुण्धातो सवादेश , हुण्धातोर्हवादेशो यथासङ्ख्यमन्वयात् । सुण्धातोरनप्रत्यये सवादेशे नस्य णत्वे सवण । पक्षे सुणण । एव हुण्धातोर्हवण हुणण ।

## आत क्खिव कखयोर्हे ।२।३।१२१॥

आत. परस्य क्खिव्धातो' कखयोर्हो वा स्यादने परे ।

आत इति—अने इत्यनुवर्तते वेति च ।

## आविभ्यां क्खिववोऽवाऽन ।२।४।५५॥

आभ्या क्खिवव्धातो परोऽनो णिद्वा । आहेवण । अक्खेवण ।

आविभ्यामिति—णिदित्यनुवर्तते । आपूर्वकक्खिवव्धातोरने प्रत्यये णिद्भावे हकारादेशे वृद्धौ आहेवण । हकाराभावे अक्खेवण । णिद्भावाभावे अक्खिवण ।

## साड्डाय ।२।२।३८॥

सधातोर्डाय स्याद्भावे । साओ । वत्रमाओ ।

सादिति—भावे इत्यनुवर्त्तते । सधातोर्डायप्रत्यये टित्त्वाट्टिलोपे साओ । यलोपे प्रकृतिभाव । विआपूर्वकाद्ववसाओ ।

## च्चय आग ।२।२।३९॥

अस्माद्भावे आगः स्यात् ।

च्चय इति—भावे इत्यनुवर्त्तते ।

## इश्चय आगे ।२।४।४३॥

चयूधातोरत इकारः स्यादागे । चियागो । चागो ।

इरिति—अत इत्यनुवर्त्तते । चयूधातोरागप्रत्ययेऽनेनात इकारे चियागो । सयुक्तादेश्चस्य लोप । अणि प्रत्यये वृद्धौ रुजादित्वाद्दकारे चागो । असमानापवादस्य विकल्पेन बाधकत्वात् ।

## उपसर्गाद्धारणार्थेभ्यो डिरकर्त्तरि ।२।२।२३॥

उपसर्गाद्धाधरधातुभ्या डि प्रत्यय स्याद्भावे कर्तृभिन्ने कारके च । निही । निधी । विही । विधी । सधी । समाही । उत्राही ।

उपसर्गादिति—अकर्त्तरीत्यत्र नञा समास । तेन कर्तृभिन्नतत्सदृश-इति लभ्यते । नञिवयुक्तमन्यसदृशाधिकरणे इति न्यायात् । सादृश्यञ्च कारकत्वेन तदाह कर्तृभिन्ने कारके इति । निपूर्वकधाधातोर्डिप्रत्यये डित्त्वाट्टिलोपे निही । धस्य ह निधानमित्यर्थ । निधीयतेऽस्मिन्निति वाऽर्थ । एवमन्येऽप्यर्था प्रकरणवशाद्बोद्धव्या ।

## कर्मण्यधिकरणे च ।२।२।२४॥

*कर्मण्युपपदे धाधरधातुभ्या डि स्यादधिकरणेऽर्थे । उदधी ।*

कर्मणीति—डिरित्यस्य धारणार्थेभ्य इत्यस्य चानुवृत्ति । उदूपूर्वकधाधातोर्डिप्रत्यये उदधी । समुद्र ।

## मुच खण् ।२।२।४०॥

मुच्धातो खण् स्याद्भावे । मोक्खो । मोयण । मोचण ।

मुच इति—भावे इत्यनुवर्त्तते । मुचूधातो खणि प्रत्यये सयुक्तेऽनुस्वारलोपे

उपधावृद्धौ परमवर्णे मोक्लो। अपवादस्य विकल्पेन बाधकत्वादाह मोयण। अत्र भुजादित्वादनुस्वारलोप । सरुचादित्वाद् णिद्वद्भावे वृद्धि ।

## स्त्रियां ति. ।२।२।२६॥

धातोः स्त्रिया ति. स्यात् कर्तृकर्मणोर्भावे च । संपत्ती । भत्ती ।

स्त्रियामिति—कर्तृकर्मणोर्भावे इत्यनुवर्त्तते । सपपूर्वेणापूधातोस्तिप्रत्यये परमवर्णे दीर्घे संयुक्ते ह्रस्वे पत्ती । भज्धातोस्तिप्रत्यये भत्ती ।

## इधो ढधौ ते ।२।४।८२॥

अस्मात्परस्य तिप्रत्ययस्यादेर्ढकारधकारौ पर्यायेण वा स्याताम् । इड्ढी । इद्धी ।

इध इति—आदेरित्यनुवर्त्तते । इध्धातोस्ति प्रत्ययेऽनेन तस्य ढकारे धकारस्य परमवर्णेन टकारे इड्ढी । धकारे तु इद्धी ।

## बुज्झादिभ्यो ध ।२।४।८३॥

एभ्य' परस्य तिप्रत्ययस्यादेर्ध' स्यात् । बुद्धी । रिद्धी । लद्धी । सिद्धी । गिद्धी ।

बुज्झादिभ्य इति—तेरादेरित्यनुवर्त्तते । बुज्झ्धातोस्तिप्रत्यये तस्य धकारे त्रयाणामित्याद्ये व्यञ्जनलोपे झकारस्य परमवर्णेन दकारे बुद्धी । रिध्-धातो रिद्धी । लभ्धातोर्लद्धी । सिज्झ्धातो सिद्धी । बुज्झ्, रिध्, लभ्, सिज्झ् एते बुज्झादय ।

## आनिपेभ्य कर ।३।४।४९॥

एभ्य परस्य कर्धातोरन्त्यस्य लोप स्यात्तौ परे ।

आनिपेभ्य इति—लोपस्तावित्यनुवर्त्तते । षष्ठीनिर्दिष्टत्वादन्त्यस्येति लभ्यते ।

## आत कर ।२।३।५७॥

आत' परस्य कर्धातोरकारस्येकार स्यात्तौ परे । आकिती ।

आत इति—अत इस्तावित्यनुवर्त्तते । आपूर्वककर्धातोस्तिप्रत्ययेऽनेनेकारे-ऽन्त्यस्य लोपे आकित्ती ।

## निपाभ्यां डस्ते' ।२।४।९५॥

आभ्या कर्धातो' परस्य तिप्रत्ययस्यादेर्डकारो वा । नियडी । पगडी । नियती । पगती ।

निपाभ्यामिति—करो वेत्यनुवर्त्तते । आदेरिति च । निपूर्वककर्धातोरित प्रत्ययेऽनेन तस्य इकारे आनिपेभ्य इति सूत्रेण रेफस्य लोपे कस्य यकारे नियडी । एवमन्येऽपि ।

## कसादिभ्यष्टः ।२।४।८६॥

एभ्यः परस्य तिप्रत्ययस्यादेष्ट स्यात् ।

कसादिभ्य इति—तेरिति आदेरिति चानुवर्त्तते । आदेशेऽकार उच्चारणार्थ ।कस्, तुस्, दिस्, पोस्, मास्, एते कसादय ।

## उदः कसस्तौ ।२।३।५५॥

उदः परस्य कस्धातोरुपधाया इकारो वा तौ । उक्किट्ठी । उक्कट्ठी ।

उद इति—उपधाया इरित्यनुवर्त्तते वेति च । उद्पूर्वककस्धातोरितप्रत्ययेऽनेनात इकारे पूर्वसूत्रेण ठकारे सस्य परसवर्णे दस्य ककारे उक्किट्ठी ।

## तौ रमादीनाम् ।३।४।४८॥

एषामन्त्यस्य लोप स्यात्तौ परे । रती । गई । थुई । पीई । सई । सुई । हती ।

ताविति—लोप इत्यनुवर्त्तते । रम्धातोरितप्रत्यये मस्य लोपे रती । गम्धातोर्गई । त्थुण्धातो थुई । सर्धातो सई । सुण्धातो सुई । हण्धातोर्हती । रम् । गम् । त्थुण् । पीण् । सर् । सुण् । हुण् । हण् । एते रमादय । आकृतिगण ।

## जोयस्तौ ।३।३।५॥

अस्य स्वरस्य ह्रस्वः स्यात्तौ परे । जुई । जुती ।

जोय इति—ह्रस्व इत्यनुवर्त्तते । स्वरस्येत्युपतिष्ठते । जोय्धातोरितप्रत्यये ह्रस्वादेशे जुई । तौ रमादीनामिति यलोप । तकारस्य यकारे लोप । ओकारस्य ह्रस्व उकारो भवतीति ।

## धरादीनाम् ।२।३।५८॥

एषा स्वरस्येकार' स्यात्तौ परे । धिई । किती । सिट्ठी । ठिई ।

धरादीनामिति—ताविति चानुवर्त्तते । धर्धातोरितप्रत्यये धातोरत इकारे तौ रमादीनामिति सूत्रेण रेफलोपे तस्य यकारे लोपे प्रकृतिभावे धिई । कर्धातो किती । रमादिगणे पाठाद् रेफस्य लोप । सास्धातो सिट्ठी । ठाधातोष्ठिती । धर्, कर्, ठा, वड्ढ्, सास्, एते धरादय ।

## आतो जस्य पज्जो वा ।३।४।५०॥

आतः परस्य पज्ज्धातोर्जयोर्लोपो वा स्यात्तौ परे । आवत्ती । आवज्ती । निवत्ती । सपत्ती ।

आत इति—लोप इत्यनुवर्त्तते । त्रिव्यञ्जनसंयुक्त पूर्वजकारस्य त्रयाणामिति सूत्रेण लोपेऽपि परजकारस्य लोपाय सूत्रमिदम् । आपूर्वकपज्ज्धातोस्तिप्रत्यये जलोपे पकारस्य वकारे आवत्ती । लोपाभावे आवज्ती ।

## भणस्ते. ।४।२।३०॥

भण्धातो परस्य तिप्रत्ययस्येडागमः स्यात् । भणिती ।

भण इति—इडित्यनुवर्त्तते । भण्धातोस्तिप्रत्ययेऽनेनडागमे भणिती ।

## वत्तोऽत इत्तौ ।२।३।८४॥

वत्धातोरकारस्येकारो वा तौ परे । वित्ती । वत्ती ।

वत्त इति—वेत्यनुवर्त्तते । वत्धातोस्तिप्रत्ययेऽनेन धातोरत इकारे व्यञ्जनत्रयसंयुक्ते पूर्वतस्य लोपे वित्ती ।

## निरो वर उत् ।२।३।५९॥

निरः परस्य वर्धातोरत उकारः स्यात्तौ परे । णिव्वुई ।

निर इति—अत इति तौ इति चानुवर्त्तते । निर्पूर्वकवर्धातोस्तिप्रत्ययेऽत उकारे रेफस्य परसवर्णे णत्वे णिव्वुई ।

## वरसो वुस. ।२।३।८५॥

अस्य धातोर्वुसादेशः स्यात्तिप्रत्यये । वुट्ठी । आवुट्ठी ।

वरस इति—तावित्यनुवर्त्तते । अनेकवर्णत्वात्सर्वादेश । आदेश सान्त । वरस्धातोस्तिप्रत्यये वुसादेशे ते. कसादिभ्य इति सूत्रेण तकारस्य ठकारे परसवर्णे वुट्ठी ।

## अनोरात सास ।२।३।५६॥

अनो परस्य सास्धातोराकारस्येकारो वा तौ परे । अणुसिट्ठी । अणुसट्ठी ।

अनोरिति—तौ वा इति चानुवर्त्तते । धरादित्वान्नित्य प्राप्ते विकल्प्यतेऽनेव । अनुपूर्वकसास्धातोस्तिप्रत्यये कसादित्वाट्ठकारेऽत इकारे अणुसिट्ठी । इकाराभावे संयुक्ते ह्रस्वे अणुसट्ठी ।

## आदीहादिभ्यः ।२।२।२६॥

एभ्यो धातुभ्य आत्प्रत्ययः स्त्रियाम् भावे। ईहा। ऊहा। इच्छा। मन्ना।

आदिति—भावे इत्यनुवर्त्तते। स्त्रियामिति च। सामान्यसूत्रेण विहितस्या-पवाद। वाऽसमानविधिस्तु न स्त्र्यधिकारेषु तदप्रवृत्ते। स्त्र्यधिकारेषु वाऽसमान-विधिर्नास्तीति परिभाषया निषेधात्। ईह्धातोराति प्रत्यये ईहा। मन्न्धातो-राति मन्ना मतिर्बुद्धिरित्यर्थ।

## उपसर्गादातो ड॰ ।२।२।२७॥

अस्मात्परस्मादादन्ताद्धातोर्ड॰ स्यात्स्त्रिया भावे। अवस्था। पया। पमा।
उट्ठा। निट्ठा। पइट्ठा।

उपसर्गादिति—स्त्रिया भाव इत्यनुवर्त्तते। अवपूर्वक्ट्ठाधातोर्डप्रत्ययेऽ-वत्था। सर्वत्रादन्तत्वात्स्त्रियामप्। पपूर्वकनाधातो पया। पपूर्वकमाधातो पमा। प्रमा इत्यथ। उद्पूर्वक्ट्ठाधातो उट्ठा। एवमन्येपि।

## आति तिगिच्छो वा ।३।२।१९॥

आति परे तिगिच्छ्धातो स्वराणा मध्ये आदे, स्वरस्य वृद्धिर्वा। तेइच्छा।
तिइच्छा।

आतीति—स्वरस्यादेरित्यनुवर्त्तते। वृद्धिरिति च। स्वरस्येत्यत्र निर्द्धारणे षष्ठी तेन मध्ये इति लभ्यते। चिगिच्छ्धातोराति प्रत्यये तस्मिन्नादिस्वरवृद्धौ तेइच्छा। वृद्ध्यभावे तिइच्छा।

## उदो मज्जोऽत उद्वा ।२।३।४९॥

उद परस्य मज्ज्धातोरत उकारो वाऽऽति परे। उम्मुज्जा। उम्मज्जा।॰

उद इति—वातित्यनुवर्त्तते। उद्पूर्वकमज्ज्धातोराति प्रत्ययेऽनेनात उकारे उम्मुज्जा। दस्यास्य परसवर्ण।

## आति पाद् व्वयो ज्ज ।२।३।४८॥

पपूर्वकव्वय्धातोरन्त्यस्य ज्जादेश स्यादाति परे। पव्वज्जा।

आतीति—षष्ठीनिर्द्देशादन्त्यस्येति लभ्यते। पपूर्वकव्वय्धातोराति प्रत्यये यस्य ज्जादेशे पव्वज्जा।

## आदणिज्ञयोः सलह सिलाहसलाहौ ।२।२।४७॥

सलह्धातो' मिलाहसलाहौ भवत आति परऽणिज्ने च । मिलाहणिज्ञ । गलाहणिज्ञ । मिलाहा । मलाहा ।

आदणिज्ञयोरिति—अनेकवर्णत्वात्सर्वादेश । सल्हधातोर्णिज्ञप्रत्यये सिलाहादेशे सिलाहणिज्ञ । सलाहादेशे सलाहणिज्ञ । आति मिलाहा । सलाहा ।

## अप्पाहूहाभ्यामनि' ।२।२।२८॥

आभ्या भावेऽनि स्यात्स्त्रियाम् । अप्पाहणी । हाणी ।

अप्पाहिति—भावे स्त्रियामित्यनुवर्त्तते । अप्पाहधातोरनिप्रत्यये अप्पाहणी । नस्य ण । हाधातोर्हाणी ।

## उट्टादिभ्य इ' ।२।२।२९॥

एभ्यः स्त्रियामिः प्रत्यय स्याद्भावे । आउट्टी । अणुकड्ढी । पयडी । विसोही । वुड्ढी ।

उट्टादिभ्य इति—स्त्रिया भाव इत्यनुवर्त्तते । आपूर्वकउट्टधातोरिप्रत्यये आउट्टी । अणुपूर्वककड्ढधातो अणुकड्ढी । पपूर्वकयड्धातो पयडी । कस्य य । विपूर्वकसोहधातोर्विसोही । वड्ढधातो वुड्ढी । वड्ढस्तावित्यनेनाकारस्योकार । उट्ट । कड्ढ, यड्, गिज्झ, वड्ढ, सुज्झ, एते उट्टादय ।

## खिज्जादिभ्य इय ।२।२।३५॥

एभ्यो भाव इय स्यात्स्त्रियाम् । खिज्जिया । चरिया । जागरिया ।

खिज्जादिभ्य इति—भावे स्त्रियामित्यनुवर्त्तते । खिज्जधातोरियप्रत्ययेऽदन्तत्वादपि खिज्जिया । खिज्ज, कर, चर, जागर, जीव, तुर, एते खिज्जादय ।

## कर इये ।२।४।४४॥

करधातोरत इकार स्यादिये । किरिया ।

कर इति—अत इरित्यनुवर्त्तते । करधातोरियप्रत्ययेऽत इकारे किरिया ।

## गेहो गिज्झ औ ।२।३।९७॥

गिज्झधातोर्गेहादेश स्यादिप्रत्यये । गेही ।

गेह इति—अनेकवर्णत्वात्सर्वादेश । गिज्झधातोरिप्रत्यये गेहादेशे गेही ।

## दिस्पाभुंजूलभूवचां स्वार्थेच्छायां दिदिक्खापिवासा-बुभुक्खालिच्छाविवक्खा ।२।३।१५३॥

एषा धातूना स्वार्थेच्छायामेते निपात्यते । दिदिक्खा । पिवासा । बुभुक्खा । लिच्छा । विवक्खा ।

दिस्पाभुजिति—एभ्यो धातुभ्य आप्रत्यय स्वार्थेच्छाया भवति । क्रमेण दिदिक्खाद्यादेशश्च तेषा भवति । तथाच दिदिक्खेत्यादे क्रमेण दर्शनादीच्छे-त्यर्थो भवति ।

## दसादिभ्योऽणिय ।२।२।६६॥

एभ्योऽणियप्रत्यय' स्याद्भावे स्त्रियाम् । दसणिया । चिंतणिया ।

दसादिभ्य इति—आदीहादिभ्य इति सूत्रान्मण्डूकप्लुत्या भावे स्त्रिया-मित्यनुवर्त्तते । दस्धातोरणियप्रत्यये स्त्रियाममि च दसणिया दर्शनमित्यर्थ । आकृतिगणोऽयम ।

## हणश्चाः ।२।२।३०॥

हणधातोर्भावे चाप्रत्यय. स्यात्स्त्रियाम् । आहञ्चा ।

हण इति—स्त्रिया भाव इत्यनुवर्त्तते । हण्धातोश्चाप्रत्यये परसवर्णेन णस्य चकारे हञ्चा ।

## हिंसादिभ्योऽय ।२।२।३१॥

एभ्योऽय' प्रत्ययो वा स्त्रिया भावे । हिंसया　हिंसा । पेक्खया । पेक्खा ।

हिंसादिभ्य इति—स्त्रिया भावे इत्यनुवर्त्तते चेति च । अतएव पक्षे हिंसेत्यादि सिध्यति । तथाचायप्रत्यये हिंसया अदन्तत्वादप् । ईहादित्वादाप्रत्यये हिंसा ।

## प्रेरणान्तासूगथूभ्योऽन ।२।२।३२॥

एभ्यो भावेऽन. स्यात् स्त्रियाम् । कारणा । हारणा । आसणा । गथना ।

प्रेरणान्तेति—भावे स्त्रियामित्यनुवर्त्तते । कर्धातोरेणि तदन्तादनप्रत्यये कारणा । नस्य ण । आस्धातोरासणा । गथ्धातोर्गथना ।

## अनान्ताद्य ।२।२।३३॥

स्त्रिया निहितानान्तात्स्वार्थे य प्रत्ययो वा स्त्रियाम् । घट्टणया । घट्टणा । विणियट्टणया । विणियट्टणा ।

अनान्तादिति—स्त्रियामित्यनुवर्तते । अविशिष्टार्थस्यात्स्वार्थे इति लभ्यते । षष्ठ्यास्तेऽन्यये सद्भावप्रत्ययेऽदन्तत्वादप् । विनिपूर्वकयट्धातो-र्विणियट्टणया, णिणियट्टणा । धातोश्चकारस्य वकार ।

## अकण् च ।२।२।२४॥

भावे स्त्रियां धातोरकण् स्यात्प्रायश्चाधिकारात् । अच्चिका । कारिका ।

अकणिति—भावे स्त्रियामित्यनुवर्तते । अर्चधातोरकणि अच्चिका । एव-मन्येऽपि ।

## स्वप्रकृत्यनुप्रयोगे जीवादौ ग्गहादेर्णम् सिद्धाप्रयोगश्चेत् ।२।२।६३॥

जीवादौ कर्मण्युपपदे ग्गहादेर्धातोर्णम् प्रत्ययः स्यात् स्वप्रकृतेरनुप्रयोगे सति सिद्धोऽप्रयोगो यस्यैतादृशश्चेद्ग्गहादिर्भवेत् । जीवग्गाहं गिण्हति । अग्गिकारं करेइ ।

स्वप्रकृत्यनुप्रयोग इति—स्वस्य प्रकृतिः स्वप्रकृतिः । तस्या अनुप्रयोगः स्वप्रकृत्यनुप्रयोगस्तस्मिन् स्वप्रकृत्यनुप्रयोगे । स्वपदेन विधीयमानः प्रत्ययः परि-गृह्यते । अतएव नियग्गाहं परसइ इति न । अत्र विधीयमानप्रत्ययप्रकृत्यानुपूर्वी-समानानुपूर्वीकस्य धातोरनुप्रयोगाभावात् । कर्मणीत्यनुवर्तते । सिद्धोऽप्रयोग इति व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः । जीवरूपकर्मण्युपपदे ग्गहधातोर्णमि णकारलोपे वृद्धौ जीवग्गाहं । जीवन्तं गृह्णन्ति अत्र ग्गहधातोर्व्यर्थत्वात्प्रयोगानर्हत्वम् । अग्गि-कारं करेई अग्नि करोति ।

## अन्तादौ गमादेरनम् ।२।२।६४॥

अन्तादौ कर्मण्युपपदे गमादिधातोरनम्प्रत्ययः स्यादनमः प्रकृतेरनुप्रयोगे सति सिद्धाप्रयोगश्चेद्गमादिः । अन्तगमणं गमिस्सामि । मोक्खगमणं गमि-स्सामि ।

अन्तादाविति—स्वप्रकृत्यनुप्रयोगे इत्यनुवर्तते । सिद्धाप्रयोगश्चेदिति च । अन्तगमणं गमिस्सामि=अन्तं गमिष्यामि । पारगमणं गमिस्सामि=पारं गमि-ष्यामि । मोक्खगमणं गमिस्सामि=मोक्षं गमिष्यामि । अन्तादावुपपदे गमादेरनम् प्रत्ययः । विशेषस्तु पूर्ववत् ।

यावन्तो लौकिकाः शब्दा लब्धा जैनागमे खलु ।
ते सर्वे साधिता' प्रायः सूत्रैः स्वल्पाक्षरैरिह ॥१॥
रूढेषु विकृता वर्णैर्देशकालादिभेदत. ।
विकृतिर्दर्शिता तेषा स्वरव्यञ्जनयो. क्रमात् ॥२॥
गणेषूह्या स्वय प्राज्ञैर्लभ्यैरन् ये तथाविधाः ।
शेषा निपातसंसिद्धा द्रष्टव्याः शब्दसङ्ग्रहे ॥३॥

प्रशस्ति

वर्षे चन्द्रदिशानिधिक्षितिमिते श्रीविक्रमस्याश्विने
मासे शुक्लदले शरद्विलमिते तिथ्या दशम्या कुजे ।
श्रीमत्स्वामिगुलाबचन्द्रविदुषः शिष्येण रत्नेन्दुना
स्थित्वा श्रीवढवाणकेम्पनगरे पूर्णीकृता कौमुदी ॥१॥

इति श्रीजैनसिद्धान्तकौमुदी समाप्तिमगात् ।

यावन्त इति—शब्दा इत्यत्र सन्तीत्यध्याहार । सुगमतया प्रकृतिप्रत्यय-विभागार्हा यावन्त शब्दा इत्यर्थ । तेनाप्रेतनेन न विरोध । जैनागमे इत्यनेनार्द्ध-मागधीव्याकरणमिदमिति बोधितम् । तत्रार्द्धमागधीभाषाया उपनिबन्धात् । अर्द्धमागधीशब्दार्थस्तु भूमिकाया द्रष्टव्य । मानवानामल्पमतिकत्वेन ते सर्वे इत्यनेन व्यज्यमानाभिमानितामपाकरोति प्राय इत्यनेन । प्रकृतिप्रत्ययविभाग प्रकल्प्य तत्तच्छब्दार्थाः सुगमेन बोधिता इति भाव ॥१॥ स्वल्पाक्षरैरित्यनेन सूत्रलक्षण दर्शितम् । सुगमतया प्रकृतिप्रत्ययविभागानर्हा शब्दा विशेषतो मत्कृते कोषे द्रष्टव्या । सामान्यतया त्वत्र तेषा समयादिप्रयुक्तजायमाना विकृति प्रदर्शिता ॥२॥ ये गणेऽनिर्दिष्टा सन्ति सता मतिपन्थानमारूढा, ते तत्तत्कार्यं परिज्ञाय तत्र तत्र गणे बोध्या । इदमेवाहाकृतिगणशब्द ॥३॥

द्रुतविलम्बितम्

रसदिगङ्कनिधानधरामिते
सुविदिते नृपविक्रमवत्सरे ।
शुभदले किल माधवमासके
बुधदिने विमले नवमीतिथौ ॥१॥

अनुष्टुप्

जैनसिद्धान्तकौमुद्याः स्वोपज्ञार्थप्रकाशिका ।
व्याख्यैषा नातिसंक्षिप्ता सरला नातिविस्तरा ॥२॥
सौराष्ट्रमण्डले ख्याते राजकोटाख्यपत्तने ।
पूज्यपादप्रसादेन समाप्तिं प्रापिता मया ॥३॥

इति शम् ।

इति श्रीलोङ्कागच्छान्तर्गतलिम्बडीसम्प्रदायतिलकायमान-
प्रवराचार्यपूज्यपादश्रीगुलाबचन्द्रजित्स्वामिचरणा-
म्बुजचञ्चरीकमुनिरत्नचन्द्रविरचितायामर्थ
प्रकाशिकाभिधाया जैनसिद्धान्तकौमुदी-
स्वोपज्ञव्याख्यायां कृदन्तप्रकरणं
समाप्तम् ।

समाप्तेयं स्वोपज्ञव्याख्यासमेता जैनसिद्धान्तकौमुदी ।

---

ॐ

# अथ सूत्रपाठः ।

## अथ प्रथमाध्याये प्रथम. पादः ।

स्वरस्य ह्रस्वदीर्घवृद्धय ।१। प्रत्ययस्य लोप सर्वस्य ।२। अनेकवर्णसित् ।३। स्वराणामन्त्यात्परो मित् ।४। समानयोर्विरोधे परम् ।५। अन्त्यस्य षष्ठ्या ।६। टकितावाद्यन्तौ ।७। अ आ इ ई उ ऊ ए ओ स्वरा ।८। कखगघङचछजझञ-टठडढणतथदधनपफबभमयरलवसहा व्यञ्जनानि ।९। अनुस्वार ।१०। स्वरादनन्तराणि सयुक्तम् ।११। आदेदोद् वृद्धि ।१२। आईऊ दीर्घा ।१३। अइउ ह्रस्वा ।१४। कादिमान्ता स्पर्शा ।१५। अप्रयुज्यमानसफल इत् ।१६। प्रसक्तस्यादर्शन लोप ।१७। वर्णानामभावोऽवसानम् ।१८। स्वराणामन्त्यादिष्टि ।१९। अन्त्यात्पूर्व उपधा ।२०। अदिदुतामदाताविदीदेत उदूदोत सवर्णा ।२१। वर्गेषु प्रथमद्वितीययो प्रथमस्तृतीयचतुर्थयोस्तृतीय सवर्णौ ।२२। विशेषण तदन्तस्य ।२३। अविभक्ति नाम ।२४। उदन्मेदिणेह्यएदणातोदिर्हितोरसाणमीसव सुप् ।२५। सव्वादीनि सव्वणामानि ।२६। अव्ययीभावो नपुमकम् ।२७। सुप्त्यादि विभक्ति ।२८। क्रियायामच्छादयो धातव ।२९। आवेगादय ।३०। त्यादिषु द्वौ द्वौ प्रथममध्यमोत्तमौ ।३१। एकवचनबहुवचने क्रमश ।३२। सुपश्च ।३३। द्विरुक्ते पूर्वोऽभ्यास ।३४। अव्ययमहादि ।३५। सोप्रभृति तद्धिता ।३६। अव्ययीभावश्च ।३७। अत्यादय उपसर्गाश्च ।३८। हेत्वर्थादिकृत ।३९। णमनमौ ।४०। कारके ।४१। कर्त्राऽऽप्तुमिष्यमाणतम कर्म ।४२। ठादीनामधिपूर्वाणा कर्म ।४३। अकर्मकधातुयोगे देशादय ।४४। क्रियाया प्रकृष्टोपकारक करणम् ।४५। कर्मान्वयेनेष्ट सम्प्रदानम ।४६। रुच्यर्थे प्रीयमाण ।४७। विभागेऽवधिरपादानम् ।४८। भयत्राणार्थाना भयहेतु ।४९। आधारोऽधिकरणम् ।५०। पदविधि सामर्थ्ये ।५१। समास ।५२। सुप्सुपा ।५३। अव्ययीभाव ।५४। विभक्त्यर्थादिष्वव्ययम् ।५५। असादृश्ये जहार्था ।५६। मर्यादाभिविध्योरात् ।५७। जावावजायत्तोऽवधारणे च ।५८। तत्पुरुष ।५९। द्वितीया गतादिभि ।६०। तृतीया पुव्वादिभिः ।६१। चतुर्थी हितादिभि ।६२। पञ्चमी भयादिभि ।६३। षष्ठी ।६४। पुव्वादयोऽवयविनैकवचनान्तेन ।६५। अधीणादिभि सप्तमी ।६६। तद्धितार्थे समाहारे उत्तरपदे च दिक्सङ्ख्ये ।६७। ७ ।६८। विशेषण विशेष्येण कर्मधारयो बहुलम् ।६९।

उपमानानि समानधर्मवचनै ।७०। उपमेयानि सामान्याप्रयोगे ।७१। पादयो गताद्यर्थे ।७२। जादि स्पभिनिना ।७३। अनेक प्रथमान्तमन्यपदार्थे बहुव्रीहिः ।७४। दिग्नामान्यन्तरामध्ये ।७५। सहस्तृतीयया ।७६। सङ्ख्यादय सङ्ख्यया ।७७। समाहारेतरेतरयोगयोर्द्वन्द्व ।७८। अद्वरत्नौ पुमि ।७९। परलिङ्गौ द्वन्द्वतत्पुरुषौ ।८०।

इति प्रथम पाद ।

## प्रथमाध्याये द्वितीय पाद ।

प्रत्यय पर ।१। अत स्त्रियामप् ।२। द्विगाद्विश्च ।३। गाद्वा ।४। अधिगरणादिभ्यो डीप् ।५। पुमन्धवापुत्राम ।६। महादिभ्योऽक्षित् ।७। नाम्न सुप् ।८। एकवचनम् ।९। बहुत्वे बहुवचनम ।१०। अनुक्त कर्मणि द्वितीया ।११। कर्तृकरणयोस्तृतीया ।१२। सम्प्रदाने चतुर्थी ।१३। अपादाने पञ्चमी ।१४। कृदन्तेन कर्तृकर्मणो ।१५। तारः वा ।१६। कृन्नाना कर्तरि वा ।१७। अव्ययादियोगेन ।१८। वर्तमाने ताद्वियोगे ।१९। अधिकरणे सप्तमी ।२०। इत्यकृतेस्ना तस्य कर्मणि ।२१। अभिहिते प्रथमा ।२२। आमन्त्रणे च ।२३। कालाध्वनोर्व्याप्यत्वे द्वितीया ।२४। अन्वादिभिर्लक्षणादिषु ।२५। जायादिभि ।२६। आवज्ञाययोश्चतुर्थी च ।२७। सहार्थेन गुणीभूते तृतीया ।२८। इत्थभूतस्य व्यावर्तके ।२९। गोत्रादिभ्योऽभेदे ।३०। पडिवमादीना योगे पञ्चम्यर्थे परमन्तादिभ्यो वा ।३१। द्विकालार्थेभ्य सप्तम्यर्थे ।३२। जतयो समानाधिकरणेभ्यो द्वितीया च ।३३। तादर्थ्ये चतुर्थी ।३४। अनध्वनि गत्यर्थकर्मणि द्वितीया च ।३५। हितादिभिर्वा ।३६। नमआदियोगे ।३७। तुमर्थेनाद्यन्तेभ्य ।३८। कुप्यादिभि सप्तमी ।३९। क्रियार्थक्रियावाचकोपपदस्य तुमन्तस्याप्रयुक्तस्य कर्मणि ।४०। तार्थस्य लोपेऽधिकरणे च पञ्चमी ।४१। अन्यार्थे ।४२। पभित्यादिभि ।४३। हेतौ तृतीया च ।४४। द्वितीयातृतीये च निनादियोगे ।४५। शेषे षष्ठी ।४६। द्विकर्मकशब्दैर्द्वितीयासप्तम्यौ च ।४७। अतुलोपमाभ्या साहश्यार्थैस्तृतीया च ।४८। दूरदिगन्तिकार्थै पञ्चम्यन्यतरस्याम ।४९। सप्तमी क्रियालक्षणक्रियाश्रयात् ।५०। षष्ठी चानादरे ।५१। साम्यादियोगे ।५२। नामाधाधिकरणयोर्दूरान्तिकार्थेभ्यो द्वितीयातृतीयापञ्चम्य ।५३। हेत्वर्थयोगे सर्वा प्रायेण ।५४।

इति द्वितीय पाद ।

## प्रथमाध्याये तृतीय पाद । -

वा तद्धित प्रथमात् कृतसधे ।१। अदणिकेनणिञ्ञ्जणियेयणिमेइकमेत्ता

।२। तदर्हति करोति च ।३। तेन निर्वृत्त क्रीत चरति व्यवहरति जीवति गृह्यते च ।४। तत आगत ।५। मयश्च तस्य विकार ।६। आमादिभ्य प्राचुर्ये ।७। साऽस्मिन् पुण्णमासी सञ्ज्ञायाम् ।८। तस्येदमपत्य समूहो वृत्तिर्व्यापार ।९। अप्पणादिष्वियेज्जियौ ।१०। परात्कीय ।११। रायाणण्णो यस्य विद्धा ।१२। कम्माणकौ ।१३। सगड्या सागड ।१४। वातादोलोली ।१५। तत्र भवोऽधिकृत ।१६। पाईतोण ।१७। दीवादिभ्य इच्च ।१८। उदीईपडीईभ्या णट् ।१९। मज्झान्मश्च ।२०। बहियादिभ्य इरणिमणौ ।२१। तत्र साधुरेज्जणेयणौ ।२२। पासादिल्लक शेते ।२३। इदिणुमन्ताश्च तदस्त्यस्यास्मिन् ।२४। न्त आउसात् ।२५। गोर्मि ।२६। मिण स्त्रियाम् ।२७। हामादित्त ।२८। जयादिभ्य इण ।२९। इलो गन्धादिभ्य ।३०। जडाया उलेलेयाला ।३१। रजादिलस्सलौ ।३२। आलुर्दयादिभ्य ।३३। उश्च लज्जाया वा ।३४। जमादिभ्य सिरसी च ।३५। पम्हादिभ्यो ल ।३६। तत्त्तणा तस्य भाव ।३७। जहातहोऽदियणौ ।३८। अप्पबहो कश्च ।३९। इणो जडादिभ्य ।४०। इयण् इस्सरादिभ्य ।४१। अहिकादिभ्योऽण् ।४२। वियावडादियण् वा ।४३। तेलोकादिभ्य स्वार्थे ।४४। एय सास्मै दीयतेऽस्य देवता ।४५। इतस्तदस्य सजात पत्तादिभ्य ।४६। तस्य पूरणे म ।४७। दुतिभ्या डीयति यति यश्च ण ।४८। दुइज्जात् ।४९। चतोत्स्थ ।५०। सखेज्जात्तितिमौ ।५१।

इति तृतीय पाद ।

## प्रथमाध्याये चतुर्थ पाद ।

अदणौ नक्षत्रेण युक्त काल ।१। वातेनोपहतमीन ।२। उल्लोयल्ग्नाताभ्या न सहते ।३। इत् कितपुव्वादिभ्योऽनेन ।४। भिगोश्च शिष्य ।५। प्रथगायाश्च ।६। द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे तर ।७। धम्मादिभ्य इट्ठ ।८। धन्ने च ।९। पियादिभ्य इज्ज ।१०। सर्वनाम्न पञ्चम्यास्तो ।११। अन्नापि जत्ताभ्याम् ।१२। जपकामाभ्यामाएश्च ।१३। ण्ह च जात् ।१४। तादादोतयश्च ।१५। कम्मादिभ्यश्च ।१६। पर्यभिभ्याञ्च ।१७। जादिभ्य सप्तम्यास्थः ।१८। काहीदहिण-यश्च ।१९। हहमौ चेमात् ।२०। यहोस्तोत्तौ ।२१। सव्वैकान्नन्नतेभ्य काहे च ।२२। ण्हिहुणादाणिम इमात् ।२३। आहेहिंहिहियमश्च कत्तेभ्य ।२४। दाम्निश्च ।२५। मह्वादालयह्लिया ।२६। पोत्तादुल्ल ।२७। सख्याया क्रियाभ्यावृत्तिगणने क्खुत्तो ।२८। पढमादिल्लु ।२९। एक्कादणियाकीयक्ता अमगादे ।३०। अणेयौ स्त्रियाम् ।३१। अभ्युत्तरपदाददीनौ ।३२। करादियोगे अतद्भूतत्वं गम्भियो ईर-भूततद्भावे ।३३। इगालादिभ्यो भोभवयोगे ।३४। छाऊ यतौ ।३५। घादिश्च

सख्यापरिमाणे ।३६। कुम्भादिभ्य प्रमाणे च ।३७। कमादिभ्य मो ।३८। बहल्पार्थात्कारकात् ।३९। एकादिभ्यो वीप्सायाम् ।४०। एकात्सिस्सिमौ काले च ।४१। अनुकम्पादौ क ।४२। सख्याया क्रियाप्रकारे धा ।४३। द्वयोरेकस्य निर्द्धारणे कान्नेकेभ्यस्तर ।४४। बहूना तम ।४५। कन्तेतेभ्य परिमाणे मन्तावतियौ ।४६। जतैतेभ्यस्तियतिलौ चापि ।४७। अनेकमिति विहितात्को वा ।४८। गच्छागच्छादेर्डि ।४९। अड्ढा इज्जाडुड्ढदिवड्ढा सार्द्धद्वयत्रयैकेषु ।५०। करणे यो द्वितीयाया ।५१। उस्सुयादिभ्यो भुवि ।५२। उपमानादाचारे ।५३। कटकादिभ्यो ड ।५४। पसुलादिभ्यो यस्य डेर्वा ।५५।

इति चतुर्थ पाद । इति प्रथमोऽध्याय ।

## अथ द्वितीयाध्याये प्रथम पाद ।

धातो ।१। आज्ञाया भविष्यति वर्तमाने च तिन्तिसिहमिमव ।२। न्तमाणौ ।३। आसईण ।४। भविष्यति स्सहौ त्यादिषु ।५। भुज स्स ।६। अगतौ वच सछौ ।७। वोच्छश्च ।८। उदोज्ज च ।९। लभलहो भ ।१०। मुचमुणश्छिर्वा ।११। प्रवर्त्तनायामेदेज्जौ ।१२। असादिभ्यो या ।१३। गिज्झादा च ।१४। जाणहणो वा ।१५। नेर्ना ।१६। इसुर्भूते ।१७। लभलहइण् वा ।१८। अयादिभ्यस्था ।१९। असइणीणौ ।२०। उत्तमबहुत्वे मोण् ।२१। पुच्छादेर्वा ।२२। डक्खुर्दिस ।२३। वच ई ।२४। भव ईहिम ।२५। मरादेरीय ।२६। मरोऽहीश्च ।२७। होर्डिसि ।२८। बुद् ईत् ।२९। वाक् सिस्यौ ।३०। कर इस्सम् ।३१। वद आसी ।३२। आध क्ख आत ।३३। एज्जात्सिहमिमवो वा ।३४। इज्ज क्वचित् ।३५। अम्हे प्रयुज्यमानेऽपि समानाधिकरणे उत्तम ।३६। तुम्हे मध्यम ।३७। शेषे प्रथम ।३८। प्रेरणायामावेण् ।३९। करोऽवेण् च ।४०। कुप्पभुजोऽण् च ।४१। हाढापावड्ढ आवश्च ।४२। जेश्च प ।४३। वा न्हादिभ्य एण् च ।४४। समादिभ्य ।४५। विसादिभ्योऽण् च ।४६। सरादिभ्योऽयण् ।४७। इतो भूते भावकर्मणोरिलवन्त कर्त्तरि ।४८। असादिभ्यस्तस्तवन्तश्च ।४९। कत्तादिभ्यो वा ।५०। दूम इणेणौ ।५१। मतीच्छाऽर्चार्थेभ्यस्तेतौ वर्तमाने च ।५२। गत्यर्थाकर्मकसिक्त्वादिभ्य कर्त्तरि च ।५३। पीणो डिय ।५४। क्त्वा अणिआणीयतव्वा ।५५। किणादिभ्यो डेतव्व ।५६। गोवादिभ्य प ।५७। धातादिभ्यो णिम ।५८। धगादिभ्य इम ।५९। करादिभ्य इयण् ।६०। करो जचौ च ।६१। दादिभ्य इय ।६२। सदो घो डिय ।६३। नेर्य ।६४। रो डज्जड्ढौ ।६५। अद् गरिहादिभ्य ।६६।

अन्तान्तौ गमादेराम् ।६४। अल् व्यञ्जनादेरेकस्वरात् क्रियासमभिव्याहारे ।६५। दमादिभ्योऽणिय ।६६।

इति द्वितीय पाद ।

## द्वितीयाध्याये तृतीय पादः ।

छिय सासो ऐन्तमाणयोर्वा ।१। बीहो भय ।२। भास्तव्वे ।३। मल्ह मघ ।४। हुणो हर ।५। मज्ज सग ।६। क्विस्र प ।७। हणो मो वा ।८। वधा झ ।९। त्थुणूधुणसुणा व ।१०। डहादीना झ ।११। विदो ज ।१२। सिच क ।१३। स्वरस्य करादीनामी ।१४। जिणश्च ।१५। वहो वोज्झ ।१६। गिण्हो घेप ।१७। वचो वुचस्ते च ।१८। धरिसो धाम ।१९। सम खुभो हो वा ।२०। जुजो ग ।२१। अणि पच क ।२२। वेर्मिंच ।२३। रुजादीना गः ।२४। दिसो दक्खो गौ ।२५। मुसो मरिमछेदनयो ।२६। वेमंम ।२७। फास फरिसो वा ।२८। इमे लुणो ल ।२९। उदोपडिभ्यो मो मिणो ञो ।३०। न्ते परे।३१। निन्धो नित्तुणे ।३२। तूण आदेर्ध ।३३। गोर फोऽदणनेषु वा ।३४। टे किणादीनामय् ।३५। वा ठिन्द न्दस्तिन्तिपरयोरसेसो ।३६। च्छह इते ।३७। गिज्झो गढ ।३८। वा वस उस् ।३९। अभेरज्जोऽत इत् ।४०। सुण सोरनिटि तव्वे ।४१। वहष्टेरोत् ।४२। थोम्त्थुणोऽति च ।४३। सम उमि ।४४। नेर्जुंजो यो य ।४५। आवेणि दो दर ।४६। आदणिज्जयो सल्ह सिलाहसलाहौ ।४७। आति पाद् व्जयो ज्ज ।४८। उदो मज्जोऽत उद्दा ।४९। च्छुभस्तुमतूणयोर्भतयोढ ।५०। हणश्च घो ।५१। वा भमो डो ह्रस्व आवेण उपथाया ।५२। न्हा ण ।५३। ऊर्जि सयसदो ।५४। उद कमस्तौ ।५५। शनोरात माम ।५६। आत कर ।५७। धगादीनाम ।५८। निगोवर उत् ।५९। बीभत्थस्य छो वा ।६०। उडजस्य व ।६१। एतस्य वत्तिये ।६२। मिलेच्छस्स सु ।६३। परिवारस्य र ।६४। अहेरत्तस्य ठथौ ।६५। परिवाज्या ड ।६६। मणाशावस्य म ।६७। ति पदस्य न ।६८। पत्तेरौद्धि ।६९। पयात्यादीनामदणो ।७०। वा कुतूहलादीनाम् ।७१। पणस्योत्तरपदे ।७२। जहातहश्चाति ।७३। दोस्ति यनीययोर्ज्न ।७४। पयडयोंऽणि ।७५। दूतादीना च ।७६। थेगदीनां ज ।७७। उत्येतनयोरक्षीचे म ।७८। इणमादीनामेवे दीर्घो वा ।७९। छुक्सादीना ह ।८०। इयस्य पेक्खादिभ्यो यस्यैत् ।८१। आत पेसादेश्चादित ।८२। पेक्खित्यिच द ।८३। यत्तोऽत इत्तौ ।८४। वरसो वुस ।८५। ओ समो

परस्तेनयो ।८६। पाक्लिसन्नइन्ठ प्रेरणार्थे वा ।८७। इणि च सुझ सुठ ।८८। इतानभावेषु क्रुप कुप ।८९। गत्त इते च रन ।९०। रुहो व ।९१। अभि-वदो वाय् ।९२। वा वड्ढो धोऽनमाणयोश्च ।९३। जोय् ज्झाम ।९४। क्रिट्टादि-भ्यस्तसनयोर्यो वा ।९५। अनिटस्तण प ।९६। गेहो गिज्झ औ ।९७। सुन सा ।९८। ये चयश्चक ।९९। पत्त पये गि ।१००। ञयो व ।१०१। वीहा भिम ।१०२। भायभीयौ तौ वा ।१०३। उज्जो योऽने वा व ।१०४। अना-दूमो वस ।१०५। परेस्स ।१०६। वेरिक्त इतो य ।१०७। उ पारुं वरो वा ।१०८। आणुपेभ्यो मिलो ञ ।१०९। रज्जो रग ।११०। न्ते वा ।१११। जयो वो जयेऽक्णि ।११२। सुण सय ।११३। वेलुंपो लो वा ।११४। अहेरुवादणि पत्त पय ।११५। पियादीना पादिरिज्जे ।११६। लीयो लेर्वा ।११७। उपसर्गाह्लिन्तौ ।११८। नेर्न्लेज्जयोर्ली साम ।११९। मिर सम्गोऽदितो ।१२०। आत क्विप क्सयोर्ह ।१२१। अक्णि णणान्णिज्जाणीयप्रेरणार्थेषु बुज्झादेर्जझयो ।१२२। पादद्धम से दधयो ।१२३। अनिटोरमूणयो मो ।१२४। त्थुणस्थयोऽणादवेषु ।१२५। लिंपो लेरोऽडाक्रुयो ।१२६। नेगदावेणि वा ।१२७। सुणहुणो सनह्वावने ।१२८। गमो गा अनि ।१२९। इणणो-र्जुंजो जुग ।१३०। नेर्न्हयो ण्होऽक्ते ।१३१। इणुतारयोर्वरसो वास ।१३२। उमि वा ।१३३। रज्नो रग ।१३४। क्रमादिभ्यस्तस्तुर्वा ।१३५। गमादिभ्यस्तु-मऽनिट् ।१३६। डक्ताण्णादाभ्यश्वा ।१३७। वयादिभ्य सेटो वा ।१३८। समे-पेहाभ्यदघश्च ।१३९। मुज्झो मोहोऽतव्वे क्रुति ।१४०। सोचो गो वाऽणतो ।१४१। दिसोऽदितस्तुमूतूणतव्वतारेषु ।१४२। घातो घन्तुन्वो ।१४३। एस्तारे क्रिग्निणोष्टे ।१४४। ल्भस्तुमूतूणयोस्तस्य ध ।१४५। बुज्झस्तव्वस्य ।१४६। वहो ढ ।१४७। ढिमस्तुमूतूणतव्वतागणा ठ ।१४८। ह्योरिव्वस्तव्वस्य ।१४९। वेर्धुणो धूय सेयस्य ।१५०। अणोश्वितश्चीति ।१५१। मनस्तिमम् वा ।१५२। दिस्-पाभुजल्भुवचा स्वार्थेच्छाया दिदिक्सापिवासाबुभुक्सालिच्छाविवक्सा ।१५३।

इति तृतीय पाद ।

## द्वितीयाध्याये चतुर्थ पाद ।

इसादिभ्यष्ठ आदेस्तनन्तयो ।१। इधादिभ्यो ध ।२। आरभो वा ।३। छद क्सो वामलेपौ ।४। गसो घ ।५। गाहान्भ्यो ढ ।६। वस उस् ।७। भजादिभ्यो ग ।८। उन्निरोभ्य सरो डढौ ।९। चुकादिभ्य क ।१०। फुमा दिभ्यो ड ।११। किरादिभ्यो न ।१२। वयोऽतट् ।१३। करादिभ्यो वा ।१४।

आतो दिहृदीत्रोर्ले ।१५। ज्झामो म ।१६। मुचादिभ्यो ज ।१७। होवेरू ।१८। आनो रभो ढन् ।१९। निर पुन्छ उनोऽग ।२०। आत क्लो घा ।२१। आनिभ्यांमिदीतौ ग ।२२। त्थरो वेदिन्ढ्द् ।२३। धुणो दीर्घ ।२४। रुहादीनामादे ।२५। गाहो री ।२६। दा दिहनौ ।२७। जहो ज ।२८। वह उह् ।२९। भरो हु ।३०। धीहो भी ।३१। फासुनस्सुहरिसा पुर्वुर्हिम ।३२। मुज्पुप्पोर्मूप्पू ।३३। वे कमोऽत ड ।३४। उ ध्रमादीना वहुलम् ।३५। चरादीनामिरुप ग्याया ।३६। दि-सिरोरहा ।३७। भवुसवृहनामूत्तौ टे ।३८। वड्ढोऽत उत् ।३९। अभेस्ति ।४०। नेस्ततिमाणेपु च ।४१। इम्योभव ।४२। इश्चय आगे ।४३। कर इये ।४४। वियाभ्या कगा हा ।४५। व्युद्रया सिर मम ।४६। इर्वेदिचन्त्विचरत्तौ च वा ।४७। उपसर्गाद् गिण्हो गिज्झो माणपरेऽति च ।४८। घेत्तुमतूणतव्वेपु ।४९। आत क्लो घवो वा ।५०। त्यादौ घमोऽणित ।५१। लुभादिभ्याऽणिज्झाणीयौ ।५२। इदुदुपधात्तादिरत ।५३। सकुचादिभ्योऽनातौ ।५४। आविभ्या किवगा गाऽन ।५५। अहेर्ह्रे औ ।५६। ओ पाओ करकरणयो ।५७। अभेर्जो ग ।५८। पान्मुचावे सस्सस्य मुक्ख ।५९। उत्सात्कर क्खड पाकमस्कारयो ।६०। पुरेस्सतस्य ना ।६१। अदौ स्मपरे वे ।६२। तद्धितेपु स्वरादिर्द्विहुलम् ।६३। जाणादेस्सिम्योर्वा ।६४। योजने जोयो डताविलेनन्तयो ।६५। पाजुञ्जल उलो वा ।६६। सविभ्या त्थरो ड ।६७। आतोऽके थस्य न्ठ ।६८। ग्वादीना ह्रस्व ।६९। जेमागीनाम् ।७०। आन्मन्तस्य न आदे ।७१। जमादिभ्या वा ।७२। णिति निरोयणादीनाम इ ।७३। ने क्मो घ ।७४। उदस्थभ खाऽदनयो ।७५। आतो दीर्घो लोऽकाणयो ।७६। पात्थवर्त्तनायाम् ।७७। अत्राद्य इक्प ।७८। उदीर्तेत्मोभ इसोरत्त ।७९। जाणा ग ।८०। ममा ह्रो घ इते ।८१। इघो ढधौ ते ।८२। बुज्यादिभ्यो घ ।८३। कमृचिणृतपज्जा द्वितीय ।८४। उज्झादग्ये च स्वस्य ।८५। कमादिभ्यष्ठ ।८६। मणियमश्चग्ङ्छो ना ।८७। इणि पाद् गो ट्ट ।८८। ओतो घट्टोऽफणि ह ।८९। डेज्जेहो ध ।९०। मदो घो ढो डिये ।९१। जानस्य योऽकणि ।९२। लव पोऽलि ।९३। उत्सात्कायको करोऽति वा ।९४। निपाभ्या डस्ते ।९५। आतो दह ।९६। निपरिभ्यामदितोश्रिणो ज ।९७। आविभ्या वट्ट उट्ट ।९८। उदातो हडो हु ।९९। वे किपर निर ।१००। दोहेहस्य त्थ ।१०१। ओदुदोभ्या वस आकपणे ।१०२। रक्खहणहुपुमम सा ।१०३। वे परेश्वासे ।१०४। वेरात ओड् डपरके नरि ।१०५।

इति चतुर्थ पाद । इति द्वितीयोऽध्याय ।

# अथ तृतीयाध्याये प्रथमः पादः ।

नमादे रस इन्मवि वा ।१। समश्चिट्ट स ।२। त्तिनेर्जमो यच्छ ।३। हौज्जेरात्प ।४। व्ययो वर्तमाने वसो वा ।५। माणपरेऽसि वा दिसो ह ।६। कदो व ।७। विप्पात्रमो वोन्तिपरे ।८। ने सियसीयोर्वेज्ज प्रेरणायाश्च ।९। त्तएप्रवर्त्तनापरयो पठ पिव ।१०। त्ताणिज्जा वा वेपु च ।११। ग्घो जिग्घो वर्त्तमानेऽसि वा ।१२। विज्जोर्विजुयो ये ।१३। पसुलस्य पस ।१४। ज्ने करादीना मि स्वरस्य ।१५। ह्येन्न्तपरे ज्जयि प ।१६। ये ह परेर्नन्तमाण परे ।१७। गाधाहा ।१८। हवो डु ।१९। पडिपतिपरिभ्य एर्यस्त्यादौ ।२०। घेच्छम्येतौ वा ।२१। आतो रभो ढत्त साप ।२२। पादा व ससित प्पौ ।२३। हौ नेरात् ।२४। अत्पवेस्तौ ।२५। तिन्तिमिहमिमो ह्येदेज्जाना तारेंसुत्तुष्वय ।२६। कर कास्त्यादिहियास्ससिस्सुमूणतव्वेपु ।२७। से सो ब्रुव आहस्तिन्त्योर्वर्तमाने ।२८। ब्रुवरितन्तिसिमिन्तमाणेपु ।२९। न्तावो रुव ।३०। वे क्रिणक्कणे ।३१। अस्यस्सी समे रस ।३२। गिण्हगेण्हो सस्सयो घेत्तसयोर्घेच्छ ।३३। दिस प्रेक्षणे सस्स हेदेच्छि ।३४। वहो वोज्झ इहौ ।३५। पतावे ताड्ताळो सेस्वो ।३६। आतो भिदो व्भ एति ।३७। लुण एज्जे य ।३८। ई कादीना स्वरस्य चि ।३९। एज्जे तयो सिर सावि उभ्याम् ।४०। वध ओ इच्छेऽत ।४१। आहएज्जेतासु क्खो वहुलम् ।४२। अस एर्वाहेऽच्छादे ।४३। पुत करो डोन्ते ।४४। परेर्धो डिस्तौ ।४५। सिण ओमौं वा ।४६। आज्ञायामात स्सस साणेण स्सा ।४७। तिन्त्योरु सेहिं ।४८। कुणादिभ्य से सुर्वा ।४९। अहिट्ठोऽसो डिरेति ।५०। नयस्यैहं ।५१। अल कुरादे ।५२। उत्तो डिडीभ्यामेसो डाढौ ।५३। डियोऽने ।५४। मादौ हेर ।५५। हो स्सस्य क्ख ।५६। यस्य विउसास्सड् ।५७। हरो त्तएस्यादौ वा ।५८। अच्छादिभ्य सस्सस्य मेरम् ।५९। लभ लह सस्स हेर्हस्य त्थ ।६०। न्ते रुड सुडा वाहात् ।६१। भावप्रत्ययात्लभ एर्वा ।६२। जिणादे देज्जयोर्मा ।६३। वायेच्छा न्मेर्डी ।६४। अनो रेसए तइम् ।६५। अच्छादे रसस्तेरे ।६६। भासादिभ्य से ।६७। मन्नो मेरे ।६८। न्ते रारभ ।६९। समादेर्हे ।७०। चिणो डु ।७१। हत्साहो हि सो ।७२। पादिक्खदछो वा ।७३। उवाच्चे ह ।७४। पडेर्माणे च्छ खस्य ।७५। वईत ऊत् ।७६। अहे रेर्य आवेणि न्ति परे ।७७। पादिघस्त्यादौ ।७८। अयने ।७९। अत्यभिप्पाभ्यामति ।८०। उवातिपडिभ्यस्तश्च ।८१। अतिपडिभ्या यश्च्चे ।८२। अत सयो जे ।८३। पेर्धि वा ।८४। क्खिवादीना पोऽपि ।८५। गिण्हो

गिज्झ ।८६। परिक्षयुविउसिरोर्जे ।८७। जयो जिद्व ।८८। ए पाद्सि एद्वा ।८९। पवे सव सुरित्ति ।९०।

इति प्रथम पाद ।

## तृतीयाध्याये द्वितीय' पादः ।

नाम्नो नपुसके ह्रस्व ।१। छौ मुचूसुणोर्वृद्धि ।२। भुज दे ।३। दुहादीनामति ।४। आतस्तु ड इज्जे ।५। दूस इणेणयो ।६। एस्तारे ।७। एरितसिमिपु वा ।८। गलादीनामावेणि ।९। मुचोऽसेसो ।१०। आतो हर ।११। णुगादे करादे ।१२। रुदोऽसि ।१३। दिसो हश्च प्रेक्षणे ।१४। करिसो णिति न ।१५। न मादीना प्रेरणार्थे ।१६। ह्रस्वोपधाया णिति ।१७। स्वराणामादे ।१८। आति तिगिच्छो वा ।१९। निरोभ्य वा नूदराणाम् ।२०। एरावति यस्य कात् ।२१। समानयो पूर्वस्य सवर्ण ।२२। अहे व्यञ्जनस्य परस्य ।२३। तरहेभ्यश्चजझा इदुतोरसवर्णे स्वरे ।२४। पूर्व एक पूर्वपरयो ।२५। ओत उदिहीहिंतविसुपु ।२६। वेरीरियेने ।२७। ईर्वेरतौ वा ।२८। च्वे पडे रुदौ ।२९। वृद्धिरत स्वरे परस्य सवर्ण ।३०। अदिदुत सवर्णे दीर्घ ।३१। आदिदुद्वय स्वरे सुपि पूर्वस्य ।३२। एरने ।३३। एसिहमोहियापरे वुव ।३४। छवेरिये ।३५। अजिनस्येतोऽणि ।३६। णित्योर्नाम्न ।३७। पङ्कादीना सज्ञायामन्ते ।३८। हिमिमोप्यव ।३९। मिलो ये ।४०। अम्हादेर्दिसे ।४१। नाम्न करोत्यार्थे ये ।४२। दो रहो वा ।४३। खुड्डस्य के ।४४। रडादीनामुत्तरपदे ।४५। चतोरत ।४६। षडेरत ण्के समासे ।४७। असो देरादिभ्यस्ते ।४८। जाणादेरितस्यो ।४९। तरस्य के ।५०। अङ्गादीना मये ।५१। तरादिभ्य इट उमि ।५२। पस्य देज्जदाऊणवट्टिसवणेपु ।५३। गाह इत ।५४। पान्नयि वे ।५५। सग्गादेरसो ह्रस्व ।५६। आज्ञाया रमादेरसो हे ।५७। एजस्य ।५८।

इति द्वितीय पाद ।

## तृतीयाध्याये तृतीय पाद ।

आदीदूता ह्रस्वो बहुल मि ।१। सयुक्ते ।२। के ।३। एति द ।४। जोयस्तौ ।५। निरो जो वा ।६। तवि दुह ।७। एकादेशस्य जादीनामावेणि ।८। एज्जपरे ज्झाम एणि वा ।९। लोल स्से ।१०। इति सद्द्वाया ।११। ऊत कुतूहलस्स ।१२। दयादीना पत्तादावुत्तरपदे ।१३। ईतो बीभत्थस्य ।१४। धोव एत्परयोरसेसो ।१५। अधादेर्मो क्वचित् ।१६। आतो जुवाणस्य वन्य द्विर्वाणि ।१७। आभीक्ष्ण्यवीप्सयो पदस्य ।१८। धातोरलि ।१९। तत्र परस्याकुगादे ।२०। अरे बहुलम्

।२१। गमादीनामनि भावकर्मणो ।२२। चुन ओरीलचो यस्य ।२३। लस्य क्वचित ।२४। धमो माणे ।२५। पामादीनामनभिन्नमपि ।२६। गमादीनामति त्यादौ ।२७। आपि दिम ।२८। घउञाभ्या पस्यादे ।२९। इमजतवेभ्यस्तोर्वा ।३०। तुमादीनामसेसो ।३१। जहातद्दलग्घेयणि ।३२। उद् पसोऽदणो ।३३। वेहन ।३४। उजादेर्मणे ।३५। अवाद्याल क्षादे ।३६। वेउप्रभृते कायादीनाम् ।३७। अवात् कमोऽणि ।३८। पात् विर ।३९। आत मन इणि ।४०। जताभ्या तियस्य ।४१। इ किरणादीना मध्यस्य स्वरस्य ।४२। मुरभिदुरभ्योर्लोप ।४३। ओस्तबूलस्य ।४४। कारेह्लस्येय ।४५। अभिक्खिमलादीनाम् ।४६। अदणो रुतोऽव् ।४७। आगन्तारागारस्यागन्तारो वा ।४८। सुकुमारस्य सुगमलेऽणि ।४९। मिलेच्छस्य मेच्छ ।५०। ग्लोऽदुतौ ।५१। महट्टस्य मरहट्ठ ।५२। तत्थस्य तह ।५३। गिम्हस्य घिंसु ।५४। गिहस्य गहघरहग ।५५। पउमस्य पोम्म ।५६। णिन्वेवस्य तिय ।५७। मत्तिये तोप्टौ ।५८। पज्जाये ज्ञायस्य रियाग ।५९। उमिणपमिणयो सिणस्य ण्ह ।६०। अनादेरसयुक्तस्य कस्य ग ।६१। पज्जादीना पोर ।६२। वहुल गचजतदयवाना य ।६३। रुधिरादीना धमयोर्हो वा ।६४। इराढो येज्जयोर्माणपरयो ।६५। रेत्तस्यादद्दछ ।६६। अभ्यासे कवर्गस्य चवर्गो हस्य च ज ।६७। विहवणाभ्या पत फसौ ।६८। वादस्स' क्वचित् ।६९। आदणाद्दारपारादेर्वा ।७०। असौ पस्य फ ।७१। रिऊओ ।७२। यजोर्जे ।७३। निरो जरइसोरे ।७४। उदियस्य नायस्य ।७५। नेर्घातो ह ।७६। अर्द्धटगुरययो स्वरस्य ।७७। इर्नगिणस्य ।७८। ओल्लुतूहलस्य ।७९। अणि कलुणस्यौत् ।८०।

इति तृतीय पाद ।

## तृतीयाध्याये चतुर्थ पाद ।

म्नोरनुस्वारोऽवसानव्यञ्जनयो ।१। स्वरे वा ।२। तस्य स्पर्शेषु तद्वर्गपञ्चम ।३। उद सञ्ज्ञो वा ।४। उओरन्त्यस्य इदुया ।५। दोहो घ ।६। असुपि स्वरादौ पादस्य पद ।७। इ क्रियाविशेषणत्वे पुव्वस्य वा ।८। इज्जेसयोरन्त्यादायो ।९। तिथ भरथस्य ठ ।१०। आलिसिंदस्य सेरत् ।११। विच्छियस्य चस्य म ।१२। उसियस्य ।१३। परिहे प फ ।१४। नो ण ।१५। आतपादीना पो व ।१६। अन्सेलेंसे ।१७। सो द्वि ।१८। वज्जादीना वस्यो ।१९। स्वादौ नस्य प्रकृतिभावो वहुलम् ।२०। स्वरयोरव्यवधाने ।२१। कोडवादीना डो ल ।२२। पोक्खरादीना र ।२३। लोपोऽन्यतरस्य ।२४। स्वरायस्य स्वरे ।२५। कात्तियस्यै-

चतिये चिरे ।२६। एतकाभ्या तियस्य वतियस्य चोत्तरपदे ।२७। छुहाया ।२८। व्यञ्जनादौ नस्यादे ।२९। अक्रमादेरभ्यामस्य तत्र वृद्धि ।३०। येन्तिन्तमाण-परेऽस्यतो नित्यम् ।३१। ए प्रत्ययस्येस्विडे देज्जेज्जेतेपु ।३२। एरेदेज्जयो ।३३। इमभृतिभ्योऽसेसो ।३४। सिद्दमिमुमोप्वस ।३५। एसिट्टिपरे पोवाभ्या मिह ।३६। इवर्णोवर्णयोरेसि ।३७। आहात् ते ।३८। एणि नरस ।३९। त्थुणादीना ततवन्तयो ।४०। रज्जोऽणि ।४१। उतोऽत्तारादारस्यामन्त्रणे ।४२। अदितो पञ्चादिभ्य ।४३। सरया ते ।४४। च्चेजादिभ्य ओ ।४५। अव्ययात्सुप ।४६। धातुनाम्नो ।४७। तौ रमादीना ।४८। आनिपेभ्य कर ।४९। आतो जस्य पञ्जो वा ।५०। तीपित्तस्य ।५१। इत ।५२। मोल्यादिभ्य इत ।५३। उणे निरो जिणष्टे ।५४। पलोट्ट आदेस्ततवन्तयो ।५५। परे फोम ।५६। मिमो तुम्हस्य हस्य ।५७। एज्जपरके ऽसिरज्जो वा ।५८। वेज्झामस्तु परेऽसि ।५९। समो मुच्छारभ्रप्सु ।६०। अतो तो त ।६१। हे ।६२। एणयोरेज्जकुणो ।६३। चक्खवोच्छदाहघेच्छेभ्यो मे ।६४। अच्छादिभ्य स्सात् ।६५। इल्लोरस्सि-लेसयो ।६६। सोतोरस्य तारस्य ।६७। इदुद्धयामामन्त्रण उत ।६८। नाम्न क्लीवे नित्य ।६९। एतताभ्या पुसि वा ।७०। इमस्य दाणिमि सर्वस्य ।७१। अप्पावह्नादिभ्यो भावस्य ।७२। एकस्योने ।७३। सरिसस्य तयावयवो ।७४। तुसुमो काममणयो ।७५। आगन्तारस्यारस्यागार उत्तरपदे ।७६। पादस्य दस्य मूले ।७७। ट्ट उदो ऽने ।७८। जह्णोऽसणिज्जयो ।७९। सत्ताउणाभ्या सत्तरे सस्य ।८०। जोयसीदोत्लन्ने ।८१। एतस्य तियत्तिलयो ।८२। अनुकरण-धवलादिभ्यो यस्य बहुलम् ।८३।

इति चतुर्थ पाद ।

## अथ चतुर्थाध्याये प्रथम पाद ।

विसेसादिभ्यश्च ।१। चोरवणिग्भ्यामिज्जस्यादे ।२। वमादिभ्योऽनिटस्स ।३। अणतादिभ्य क्खुतो ।४। छियस्ते ।५। किमेरिणस्य ।६। आतोन्नवो नित्यम् ।७। मगवादपस्य गुरुगुणो ।८। निर क्रम ।९। न्तस्यासुसो ।१०। सिस्सा-दिपु सयुक्तस्य वा तस्मिन् पूर्वस्य दीर्घ ।११। त्रयाणाम् ।१२। अपूर्वस्य ।१३। सम सयुक्तस्य ।१४। इहीहिंतविसूना द्वादिभ्य स्वरस्य ।१५। उववरस्य वा ।१६। पुडपुरयोरुत्तरपदयो ।१७। कादिमस्य दे ।१८। इदुदेदोत एज्जेज्जयो ।१९। बुसदह्रो माणस्य ।२०। अभेद्धस ।२१। उदो ज ।२२। अत्तप्पवाना प ।२३। उपसर्गाद् व्वयो बहुलम् ।२४। इह्यएदओदिहिंतोऽणेपु न्तस्य ।२५। हिति टे

।२६। घरादीनामितेतवन्तयोर्वा ।२७। आतश्छिद एतपरयो असेसो ।२८। समुद्दो हिंति तो ।२९। निरः ग्गा इहेदादौ ।३०। उम्ने: क्विप्व स्से ।३१। इज्जे ग्गो वा ।३२। पयावल्यादीनां णि ।३३। इमात्मन्धौ प्रथमाया ।३४। एयारुवे वा ।३५। उदण्परादौ मनम्या ।३६। पसमओ इरेत्यादौ पष्ठ्या ।३७। अतो अव्ययीभावात्सुप ।३८। अनुस्वारस्य णमि वा ।३९। उपसर्गाद्रमरित्त ।४०। न्ते ।४१। सम कुचोऽणितयो ।४२। भुजादीनामदणनेषु ।४३। भुजो त्सादौ ।४४। लिपुञ्छिदोग्ने ।४५। ह्रसो थाऽसि ।४६। पयक्यो माणपरे ।४७। द्वाहे ।४८। एत्ति परेऽन्ते समो घ ।४९। आतो न्गग इतेतवन्तयो ।५०। असरितुमिसिद्दमुमोयात्त्वम ।५१। तितित्तेषु ह्तो वा ।५२। अत्थमादिभ्योन्ते ।५३। अति वत्तुहृद्दहामक् ।५४। अज्झोऽणवृत्ति ।५५। स्वरादस्य यद्बहुलम् ।५६। क्वो य सिद् ।५७। भूते पाप्रभृतीनामद् ।५८। नमा योगे ।५९। इम्योर्मय ।६०। पतेर्यागित्ति ।६१। आलोपात्ममो धोऽसत्तौ वा ।६२। कुरादेरगभ्यासस्य ।६३। आतो यगण्णि ।६४। गोवद्दलयोर्माणे ।६५। अणतरे जतयो ।६६। छुभादिभ्यस्तद्गुणस्य ।६७। गमिगिण्हच्छिद्भिद्यो वा ।६८। वधादिभ्य उम ।६९। ए परे तस्य ।७०। न्तमाणयोगतोऽन्तर् ।७१।

इति प्रथम पाद ।

## चतुर्थाध्याये द्वितीय पाद ।

उवाद्वत्ते ।१। ध्रुव आवेणो याद् ।२। उवादय इत्तपरिणद्दा ।३। घणोर्हव्वक्लकौ ।४। इमस्य मोर्णद् ।५। तक्खादिभ्यो णङ्णमको च ।६। दोवग्दमे ।७। चक्खोरतः मद् ।८। मणादिभ्यो ईस सुद् ।९। रडातो गमि क्वचित् ।१०। इतद्गच्छादिभ्यस्तारस्य ।११। जणूजागमर्ग्यामइतङ्घा ।१२। उणस्य वा मव् ।१३। इणाणेहीसीसूना ।१४। आदुपोवेभ्यो लभ ।१५। लभोऽति ।१६। सासस्य मौ ।१७। मौ व्यञ्जनादौ नाम्न ।१८। वेर्वा ।१९। जहझादीनामणुकोसादिषु ।२०। जसादीना सौ ।२१। अवस्य गुये ।२२। तित्थादीना कगादिषु बहुलम् ।२३। तारादिषु भयादे ।२४। रसादीनामिद् ।२५। इकानेग्राहोभ्यो न ।२६। असूचयुजाणहणो य ।२७। लक्खादिभ्यो यस्य ।२८। वेर्नेरत् त्तो ।२९। भणस्ते ।३०। त्तएत्तोर्याप ।३१। सुण उमूणयो ।३२। भिदादिभ्यस्त ।३३। भुजूवसस्ताए ।३४। गिव्हिसयादिभ्यस्तव्वस्य ।३५। नपरेश्वयः ।३६। क्रिणादिभ्य उम ३७। निरश्चिणउमूणयोर्णस्य च लोप ।३८। द ।३९। गमादिभ्यस्तव्वस्य ।४०। उदश्चिणस्च ।४१। जादिभ्यो हेः ।४२। उद्धरस्तोः ।४३। वधादिभ्यो हेरेद ।४४।

यङ्खादिभ्य. स्सस्य ।४५। अज्ञादिभ्यस्त्त ।४६। पादेर्मोद्गमाणानाम् ।४७। पलाय उम ।४८। गिण्हादिभ्य ।४९। उवदसादिभ्यस्तए ।५०। गहादिभ्य ऊणस्य ।५१। पच्चक्खादिभ्यस्तव्यस्य ।५२। यज्ञादिभ्यो वा ।५३। किण उमो डेट् ।५४। डीपोन्तात्तुट् ।५५। महाष ।५६। भिक्खादिभ्यो णुट् ।५७। इदादिभ्य आनुट् ।५८। णे पाईत ईतो दड्वा ।५९। तण्यांकृ ।६०। कान्मन्तस्यैयाट् ।६१। तादेर्डु-गुत्तरपदे ।६२।

इति द्वितीय पाद ।

## चतुर्थाध्याये तृतीय पाद ।

मेरिरतो नाम्नो वा ।१। इदुत पुसि ।२। छीनान्मो वा ।३। पितुमभृतिभ्यो डा ।४। अतो डरो ।५। ण स्सस्य वा ।६। मोडरम ।७। उत आमन्त्रणे डञ्च ।८। अत्पुमि याऽत्त ।९। आतो डे ।१०। अम्माया डो ।११। ईदूद्भ्या डिङ्ख ।१२। रायादिभ्यो डम् ।१३। वीसादिभ्य ।१४। ओरायादिभ्य ।१५। सेणस्य रन्ना ।१६। इह्वाणयोरि ।१७। मस्मस्य रन्नो ।१८। उस्तारस्यारस्य तृतीयादौ वा ।१९। मिणा एदतोत्स्ममिपु गोर्गव ।२०। अणस्य डणम् ।२१। ओदिह्वाणेहिं-तथिसुपुदो ।२२। सादिदणस्य भवन्तस्य भेर्वा ।२३। इमस्य सोत पुस्ययम् ।२४। स्त्रियामियम् ।२५। अय सौ ।२६। मस्य णो मि ।२७। अस्त्रियामिणेऽण ।२८। स्सिस्सयोर ।२९। अएत स्सो नाम्न ।३०। अतोऽएदतोतोरयाही क्वचिन् ।३१। सि ।३२। कादिर्हिंतोरितो डओ ।३३। णीपी दत ।३४। सादित-ञ्चत्तारि चतोर्निलम् ।३५। रोरदितोर्वा ।३६। अणोरायादिभ्य ।३७। डेरि-मास्त्रियाम् ।३८। डावोर्गो ।३९। डयो ।४०। डोर्दो ।४१। तेर्ण्णिर्वा ।४२। वेडोण्णी प्रत्येकम् ।४३। णिती छीबात् ।४४। उस्ताराद्वा ।४५। न्तमन्तयोर्न्तात् ।४६। इणस्सयोरसुसौ ।४७। न्तस्य सोन्मस्य म ।४८। इदुद्भ्या णोरदितो ।४९। अएदतोत्स्मानामस्त्रियाम ।५०। अतो डयो डयो डौ पुसि ।५१। अस्त्रियामिणस्य णा ।५२। अत्ताप्पाभ्याम् ।५३। स्सस्य णो ।५४। सान्तादिणस्या ।५५। अतो-त्तसयोरो ।५६। यह्योरवेडतो या पुसि ।५७। इ सव्वणामात् ।५८। से सिंस वा ।५९। सिमातोऽणस्य ।६०। अणस्येसिरस्त्रियाम् ।६१। जतक्केभ्योऽतो तो वाम्हा ।६२। स्सस्य डीए: स्त्रियामिमात् ।६३। मेर्डीसाए क्वचिद् ।६४। अट्ठादण्तोऽस् ।६५। इणे जातयोरि ।६६। यम्मधम्मयोर ।६७। अएस्समीना जाकातेमा-भ्यो डीसे ।६८। इणातोत्स्सेपु जसादीना सक् ।६९। अदितो रोगादिदुद्भ्य' स्त्रिया वा ।७०। इणस्समीनामए ।७१। तस्य सस्सस्य से ।७२। डमव्ययी-

भावादत्त सुप ।७३। तृतीयासप्तम्योर्वा ।७४। पञ्चम्या न ।७५। अम्हस्य इम-इमौ सौत ।७६। समो मेममममम्म ।७७। मेणस्य मेमएमया ।७८। सस्सस्य मेममममज्झमहमोमज्झा ।७९। सातोतो ममाओममाहिंतावौ ।८०। मौ ममम् ।८१। या सातो वयम् ।८२। सेतो नेनावौ ।८३। सेहेर्ने ।८४। अम्ह साणस्य ।८५। नेनत्रस्साकम ।८६। मम्हि मसे ।८७। सोतस्तुम्हस्य ततुमे-तुमम ।८८। बहुवचनेषु तुब्भतुज्झौ वा ।८९। ममस्ते ।९०। अणस्य म ।९१। सेणस्य तुमे ।९२। सस्सस्य तेतवतुज्झतुमतुहतुब्भतुज्झा ।९३। सातो-वत्तु माहिंतो ।९४। मोऽणङ्गयादिभ्यो वा ।९५।

इति तृतीय पाद ।

## चतुर्थाध्याये चतुर्थः पाद ।

उत्तरपदस्याच्छेर ।१। अह्रादिभ्योरत्ते ।२। राणश्च ।३। चत्तालीसस्य तालतालीतालीसा ।४। सख्याया अणस्य ण्ह ।५। इ सात्पक्तस्य वा ।६। आणात्पाणस्योत् ।७। आमो सादो सद्देर्हि ।८। रुधादावारस्यारवारौ ।९। अधोरवधेर्धि ।१०। नाजूजिण्णस्य जीरजीरगजीरणा ।११। नरुपदस्य नप्फय सात् ।१२। अट्ठाभ्या रो दसस्य ।१३। एकादिभ्यो र आदे ।१४। सत्त-रेश्चोबातेछाभ्य सत्ताद्वाभ्या च वहौ ।१५। सट्ठेर्वा ।१६। ट्ठि पणात् ।१७। तुम्हादेर्दिसस्य दस्य र ।१८। क्त एस सस्य ।१९। समानाच्छ ।२०। सव्वा-दिभ्योऽह्रस्याण्ह ।२१। तस्य सात्थ ।२२। ओज्जसादीनामुत्तरपदे वा ।२३। को कोभौ व्यञ्जनादौ ।२४। स्वरादौ कत् ।२५। उपगमणे पायवस्य पापावौ वा ।२६। चरेऽह्रेरा ।२७। सणियम सणिम् ।२८। स्वरादौ नस्यान् ।२९। दिसे क्स्ये-देतौ ।३०। एरिमस्य वा ।३१। एत् ।३२। पित्रादीनामि ।३३। ईरुद्धस्य मुहे ।३४। उत्तेजस्य ।३५। तमस्यो काये ।३६। सहसमानयो स ।३७। एकार्थकस्ये-सुयाले ।३८। दोर्वेवी ।३९। बा सख्यायाम् ।४०। दसे वा ।४१। छस्य सो ।४२। तेरे ।४३। तेश्च श्चोश्च उरोर्बहुव्रीहौ ।४४। असीतौ तेयो वा ।४५। एकोनस्याउण ।४६। एयं पडेरेक्के ।४७। चुलचतुरावसीतौ चतो ।४८। चो सख्याया वा ।४९। सीत्तालादौ सत्तस्य ।५०। अट्ठस्याडत्तालतालीसयो ।५१। दकस्य द ।५२। पलेर्हत्थे ।५३। वे परेरोच्च ।५४। वच्चादावहिपुरयोरेत् ।५५। भाषित-पुस्कस्य स्त्रीवाचकस्य पुवत् समानाधिकरणादौ ।५६। गड्डासणादीनि निपात्यन्ते ।५७। प्रथमानिर्दिष्ट समासे पूर्वम् ।५८। पत्तामोडादिषु परम् ।५९। बहुव्रीहौ सख्यातेतसप्तम्यन्तविशेषणानि ।६०। द्वित्वे दडादीना पूर्वपदस्थायास्तृतीया-

यागः ।६१। गच्छादीना समासवत् ।६२। अन्नादेर्वा ।६३। कोडेरेरात् ।६४। यक्तस्य यक्तयोर्विपर्ययो वा ।६५। इत्केऽप्यत्त ।६६। उत्कस्य तोत्थयो ।६७। एकात् त्थस्य त्त ।६८। सन्नस्य सोदे ।६९। अपि महादालयस्यालिय ।७०। अस्सिण्या इणस्यौसणि ।७१। वा पडिह्यार्यां आत ए ।७२। वाह सफले फस्य ।७३। इरणिमणोर्वह्यिा वह ।७४। इये सिलेसस्य सेस ।७५। इये नायस्य नेया ।७६। इतोऽत्पसिणस्य ।७७। इसिमस्य तोण्हिदाणिहहतरेपु ।७८। इयोण्हिमि वा ।७९। हुणेऽस् ।८०। एतस्य तवि ।८१। एश्च त्ये ।८२। तियस्य लोपे ।८३। ओदयादीना मये ।८४। मडस्य मइस्ले ।८५। कादावतियस्यैवश्चिरे ।८६। डीयतियतीयेपु दोर्वि ।८७। तेश्शणि घात् ।८८। अतिपच्छिमस्य पचच्छिमपचत्थिमौ ।८९। मिगसिरस्येत पूर्वस्यात् ।९०। ताह्लो वा ।९१। एस क्खे ।९२। दुवासोभ्या दसस्य ।९४।

इति चतुर्थ पाद । इति चतुर्थोऽध्याय ।

---

# धातुपाठः ।

## प्रथमगण ।

१ अञ्छ उपवेशने १९१
२ अछ आरपणे १९७
३-५ अद्, अड्ड्, अद् भ्रमणे १९७
६-७ अण्, शम् क्षमा ,,
८-९ अप्पण्, अप्पिण् अर्पणे ,,
१० अप्पाह् सन्देशकथने ,,
११ अय् गतौ ,,
१२-१३ अरह्, अरिह् योग्यतायाम् ,,
१४ अस् सत्तायाम् ,,
१५ अस् भक्षणक्षेपणयो २००
१६ इङ्ख् चेष्टायाम् २०१
१७-१९ इच्छ्, इस, ईह् इच्छायाम् ,,
२० इध् वृद्धौ ,,
२१ इरिय् गतौ ,,
२२ ईस् ऐश्वये ,,
२३ उच कौटिल्ये २०१
२४ उछ सेचने २०२
२५ उज् योजनेऽन्युद्दीपने च ,,
२६ उद् सकोचने ,,
२७ उज्झ् उत्सर्गे ,,
२८ ऊह् वितर्के ,,
२९ एय कम्पने ,,
३० कडार् खनने ,,

३१-३२ कडुय्, कण्डूय् गात्र विघर्षणे २०३
३३ कन् छेदने २०२
३४ कन्द् आक्रन्दने ,,
३५ कप् कम्पने ,,
३६ कञ्जल मुण्डने ,,
३७ कद्द् व्यथाया वाचि आकर्षणे च ,,
३८ कढ् निष्पाके ,,
३९ कण् शब्दे ,,
४० कन् भेदने ,,
४१ कत्त् छेदनतन्तुमन्नानयो ,,
४२ कन्थ् श्लाघाया व्यथाया वानि च ,,
४३ कस् प्राप्तौ तनूकरणे आकर्षणे च ,,
४४ करिस् आकर्षणे तनूकरणे च ,,
४५ काय् बन्धने २०३
४६ कास् कुत्सिते शब्द प्रकाशनायाञ्च ,,
४७ किड्ड् क्रीडायाम् ,,
४८ किलिद् आर्द्रीभावे ,,

## द्वितीयगणः ।

## तृतीयगण ।

७४ तञ्ज् भर्त्सने २५८
७५ तर् तरणे सामर्थ्ये च ,,
७६ तल् भर्जने ,,
७७ तव् सन्तापे ,,
७८ तीर् कर्मसमाप्तौ ,,
७९-८० तुर्, तूर् त्वरायाम् २५९
८१-८२ तुल्, तूल् उन्माने ,,
८३ स्थर् आच्छादने ,,
८४ तिम् आर्द्रीभावे ,,
८५ थग् आच्छादने ,,
८६ दल् दाने ,,
८७ दीव् दीप्तौ ,,
८८ दुक्ख् दु खने ,,
८९ दुम् खेदे ,,
९० द्रव् प्राप्तौ पीडने च ,,
९१ दह् दहने ,,
९२ ध्वस् अवस्रसने नाशने च ,,
९३-९४ धर्, धार् धारणे २६०
९५ धाड् भ्रमणे नि सरणे नि सारणे प्रेरणाया नाशने च ,,
९६ धाव् शीघ्रगतौ ,,
९७ धोर् शुद्धौ ,,
९८ नट्ट् नर्तने ,,
९९-१०० नद्ध्, नह् बन्धने ,,
१०१ ञर् ज्ञापने ,,
१०२ पाल् पालने ,,
१०३ पास् दर्शने ,,
१०४-१०५ पिल्ल्, पेल्ल् प्रेरणे ,,
१०६ पिह् इच्छायाम् २६०
१०७-१०८ पीड, पील् पीडायाम् ,,
१०९ पेंखोल् आन्दोलने ,,
११० प्फोड् भेदने ,,
१११ फट्ट् किञ्चिचलने ,,
११२ फुर् सञ्चलने ,,
११३-११४ बुह्, बूह् शब्दे ,,
११५ भज् भञ्जने ,,
११६ भस् अध पतने ,,
११७ भर् भरणे ,,
११८ भास् भाषणे ,,
११९ मोग् प्रेक्षणे २६१
१२० मञ्ज् गर्वे ,,
१२१ मन्न् अवबोधने ,,
१२२ माण् पूजायाम् ,,
१२३ मुच् मोचने ,,
१२४ मुत्त् प्रस्रवणे २६२
१२५-१२६ म्हह्, म्हुह् स्मृतौ ,,
१२७ म्हुस् विस्मरणे स्पर्शे स्तेये च ,,
१२८ रच् रचनायाम् ,,
१२९ रस् आस्वादनाक्रन्दनयो ,,
१३०-१३३ रुभ्, रोभ्, रुह्, रोह् प्रादुर्भावे ,,
१३४ रुल् आलोठने ,,
१३५ रूव् घटनायाम् ,,
१३६ लव् लम्बतायाम् ,,

ॐ

# जैनसिद्धान्तकौमुदीसूत्राणामकाराद्यनुक्रमः ।

# शुद्धिपत्रकम्

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२ | १६ | अकारे | ऋकार |
| १२ | १६ | ऋकार | अकार |
| ३६ | २२ | मवर्णं | पूर्वसवर्ण |
| ७० | २१ | वीसा+अ | वीसा+उ |
| ७० | २१ | वमादेशे क्रियादाकारलोप | नपुंसकत्वेन ह्रस्वत्वे उकारस्य माऽऽदेशे |
| ७१ | १७ | कद् | ० |
| १०७ | ६ | क्रुद् तत्त | क्रुन्तन |
| १०२ | १२ | तुलो | अतुलो |
| १३४ | ३ | इकारादेश | हकारादेश |
| १३४ | ११ | इकारादशे | हकारादेशे |
| १४६ | १० | कपरे इकार | इयप्रत्यये |
| १५० | १४ | मयाइय | मज्झेय |
| १५१ | १४ | च्छं | तुच्छं |
| १५२ | २५ | कइ | कर |

